क्ष्माभृद्विभ्रमसंगताम्बुदककुत्संदर्शनोद्वेजितै-
गोपैर्न्यस्तभरेण येन हरिणा संपिण्डितस्तं भजे ॥ ४२ ॥

दैत्या येन निपातिता व्रजभुवि त्वद्भागिनेयो ह्यसौ[1]
या पाषाणतले त्वयैव निहता सा नन्दगोपात्मजा ।
व्यत्यासो वसुदेवकल्पित[2] इति श्रुत्वा मुनेर्नारदाद्
यद्ध्वंसाय शशास केशिदितिजं कंसस्तमेवाश्रये ॥ ४३ ॥

पादाघातविनिर्गतक्षितिरजोमेघायमानाम्बरं
हेषाध्वानविसंज्ञितव्रजजनं दैत्यं तुरङ्गाकृतिम् ।
यः स्वान्वेषणतत्परं गिरिसमं दृष्ट्वा हरिः केशिनं
दष्टस्तेन मुहुस्तदीयवदनं चिच्छेद तं चिन्तये ॥ ४४ ॥

क्रीडद्भिर्मेषगोपैः कतिभिरपि परैर्मेषचोरैः समेतं
तत्पालैश्चोरगोपं दितिभवमखिलान् मेषगोपान् क्रमेण ।
नीत्वा निक्षिप्य दर्यां मुखमपि दृषदाच्छाद्य तस्याः प्रगुर्व्या
हत्वा यः संजिहीर्षुं निहतमुखशिलोऽमोचयत् तान् स नोऽव्यात् ॥४५॥

कंसेन प्रहितः श्वफल्कतनयो गच्छन् रथेन स्वयं
प्रेमार्द्रस्वदृशा हरिः किमधुना मामीक्षयेत् संस्पृशेत् ।
हस्ताब्जेन हरेः कदा पदयुगं पश्यन् वहन् पूजयन्
स्तोष्यामीति विचिन्तयन् पथि हरिं प्राप्तोऽयमव्यात् स नः ॥ ४६ ॥

दोग्धा दोहनदामसंवृततनुः सम्यक् प्रसन्नो हरिः
कंसेन प्रहिताय भक्तिनिधयेऽक्रूराय बृन्दावने ।

[1] हि सो—MS.

[2] कर्तृक—variant in the MS.

दत्त्वातिथ्यमशेषयादवकथाः श्रुत्वा सरामो रथं
योऽक्रूरेण सहाधिरुह्य मथुरां क्षिप्रं ययौ तं भजे ॥ ४७ ॥

कंसप्रेषितगान्दिनीसुतवचोजातप्रयाणोन्मुखं
श्रुत्वा शौरिमशेषगोपवनिता नन्दादिभिः साग्रजम् ।
यत्सौन्दर्यमनोज्ञवाक्प्रियतमव्यापारवीक्षास्मित-
क्रीडादैत्यवधादिभिर्हृतहृदो मोहं गतास्तं भजे ॥ ४८ ॥

अक्रूरः सबलं मुकुन्दमनघः संस्थाप्य तस्मिन् रथे
मध्येमार्गमथावरुह्य स रथात् स्नातुं प्रवृत्तो जले ।
दृष्ट्वा शेषगतं तमेव सलिलादुत्तीर्य दृष्ट्वा रथे
भूयोऽप्याशु जले निमज्ज्य भुजगे यं दृष्टवांस्तं भजे ॥ ४९ ॥

श्रुत्वा चित्रं चरित्रं सुरनरपशुभिर्मोहितैश्चिन्तितं त-
च्छौरेः सौलभ्यपूर्णं व्रजभुवि परमं भाति यस्मिन् परत्वम् ।
तं द्रक्ष्यामः कदा नः प्रभुमिति मथुरापत्तनस्थाश्च सर्वे
यत्सेवोत्का अशृण्वन् सरथमुपगतं साग्रजं संश्रये तम् ॥ ५० ॥

यं प्राप्तं गोपुरस्था ददृशुरथ परे हर्म्यवातायनस्थाः
श्रुत्वा केचित् स्वगेहाद् बहुजननिबिडां प्राप्य रथ्यामपश्यन् ।
सेवाशातुन्दिलाङ्गा बहुजनपिहितं द्रष्टुमन्ये न शेकु-
स्त्यक्तश्रीपक्षिराजं विधिशिवविनुतं संश्रये तं पदातिम् ॥ ५१ ॥

लक्ष्मीः पद्मसमुद्भवा मृदुशया यत्पादपुष्पार्चने-
ऽप्युद्विग्ना मृदुपादपद्मयुगलग्लानिप्रभीत्याभवत् ।
ताभ्यामस्य गतिः कथं क्षितितले पद्भ्यां बतेति ध्रुवं
सास्रा यद्गमनं न शेकुरमरा द्रष्टुं तमद्याश्रये ॥ ५२ ॥

त्यागार्हं न हि मे परत्वमिति तत् प्रच्छाद्य पीताम्बरः
सौलभ्याद् रजकं कुमर्त्य इव यो वासो ययाचे स्वयम् ।
वेदान्तैरधुनाप्यमेयमहिमाकूपारविप्रुट्कणः
सोऽव्यान्नः स्वनिकृत्तशीर्षरजकश्लाघ्याम्बरालंकृतः ॥ ५३ ॥

श्रीवैकुण्ठगतो विसृज्य भगवाञ्छ्रीभूमिनीलादिकान्
मद्गेहान्तरमागतः सभुजगो मर्त्याकृतिः स्रक्कृते ।
धन्यः कोऽस्ति मदन्य एहि भगवन् सम्यक् करिष्येऽर्चना-
मित्युक्त्वार्चयदाशु माल्यकृदपि प्रेम्णा यमव्यात् स नः ॥ ५४ ॥

कुब्जामप्यतिघोरवक्त्रविकृतामात्मार्हगन्धप्रदा-
माक्रम्य प्रपदे पदा चुबुकमप्युत्कृष्य हस्ताग्रतः ।
सम्यक् शीघ्रमृजूकृतां शुभतनुं स्वापेक्षिणीं योऽवदत्
पश्चात् त्वां मुदितां करिष्य इति तं स्वात्मैकतृप्तं श्रये ॥ ५५ ॥

नानोपायनवीटिकासुमफलैः संपूजितः साग्रजः
पृच्छन् पौरजनान् धनुर्वरगृहं तत्र प्रविश्य स्वयम् ।
भङ्क्त्वा कंसधनुस्तदीयशकलेनाहत्य तद्रक्षिणः
सायं यः पुटभेदनात् स्वशकटं प्रायात् तमद्याश्रये ॥ ५६ ॥

ज्योतिर्द्वित्वसुवर्णवृक्षविशिरश्छायादिसंदर्शनात्
तैलाभ्यङ्गविवस्त्रदक्षिणगतिस्वप्नाच्च कंसो भयात् ।
मल्लायोधनसंभ्रमेक्षणमिषेणारूढमञ्चो जनै-
र्मञ्चस्थैः सह यं निहन्तुमकरोद् यत्नं श्रये तं हरिम् ॥ ५७ ॥

अम्बष्ठेरितमार्गरोधिकरिणा सम्यग् गृहीतश्च्युतः
तत्पादान्तरगो बहिर्गततनुः पुच्छे गृहीत्वा द्विपम् ।

आकर्षन् भ्रमयन् भ्रमन्निपतितं चोत्कृष्टतद्दन्ततो
हत्वा साग्रज आगतः प्रियजनैर्यो नन्दितस्तं श्रये ॥ ५८ ॥

[1]कंसप्रेषितकूटतोशलमुखैर्मल्लैः समेतो हरिं
वक्षोजानुमुखे प्रहृत्य हरिणा तत्रैव तेनाहतः ।
चाणूरः प्रहरन् पतन् विनिहतो येनोत्पतन् मुष्टिना
रामेणातिबलेन मुष्टिक इव प्राणान् जहौ तं भजे ॥ ५९ ॥

मल्लध्वंसजिघांसितेन हरिणा व्याप्लुत्य मञ्चे ततः
कंसं भूमितले निपात्य तरसा तस्मिन् निपत्य स्वयम् ।
मूलं दैत्यतरोः स येन निहतस्तं चिन्तयेऽहर्निशं
हृष्टैर्नन्दमुखैस्तु तं मुनिगणैर्ब्रह्मादिभिः पूजितम् ॥ ६० ॥

कंसध्वंसेन दत्त्वा मुदमपरिमितां वासुदेवः स्वपित्रो-
र्बाल्यानन्दाप्रदानाज्जनितमघमपि क्षामयित्वा सरामः ।
राजानं चोग्रसेनं विहतिविरहितं स्थापयित्वा प्रजानां
स्वस्मिन्नीशत्वचिन्तामनुभवजनितां योऽहरत् तं भजामि ॥ ६१ ॥

नानादेशनिवासकर्शितसुहृत्स्वज्ञातिबन्धुप्रियान्
कंसोपद्रवदुःखितान् पुरवरे संस्थाप्य तुष्टान् धनैः ।
नन्दं गोपजनैः सह प्रियवचोभूषाम्बराद्यादृतं
प्रस्थाप्य व्रजमग्रजेन सह यस्तुष्टोऽभवत् तं भजे ॥ ६२ ॥

संप्राप्य द्विजसंस्कृतिं शुभगुणाद् गर्गात् सरामो हरि-
र्वेदाधीतिकृते गुरुं शुभगुणं वृत्वा च सांदीपनिम्[2] ।

1 °कोशल° for °तोशल° in MS.  2 सान्दीपिनिम्—MS.

लब्ध्वा षष्टिकला गुरोरथ चतुर्भिश्चाश्च तावद्दिनै-
दातुं तत्सुतमैच्छदम्बुधिमृतं यो दक्षिणां तं भजे ॥ ६३ ॥

पारावारे निमग्नो हृतगुरुतनयं दैत्यमन्तर्विचिन्वन्
हत्वादृष्ट्वा सुतं तत्तनुगतममलं पाञ्चजन्यं गृहीत्वा ।
यात्वा लोकं यमस्य स्वयमतिमहितस्तेन संपूज्य दत्तं
संगृह्यादात् सुतं तं गुरव उरुदयो यस्तमीशं नमामि ॥ ६४ ॥

यत्संश्लेषसुखप्रदाः सुरुचिरा रात्रीः स्मरन्त्योऽनिशं
यत्पादाम्बुजसङ्गिगोतरुलताद्यालोकनाद् दुःखिताः ।
यन्नेत्राद्यखिलाद्भुताङ्गधिषणाव्यत्यस्तकार्या व्रजे
यत्संदेशहरं विलोक्य सुदृशस्तोषं गतास्तं भजे ॥ ६५ ॥

नन्दादीन् कृष्णचिन्ताहृतनिखिलनिजव्यापृतीन् प्राप्तदुःखान्
नानावाक्यैर्यदीयैर्गुणचरितमुखैः सान्त्वयन् त्यक्तदुःखान् ।
सम्यक् कृत्वा च नीत्वा व्रजभुवि सुमुखः पञ्चषांस्तत्र मासान्
प्राप्तो यं कृष्णदासः कृतहरिवचनो ह्युद्धवस्तं प्रपद्ये ॥ ६६ ॥

संपूज्य स्वगृहागतं हरिमहो कुब्जा यमर्घ्यासन-
स्रक्ताम्बूलमहार्हचन्दनमुखैराश्लिष्य शय्यागतम् ।
रेमे येन सुखप्रवाहविवशा संत्यक्तलक्ष्मीधरा-
नीलाभोगचयेन तं मुनिगणैः संदृश्यमानं भजे ॥ ६७ ॥

लीलामर्त्यतनुर्निविश्य सदनेऽक्रूरस्य तेन स्तुतो
मद्भाग्यातिशयाज्जगज्जनिलयस्थित्यादिलीलो हरिः ।
प्राप्तोऽत्रेति सुपूजितः प्रियतमं तं प्राहिणोद् योऽञ्जसा
कौन्तेयादिविमर्शनार्थमधुना गच्छेति तस्मै नमः ॥ ६८ ॥

गत्वा हस्तिनपत्तनं सतनयां कुन्तीं मुहुः सान्त्वयन्
पृच्छन्तीं बहुशः सहोदरमुखान् भ्रात्रेयमुख्यान् प्रियान् ।
पुत्राणामतिदुःसहान् परिभवानुक्त्वा रुदन्तीं मुहु-
र्नीत्वानेकदिनानि यं शुभगुणोऽक्रूरो ययौ सोऽवतात् ॥ ६९ ॥

कंसध्वंसविरूपयोः स्वसुतयोर्वाक्याच्छ्वसन् मागधः
संरुन्धन् मधुरामनीकनिवहैर्नानाविधै राजभिः ।
वैकुण्ठागतहेतिना बलयुजा सम्यग् गृहीत्वा मृधे[1]
मुक्तो येन ययौ हताखिलधनः संलज्जितस्तं भजे ॥ ७० ॥

यात्वा कृष्णपुरीं पुनर्विनिहतो बाणं गतो मागधो
बाणप्रेषितकुञ्जराश्वरथयुक् सेनागणैः संवृतः ।
रुद्ध्वा पूर्ववदाशु यादवपुरीं यस्माद् गृहीत्वा शिखां
रामेणाशु जिघांसितो हतबलो मुक्तो ययौ तं भजे ॥ ७१ ॥

गोमन्तं द्रष्टुकामः पथि मुनिममलं जामदग्निं सरामो
दृष्ट्वा पृष्ट्वा च हत्वा गिरितटनगरे वासुदेवं सृगालम् ।
आरुह्याद्रिं च दृष्ट्वा फलसलिलसुमैर्वासयोग्यं निवृत्तः
प्राप्तं प्राप्तं जघानाखिलबलसहितं मागधं यः स नोऽव्यात् ॥ ७२ ॥

संप्राप्ते यवने सुरर्षिवचनाद् रोद्धुं पुरीं यादवीं
हर्म्यैर्हेममयैः सुरत्नभवनैः स्वर्गाधिकां द्वारकाम् ।
त्वष्ट्रा वज्रमहोनिवारितनिशाबुद्धिं कृतामम्बुधौ
दृष्ट्वावासयदात्मयोगविभवाद् यो यादवांस्तं भजे ॥ ७३ ॥

[1] पुनः—variant in the MS.

तस्यां यत्प्रतिपत्तिभक्तिभयतो देवाश्च सर्वेऽवसन्
दिक्पाला निधयो विधिः सुरतरू रुद्राः सुधर्मादयः ।
संदृष्टो यवनेन निर्जनपुराद् भूषावृतो निर्गतो
हन्तुं यत्नवता पलायनपरो योऽनुद्रुतस्तं भजे ॥ ७४ ॥

रक्षोविद्रुतदेवरक्षणभवच्छ्रान्तिप्रशान्त्यै वरं
लब्ध्वा बोधकनाशमात्मनयनात् संजातनिद्रं चिरात् ।
ऐक्ष्वाकं मुचुकुन्दमेत्य भगवान् दर्यां च तेनागतं
पादाघातविबोधितेन यवनं योऽनाशयत् तं भजे ॥ ७५ ॥

कस्त्वं कुत्र च जन्म ते वद मम प्रेम्णेति पृष्टो हसन्
भूभारोद्धरणाय मे यदुकुले त्राणाय साधोर्जनिः ।
त्वं मां यास्यसि भाविजन्मनि वरो भूत्वा द्विजः सम्यगि-
त्येवं यो मुचुकुन्दमादिपुरुषोऽवादीत् स्तुतस्तं भजे ॥ ७६ ॥

हृत्वा तस्य धनं हते तु यवने गच्छन् पुरीं साग्रज-
स्तत्कालागतमागधेन बलिना युध्यन् द्रवन् निर्जितः ।
तेनानुद्रुत आश्रितोऽद्रिशिखरं तस्मिंश्च दग्धे ततो
भूमिं प्राप्य सुशीघ्रगः समगमद् यो द्वारकां तं भजे ॥ ७७ ॥

गत्वा कन्यकया विधिं वरकृते श्रुत्वा सुगीतिं ततो-
ऽतीतान् पद्मजवाक्यतोऽतिमहतः कालांश्च रामं वरम् ।
आनर्ताधिपरैवतेन तनयां दत्तां प्रियां रेवतीं
सीराकृष्टतनुं शुभामुदवहद् यस्याग्रजस्तं भजे ॥ ७८ ॥

लक्ष्मीशं लोकनाथं सुतनुमतनुभिः कोटिसंख्यैरतुल्यं
भर्तारं त्वां भजेयं न यदि मम तनुत्याग एव त्वयाहम् ।

हर्तव्या संप्रमथ्याखिलनृपतिगणानम्बिकार्थं व्रजन्ती-
त्येवं रुक्मिण्युदन्तं रहसि सुलिखितं योऽश्रृणोत तं प्रपद्ये ॥ ७९ ॥

रुक्मिप्रीतिकृते विदर्भनृपतौ चैद्याय दातुं शुभां
कन्यामिच्छति सत्कृते नृपगणे चैद्ये वरेऽलंकृते ।
नानामङ्गलवाद्यपूर्णनगरे गेहे तथालंकृते
यं प्राप्तं ह्यवगम्य मोदमगमद् भैष्मी द्विजात् तं भजे ॥ ८० ॥

संप्राप्तो बहुसेनया सह हरी रामादिभिः कुण्डिनं
भीष्मेणापि सुसत्कृतो नृपतिनोद्याने वसन् सानुगः ।
भैष्मीं पूजितपार्वतीन्द्रमहिषीं यान्तीं गृहं रक्षिता-
मत्युग्रैरपहृत्य योऽनयदरीञ्जित्वा पुरीं सोऽवतात् ॥ ८१ ॥

भूपान् कृष्णहतां विलोक्य कुपितान् भैष्मीं निरुध्याहतान्
कृष्णाच्छिन्नपदोरुबाहुशिरसो ज्ञात्वापि रुक्मी व्रजन् ।
युध्यन् येन हताश्वसारथिधनुर्बद्धो रथे शार्ङ्गिणा
मुक्तो मुण्डितमस्तकः प्रतिययौ भैष्मीयुतं तं भजे ॥ ८२ ॥

नानारत्नमहश्छटाहृतनिशाचिह्नां पुरीं द्वारकां
रम्भापूगसुतोरणध्वजवतीं रम्यां प्रविष्टो हरिः ।
रुक्मिण्या सहितो मुमोद सुकृतोद्वाहोत्सवो मन्दिरे
नानोपायनपाणिभूपतिगणैर्यः पूजितस्तं भजे ॥ ८३ ॥

सूर्यप्राप्तशमन्तकाख्यसुमणेः सत्राजितो भ्रातरं
कण्ठोद्भासिमणिं निहत्य विपिनेऽगृह्णान्मणिं केसरी ।
हत्वा जाम्बवता तमात्तमणिना येनाश्रिता स्वा गुहा
तं निर्जित्य मृधे मणिं च तनयां तस्याप यस्तं भजे ॥ ८४ ॥

आरोप्य भ्रातृहत्यां मणिहरणकृते वासुदेवेऽथ तस्मा-
च्छ्रुत्वा तत्पूर्ववृत्तं तमपि मणिवरं लज्जितः संप्रगृह्य ।
दत्तां सत्राजिता यः स्वकलुषहतये सत्यभामां शुभाङ्गीं
रम्यां प्रीत्योपयेमेऽमरगणविनुतं तं श्रये वासुदेवम् ॥ ८५ ॥

निद्रालुं श्वशुरं रुषा शतधनुर्हत्वा मणिं योऽहरत्
तं हत्वा शतयोजनाश्वगमपि ह्यन्विष्य रत्नं हरिः ।
अक्रूरस्थमणिं प्रकाश्य जगतः स्वस्यापकीर्तिं ततः
सत्यारामशुचं क्रुधं च महतीं योऽवारयत् तं भजे ॥ ८६ ॥

कौन्तेयान् प्राप्य नीत्वा कृतसकलकथो वृष्टिमासान् कदाचिद्
गत्वा पार्थेन साकं वनमथ यमुनां कन्यकां तत्र दृष्ट्वा ।
विष्णोर्नान्यस्य भार्याहमिति रविसुतां संवदन्तीं रथे यः
कालिन्दीं स्थाप्य नीत्वा स्वपुरमुदवहत् तं भजे वासुदेवम् ॥ ८७ ॥

कन्यां राजाधिदेव्याः स्वसुरपि च पितुः कृष्णकामां निषिद्धां
भ्रातृभ्यां मित्रविन्दां श्रुतसकलकथः प्राप्य विन्दानुविन्दौ ।
आवन्त्यौ तौ प्रमथ्यानयदखिलतनुर्द्वारकां सेनया यः
कृष्णः काले शुभे तामुदवहदपि तं वासुदेवं प्रपद्ये ॥ ८८ ॥

बद्ध्वा सप्त वृषान् हताखिलनृपान् यः सप्तवर्मा हरिः
सत्यां कोसलभूभृता बहुधनैर्दन्त्यश्वमुख्यैः समम् ।
दत्तां नग्नजिता नयन् निजपुरीं नीलां स्वसैन्यैर्वृतः
प्राप्ते पुण्यदिने प्रियामुदवहत् तं चिन्तये श्रीसखम् ॥ ८९ ॥

भद्रां यः श्रुतकीर्तिजामुदवहत् पैतृष्वसेयीं तत-
श्चापारोपणशक्तिलेशविधुरैर्भूपैरनेकैः स्तुतः

शीघ्रारोपितचापताडितझषो वीर्यार्जितां लक्ष्मणां
यो मद्राधिपजां प्रियामुदवहन्नीत्वा पुरीं तं भजे ॥ ९० ॥

कृष्णः पत्न्या समेतोऽमरपतिवचनाद् वैनतेयाधिरूढो
गत्वा प्राग्ज्योतिषाख्यं नगरमथ मुरं सानुगं तत्र हत्वा ।
युध्यन्तं युद्धशौण्डं कृतबहुनिधनो भौममप्याशु हत्वा
भूमेः पौत्राय योऽदादभयमतिमुदा भूस्तुतस्तं प्रपद्ये ॥ ९१ ॥

रत्नाद्रिं प्राहिणोद् योऽमरगणपतये वासवं वारुणं च
च्छत्रं राज्ञे जलानामथ नरकहृतं षोडशस्त्रीसहस्रम् ।
स्वापेक्षं दिव्यरत्नै रथतुरगधनैः कुञ्जराद्यैः समेतं
श्वेतैर्दिव्यैर्गजेन्द्रैरनयदखिलदृक् स्वां पुरीं तं नमामि ॥ ९२ ॥

गत्वा ताक्ष्याधिरूढोऽमरपतिभवनं सत्यया भौमगेहाद्
वित्तैं रत्नैर्मघोनामरपुरमहितो मातरं तत्र नत्वा ।
मात्रे दित्यै स्वपत्न्या क्षितितनयहृतं कुण्डलं दापयित्वा
पत्नीप्रीत्यै विवेशामरपतिदयितं नन्दनं यो भजे तम् ॥ ९३ ॥

हर्तव्यः पारिजातः सुरपतिमहिषीगर्वहेतुः सुरम्यो
देव्यैवं प्रेरितो योऽमरपतिदयितं पारिजातं च हृत्वा ।
तत्कोपायातरुद्रान्तकमुखविबुधान् देवराजं च जित्वा
सत्याहूतेन तेन स्तुतनिजमहिमा स्वां पुरीं प्राप सोऽव्यात् ॥ ९४ ॥

यत्पुत्रः शूलिदत्तो ह्यगतदशदिनः शम्बरेण प्रगृह्य
क्षिप्तोऽम्भोधौ निगीर्णो झषजठरगतो धीवरैः संगृहीतात् ।
मीनात् तस्माद्धताङ्गादवनिमधिगतः शम्बरस्यैव गेहे
हत्वा तं शम्बरारिं निजपुरमगमद् भार्यया तं प्रपद्ये ॥ ९५ ॥

गोपस्त्यक्तनृपासनोऽम्बुधिगतो दुर्वृत्तकर्मा कथं
पूज्यः स्यान्महतो विहाय सदसि ज्ञात्रेति चैद्यो वदन् ।
चक्रच्छिन्नशिराः क्षितौ विनिपतन् देहोद्गतज्वालया
सर्वेषां मिषतां यमाप विगते शापे तमेवाश्रये ॥ १०७ ॥

राजानं धर्मपुत्रं मुनिनृपतिगणैः स्तूयमानं सभायां
द्रष्टुं गच्छञ्जलेऽपि स्थलमिति निपतन् दृष्ट उच्चैर्हसद्भिः ।
सद्यो गच्छन् निवृत्तः स्वपुरमपि जवाद् धार्तराष्ट्रोऽतिकोपाद्
येनैवोपेक्षितोऽभूदवनिभरभृता सोऽवताद् वासुदेवः ॥ १०८ ॥

साल्वः कृष्णहताग्रजो निजतपस्तुष्टाच्छिवात् कामगां
लब्ध्वा सौभपुरीं तया सह गतो भङ्क्त्वा पुरीं द्वारकाम् ।
प्रद्युम्नप्रमुखैर्जितो बहुदिनं युध्यन् गतः शौरिणा
येनानुद्रुत आगतेन निहतः साकं पुरा तं श्रये ॥ १०९ ॥

कृष्णः प्राप्तः सुधर्मां बहुनृपतिगणैः सेवितो ब्राह्मणोक्त्या
पाञ्चालीगात्रवस्त्रापहरणमुदिताद् धार्तराष्ट्रादरण्यम् ।
प्राप्तं सभ्रातृभार्यं जितहृतसकलं पार्थमक्षैर्विदित्वा
यो गत्वाश्वास्य तेनोदितसकलकथोऽगात् पुरीं स्वां श्रये तम् ॥ ११० ॥

दत्त्वा ब्राह्मणदत्तगामपि पुनर्गोभिर्नृगो ब्रह्मणे
स्वामिभ्यां कलहात् समेत्य गदितो दत्तापहर्तेत्यथ ।
तद्दोषात् कृकलासतामुपगतः श्वभ्रे चिरं संवसन्
स्पर्शाद् यस्य नृपो भवन् यमनघो नत्वा गतस्तं भजे ॥ १११ ॥

नन्दादीन् प्राप्य मासैस्त्रिभिरमितगुणां वर्णयन् कृष्णचर्यां
कुर्वन् संत्यक्तदुःखान् व्रजभुवि विहरन् वारुणीपानमत्तः ।

क्रीडार्थं गोपिकाभिः सह रवितनयां राम आहूय कोपा-
दप्राप्तामाचकर्षाग्रज उरुहलतो यस्य तं संश्रयेऽहम् ॥ ११२ ॥

साम्बो यस्य[1] सुतः सुयोधनसुतामाहृत्य युध्यन् नृपै
रुद्धो हस्तिनपत्तने हत इति श्रुत्वाथ यस्याग्रजः ।
यात्वा कौरवपूजितः पुनरधिक्षिप्तो हलात् तत्पुरं
जाह्नव्यां विनिपातयन् स्वसुतयुक् तैरादृतस्तं भजे ॥ ११३ ॥

गोपीभिर्विहरन् विभावसुभवाकच्छे मनोज्ञानिले
छायायां फलपुष्पपूर्णसुतरो रामो व्रजे वृक्षगम् ।
भ्रूक्षेपैर्गुददर्शनेन च शिलाक्षेपादिभिर्हुंकृतै-
र्युध्यन्तं द्विविदं क्षणेन हतवान् यस्याग्रजस्तं भजे ॥ ११४ ॥

दारिद्र्यात्यन्तखिद्यद्द्विजपरमहिलादुःखवाक्यप्रणुन्नं
प्राप्तं प्रेम्णा कुचेलं बहुमणिखचिते स्वासने संप्रपूज्य ।
तत्कन्थावेष्टितं यः पृथुकमतिमुदा मुष्टिमेयं प्रजग्धं
तद्गेहं वित्तमुक्तामणिनिधिमकरोत् तं भजे वासुदेवम् ॥ ११५ ॥

गत्वा मैथिलपत्तनं बहुजनैः सार्धं मुनीन्द्रैर्हरी
रूपाभ्यां श्रुतदेववेश्म बहुलाश्वस्यापि वेश्मैकदा ।
अन्योन्याविदितः प्रविश्य कृपया ताभ्यां स्तुतः पूजितो
भक्तौ तावनुगृह्य यः पुरमगात् स्वीयं तमेव श्रये ॥ ११६ ॥

यस्य स्वात्मशयं क्षिपामि शिरसि स्यात् तत्क्षणाद् भस्मसाद्[2]
देहि त्वं वरमीश्वरेति वदते दत्त्वा वरं शंकरः ।

[1] कृष्णः सुतः—variant in the MS.    [2] सो—MS.

तत्सिद्धिप्रमितिप्रसारितकरं स्प्रष्टुं शिरः स्वं वृकं
दृष्ट्वा प्रव्यथितः पलायनपरो येनावितस्तं भजे ॥ ११७ ॥

सत्रे [1]ब्रह्मसुतो भृगुर्मुनिगणैः पारम्यनिर्धारणे
संदिष्टो विधिमेत्य तं प्रकुपितं ज्ञात्वास्तवाच्छंकरम् ।
प्राप्तस्तेन जिघांसितः प्रतिभयानाश्लेषणान्माधवं
वैकुण्ठे प्रहरन् पदातिमहितो येनावितस्तं भजे ॥ ११८ ॥

भूभृत्पापहतात्मजाग्रजशिशुप्राणावनैकव्रती
कृत्वा बाणगृहं शिशोरसुमवन् नष्टे शिशौ फल्गुनः ।
गत्वा देवगृहांस्तदीयतनयालब्ध्याग्निवेशोद्यमी
वैकुण्ठस्थिततत्सुतान् प्रददता येनावितस्तं भजे ॥ ११९ ॥

संतीर्णाज्ञातवासान् हरिरखिलनुतो गोग्रहप्राप्तयुद्धान्
प्राप्तान्श्रुत्वाथ गत्वा कृतबहुवचनो हस्तिनं प्राप्य दूतः ।
भुक्त्वा भक्त्यान्नमिष्टं विदुरगृहगतो वीक्ष्य यो धार्तराष्ट्रान्
तेषां स्वद्रोहचिन्तामहरदथ निजाद् वैश्वरूप्याद् भजे तम् ॥ १२० ॥

भूत्वा फल्गुनसारथी रथगतः सेनाद्वयान्तर्गतो
बन्धुस्नेहनिवृत्तयुद्धविजयप्रोत्साहनव्याजतः ।
देहात्मस्वगतिं विमुक्तिपदवीं साङ्गां स्वभक्तिं ततो
ऽशक्तानामपि मुक्तिदं स्वचरणं योऽगायदव्यात् स नः ॥ १२१ ॥

दत्त्वा दिव्यदृशं हरिः करुणया यो विश्वरूपं मह-
न्नानामस्तकनेत्रबाहुचरणं बीभत्सवेऽदर्शयत् ।

[1] धर्मसुतो---variant in the MS.

कोट्यर्कोज्ज्वलमङ्गसंगतजगद् ब्रह्मादिभिः संनुतं
नानादंष्ट्रमुखाद्यमानजनताभीमं स देवोऽवतात् ॥ १२२ ॥

शान्तं शान्तनवं हरिं नवदिनैः कृत्वा शिखण्डात्मको
धृष्टद्युम्नतनुर्मृधे विनिहतं द्रोणं दिनैः पञ्चभिः ।
कर्णं चार्जुनतो हतं त्रिदिवसैः शल्यं च धर्मात्मजात्
सायं भीमहतं सुयोधनमगाद् यस्तोषमव्यात् स नः ॥ १२३ ॥

शप्तः स्त्रीवेषसाम्बोदरगतमुसलाकारलोहप्रचूर्ण-
प्रोत्पन्नैरेरकाग्रैः कुभरनिजकुलं नाशयित्वा मिथो यः ।
रामास्योद्वान्तशेषं जलपतिविनुतं तत्प्रविष्टं प्रपश्य-
न्निन्द्रेण प्रार्थितोऽभून्निजपदगतये तं प्रपद्ये मुरारिम् ॥ १२४ ॥

प्राप्ते हेतिगणे[1] विमुक्तिपदवीं भित्त्वा रवेर्मण्डलं
पुर्या मज्जनमम्बुधौ स्वगमनं स्वानां परिज्ञाप्य यः ।
लुब्धोत्सृष्टशराहताङ्घ्रिकमलः स्वः प्रापयन् तं [क्षणात्]
प्रायाद् धाम निजं हृतावनिभरं नारायणं तं भजे ॥ १२५ ॥

श्रीवासुदेवचरितानि मलापहानि
पुण्यानि मुक्तिफलदान्यतिमानुषाणि ।
यो वेत्ति चिन्तयति वक्ति शृणोति नित्यं
प्राप्नोति मुक्तिमचिरात् स मुकुन्ददृष्टः ॥ १२६ ॥

इति श्री(अशोक)रघुनाथाचार्येण विरचितं गोपालशतकं संपूर्णम्[2]

[1] मुखे—variant in the MS.

[2] The following is added in the MS: हरिः ओम् । श्रीनिवासरामानुज-महादेशिकाय नमः । श्रीमद्वेदान्तरामानुजमहादेशिकाय नमः ।

## ५६. गोविन्दराजप्रपत्तिः[1]

यश्शेषशैलनिकटे कमलापुरीश-
गोविन्दराजपदयोरकरोत् प्रपत्तिम् ।
तं वादिभीकरगुरोश्चरणं प्रपद्ये
पात्रं गुरुं वरवरं परमं गुरूणाम् ॥ १ ॥

श्रीमन् निदान जगतां निखिलाण्डजात-
निर्वाहशक्तिमुखदिव्यगुणैकतान ।
अत्यन्तभोग्यनतदोष[2] निरस्तदोष
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ २ ॥

रेखारथाङ्गसरसीरुहवज्रशङ्ख-
च्छत्राङ्कुशप्रभृतिमङ्गलचिह्नगर्भौ ।
संसारतापहरणे निपुणौ नतानां
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ३ ॥

पश्यत्सु सान्द्रभयकौतुकमर्भकेषु
प्रौढेषु सत्सु कृतकृत्यपरायणेषु ।
विध्वंसितोर्ध्वशकटावपि बालभावे
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ४ ॥

[1] Based on the single MS. No. 73438 (D. C. No. 1552). The author was the grandson of Vādibhayaṃkarācārya as is stated in the last verse; nothing more is known of him. The Stotra is on the God at Tirupati and is on the model of the well-known *Veṅkaṭeśvaraprapatti* on the God on the hill (Tirumalai).

[2] Cf. Piḷḷai Lokācārya's *Tattvatraya*, Īśvaraprakaraṇa.

आलम्ब्य [1]बाहुयुगलेन कुमारभावे
गाढं कराङ्गुलियुगं किल नन्दपत्न्याः ।
अभ्यस्यमानदृशचङ्क्रमणाभिरामौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ५ ॥

घोषाङ्गनाकरसरोरुहतालनाद-
संगीतसंपदनुरूपमनोज्ञनृत्तौ ।
माणिक्यनूपुरमरीचिकृताङ्गलेपौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ६ ॥

कुट्टाकतामुपगतौ सरसः प्रसह्य
मध्येसरित्सलिलमुद्धतकालियस्य ।
तत्सुन्दरीनयननन्दनसंनिवेशौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ७ ॥

वासांसि देहि तव कृष्ण वशंवदाना-
मस्माकमाकुलधियामिति गोपकन्याः ।
उद्दिश्य यौ विदधुरञ्जलिमा प्रसादाद्
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ८ ॥

गोरक्षणे किल बभूव यदीयरेणु-
रक्रूरमस्तकमणेः सरणिं समेतः ।
तावद्भुतावनुपमावतिपावनौ ते
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ९ ॥

मल्लावहे मधुरया मधुराङ्गनानां
फुल्लारविन्ददलतल्लजलोचनानाम् ।

[1] भावि°—MS.

वाण्या प्रशंसितपराध्यर्गतिप्रकारौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १० ॥

कंसं निपात्य कनकासनतः पृथिव्या-
मुद्धृत्य सागसमनागसमुग्रसेनम् ।
राज्येऽभिषिच्य विनिवारितभूमिभारौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ११ ॥

दुर्योधने दुरभिमानिनि दुर्भगाणा-
मग्रेसरे भजति ते शिरसः प्रदेशम् ।
धन्येन यन्निकटतः स्थितमर्जुनेन
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १२ ॥

सारथ्यवेषसमलंकृतपाण्डुसूनो-
र्युद्धाङ्गणोज्ज्वलरथाञ्चलसंनिवेशौ ।
सान्द्रेन्द्रनीलपरिभावुकभव्यरूपौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १३ ॥

भक्त्या प्रसन्नहृदयेन धनंजयेन
यत्रार्चितानि कुसुमानि शिवोत्तमाङ्गे ।
साक्षात्कृतानि सहसाद्भुतवैभवौ तौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १४ ॥

अस्मद्गुरुप्रभृतिभिः कमलावसानै-
रादर्शितौ करुणया मम देशिकेन्द्रैः ।
सत्त्वोत्तरैः सकलजीवदयापरैस्तै-
र्गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १५ ॥

अस्मत्पितामहमशेषगुणाभिराम-
माचार्यरत्नमयि **वादिभयंकरार्यम्** ।
गोवर्धनाद्रिधृतिधारितगोप वीक्ष्य
गोविन्दराज मम दुर्लपितं क्षमस्व ॥ १६ ॥

[इति श्रीगोविन्दराजप्रपत्तिः संपूर्णा]

---

## ५७. घटिकाद्रिनाथशतकम्[1]

श्रीवेङ्कटार्यचरणौ शिरसि करोमि स्मिताब्जसुहृदौ तौ ।
पृथुतरमपि भवजलधिं पिबतितरां यत्परागपरमाणुः ॥

व्यत्यस्तचरणकमलां विनिहितभुजयुगलमित्रजानुयुगाम् ।
विलसितरथाङ्गशङ्खां व्यक्तिमुपासे विरुद्धजातिमतीम् ॥ १ ॥

श्रितघटिकाचलशृङ्गं शीतलकरुणातरङ्गितापाङ्गम् ।
मनसि ममोल्लसदङ्गं वस्तु महः किमपि वाससा पिङ्गम् ॥ २ ॥

कलितदनुतनयभङ्गं करकमलाभरणवारिजरथाङ्गम् ।
कृतघटिकाचलसङ्गं किमपि महो जयति केतनविहङ्गम् ॥ ३ ॥

सर्वरसगन्धभरितं संगतमेकमपि सकलशाखासु ।
अमृतफलमखिलपुंसामास्वाद्यं चित्रमस्ति घटिकाद्रौ ॥ ४ ॥

[1] Edited from the MS. No. 73979 (D. C. No. 1562). It is on the God Nṛsiṃha at Ghaṭikācala or Sholinghur in North Arcot District.

आरण्यकाप्तवाक्यैरवगम्यो ग्राम्यजनदृशामपदम् ।
स्फुरति घटिकाचलाग्रे पुरुषमृगः कोऽपि पुण्यकृदुपेयः ॥ ५ ॥

महति घटिकाद्रिविषये महता स्नेहेन निर्मलदशायाम् ।
देदीप्यते स्थिरोऽयं दिव्यैर्मुनिभिः प्रवर्तितो दीपः ॥ ६ ॥

मुष्णंस्तमो जनानां मूर्धनि घटिकाचलस्य संभूतः ।
आलोकतोऽखिलार्थानधिगमयति नित्यमच्युतो दीपः ॥ ७ ॥

रस्यं सकृदुपसेव्यं लभ्यमपथ्यसहमसहितममोघम् ।
त्वरितं हरति भवार्तिं शुद्धं घटिकाद्रिमौलिजं मूलम् ॥ ८ ॥

स्थिरशोकशल्यहरणं जगतां विच्छिन्नकुशलसंधानम् ।
संजीवनमपि घटिकाशैलजमूलं करोति सारूप्यम् ॥ ९ ॥

अतिबलभवाहिदष्टानभिलाषविषाग्निमूर्च्छनानष्टान् ।
घटिकाशिखरिनरेन्द्रो घटयत्यसुभिः कटाक्षमात्रेण ॥ १० ॥

चोरं स्वतश्च्युतं मां स्वामी घटिकाद्रिपो विचिन्वानः ।
दृष्ट्वा कुतोऽप्युपायाद् दृतमबध्नाद् दयागुणेन दृढम् ॥ ११ ॥

विमलकविसेव्यमाना विलसति संनिहितशङ्खचक्राब्जा ।
कापि घटिकाद्रिशिखरे करुणारसपूरनिर्भरा सरसी ॥ १२ ॥

निर्मुक्तभोगशुद्धान् नित्यमहीनान् वहन् निजासक्तान् ।
भाति घटिकाद्रिशिखरे भद्रश्रीः कोऽपि परिमलः शाखी ॥ १३ ॥

करुणामृतरसवर्षैर्घटिकाचलघटितकालमेघ निजैः ।
संसरणतरणितप्तं संजीवय विनतसस्यजालमिदम् ॥ १४ ॥

विमलतरभक्तिपूरे व्यपगतपङ्के विकस्वराम्बुरुहे।
मानससरसि मुनीनां रमते घटिकाद्रिराजहंस भवान् ॥ १५ ॥

स्तम्भो हि विघ्नकारी संदृष्टो जगति सर्वकार्येषु ।
दानवविदारणे ते तस्यैव हरे कथं नु साचिव्यम् ॥ १६ ॥

देवत्वमागमान्ते सिद्धं तिर्यक्त्वमपि नरत्वेन ।
सह दृष्टमद्य घटिकास्थावरसर्वात्मकस्य किमयुक्तम् ॥ १७ ॥

पञ्चास्य एव हि त्वं प्रथितो भगवन् कथं सहस्रास्यः ।
घटिकाद्रिपक्षपातिन् ख्यातोऽसि कथं नु विश्वसाक्षीति ॥ १८ ॥

बहुदेशमल्पदेशादपि सिंहत्वादधःस्थितं पुंस्त्वम् ।
मूर्तौ तवात्र नृहरे मुख्यः को वावमन्यतेऽन्येन ॥ १९ ॥

पुंसूक्तपूर्वकैस्तैः पुरुषत्वं मुख्यमेव ते विदितम् ।
कथमियममुख्यतास्मिन् घटते घटिकाद्रिमनुजमृगराज ॥ २० ॥

विदधति न भाग्यलक्ष्मीविरहविलासात्तविकृतयो मनुजाः ।
श्रवणामृतेषु घटिकाशैलवनप्रिय वचःसु ते श्रद्धाम् ॥ २१ ॥

कार्यं हिरण्यहरणं घटिकाचललुब्ध कंसमुख्यहरणं वा ।
अहरस्त्वमाश्रितानां हन्त किमखिलान्यनर्थजातानि ॥ २२ ॥

दोषा ममान्तरहिताः स्वामिन् घटिकेन्द्र तावकाश्च गुणाः ।
तदपि गुणैस्त्वदुपघ्नैः स्थाने हीनाश्रिता जिता दोषाः ॥ २३ ॥

पादाम्बुजेन लसता प्रसृमरमधुना परार्ध्यगन्धेन।
श्रयतां शमयसि घटिकाशैलप विपरीतवासनाः सकलाः ॥ २४ ॥

प्रगुणा परं प्रसादं प्राप्ता निपुणेन पदविदा ग्रथिता ।
सुतरां त्वयैव घटिकानायक शोभेत सूक्तिहारलता ॥ २५ ॥

सरससुमनोऽभिरामा साधु च संस्कारसंभृतोल्लासा ।
समुपैति सूक्तिलतिका सद्भादमृतफल तव हि साफल्यम् ॥ २६ ॥

सत्पक्षपातसुभगं सन्मानसरसिकमम्बुजासक्तम् ।
भुवनाश्रयं विशुद्धं बुध्ये घटिकावनौकसं हंसम् ॥ २७ ॥

सुमनोरसकृतसङ्गं (स्व)स्मरणविशेषेण तोषितानङ्गम् ।
कमलालयान्तरङ्गं कलये घटिकाद्रिकल्पतरुभृङ्गम् ॥ २८ ॥

दुर्गतिदुःखितचित्तान् दुष्करयोगान् विमुच्य सुखसेव्याम् ।
प्राज्ञाः प्रयान्ति नित्यां निभृतिं घठिकाद्रिभूपमालम्ब्य ॥ २९ ॥

कलयन्ति नैव सन्तः कापुरुषद्वारि वारणाकदनम् ।
घटिकाशिखरिमुकुन्दं कमपि निधिं सुलभमनवधिं लब्ध्वा ॥ ३० ॥

मकरमयकूर्मरूपं वरशङ्खं पद्ममपि महापद्मम् ।
कुन्दमसितं मुकुन्दं को वा घटिकाद्रिनवनिधिं न भजेत् ॥ ३१ ॥

काञ्चनमये स्फुरन्तं कंचन घटिकामहीभृतः कटके ।
कृष्णमणिमर्घरहितं के वा न विदन्ति कृत्स्नतः श्लाघ्यम् ॥ ३२ ॥

संसरणसरणिपान्थास्तापत्रयतरणिकिरणसंतप्ताः ।
आश्वसिता घटिकाद्रौ हरिचन्दनमेत्य शीतलच्छायम् ॥ ३३ ॥

मुक्तं निरञ्जनबद्धं मूलं जगतां फलं च घटिकाद्रौ ।
आकलयताद्भुतं महदाकण्ठं मनुजमानने सिंहम् ॥ ३४ ॥

पश्यन्ति नयनहरिणाः स्पष्टं घटिकाद्रिलुब्धकं यावत् ।
परिसरचरैस्तु तावत् पातकपतगैः पलायितं क्वापि ॥ ३५ ॥

विमलमणिहेमकटकं विकसितवनमालमुल्लसन्मौलिम् ।
घटिकाद्रिसुहृदमीडे काञ्चनपीतांशुकावृतं प्रांशुम् ॥ ३६ ॥

सद्भिः परिगतममलैः संश्रितसर्वंसहं हिरण्यकृतम् ।
घटिकाद्रिपं सुमेरुं कलये सर्वोत्तरं सुरैः सेव्यम् ॥ ३७ ॥

सरसमविप्लुतवेलं संभृतमणिराजसरसिजाशङ्खम् ।
गम्भीरममितममलं गाहे घटिकाचलेशकलशाब्धिम् ॥ ३८ ॥

विगततमोग्रहमचलं वृद्धिक्षयरहितमनुदयास्तमयम् ।
विकसितमानसकमलं वीक्षे घटिकाद्रिविधुमहो विमलम् ॥ ३९ ॥

निरवधिकनित्यमहसा निर्मलमुक्तानुबन्धसुभगेन ।
घटिकाद्रिमकुटभाजा मणिना मम मनसि वारितं तिमिरम् ॥ ४० ॥

अविरलविसृमरसृणिना हरिमणिना सततमाहितौज्ज्वल्यः ।
घनकनककल्पितोऽयं कटको घटिकामहीभृतो भाति ॥ ४१ ॥

सुमनोभृतेन मधुना सुतरां मधुरेण शुद्धिगुणभाजा ।
मम घटिकाचलजनुषा मानसनामा समुत्सुको भृङ्गः ॥ ४२ ॥

अणुतरमपि स्वमन्यानर्पयतः सततमाप्तुकामेन ।
घटिकाचलप्रणयिना विपुलं विहितं हिरण्यदानमहो ॥ ४३ ॥

अननुगुणविषयवीक्षामनिदंप्रथमां सरस्वतीं मुक्त्वा ।
घटिकाचलप्रणयिना घटयति दृष्टिं घनानुरागमयीम् ॥ ४४ ॥

दृश्येन दैवयोगाद् दीव्यन्महसाञ्जनाद्यतीतेन ।
साधयति सिद्धिमखिलां सज्जो घटिकाद्रियोगिपुरुषेण ॥ ४५ ॥

प्रबलैर्ममेन्द्रियाश्वैः परितुष्टो विषमविषयकान्तारे ।
पदवीं मनोरथाग्र्यां प्राप्तो घटिकाद्रिपार्थसारथिना ॥ ४६ ॥

अतिवेलविलसितोर्मैरवगाहवतामधोगमनहेतोः ।
प्राप्तोऽस्मि भवपयोधेः पारं घटिकानियामकेनाहम् ॥ ४७ ॥

घटिका यदि गुणघटिता घटिकाचलचक्रिकल्पिता न स्युः ।
भवकूपतो जलानां भव्यः को वा समुद्धरणहेतुः ॥ ४८ ॥

कलयन्ति ये स्वयात्रां घटिकाचलवैद्यकल्पितेन पथा ।
भवरोगतोऽचिरात् ते मुक्ताः स्नानं चरन्ति विरजायाम् ॥ ४९ ॥

ददतो जगत्युदारान् स्वापेक्षितमर्थमर्थिनः प्राहुः ।
आददतः पुनरर्थानुक्ता घटिकाचलार्थिनोदाराः ॥ ५० ॥

दाता हि लौकिकोऽर्थान् स्वव्यतिरिक्तान् ददाति नात्मानम् ।
स्वोऽपि स्वसंश्रितेभ्यो दत्तो घटिकाद्रिनृहरिणा दात्रा ॥ ५१ ॥

हिंसितदानवकरिणे हृदयगुहाविहितबहुविहाराय ।
विक्रमवते सपर्यां विदधे घटिकाद्रिवीरसिंहाय ॥ ५२ ॥

श्रुतिपारगाय विद्यासूतिगृहाय स्वधर्मनिरताय ।
स्वस्वोचितं प्रदानं सुधियां घटिकाद्रिभूमिदेवाय ॥ ५३ ॥

महनीयवृत्तवर्णा महितान्वयवत्यलंकृता कृतिना ।
सूक्तिसुतनुः प्रदेया शुद्धा घटिकाद्रिसुरवराय शुभा ॥ ५४ ॥

गां यो ददाति सार्थां गलदमितप्रेमधारया सहिताम् ।
घटिकाचलप्रणयिने घटते किं तस्य काङ्क्षितं नालम् ॥ ५५ ॥

कलुषापि घटकवाक्यैः क्षालितवैमुख्यकल्मषा धिषणा ।
पृथुगुणभृते मदीया स्पृहयति घटिकाचलप्रियाय भृशम् ॥ ५६ ॥

अन्विच्छतान्यमथवा तूष्णीमाध्वं सुरर्षिपितृमुख्याः ।
तत्किंकरोऽर्पितोऽहं तज्ज्ञैर्घटिकाद्रिभूभुजे सचिवैः ॥ ५७ ॥

क्रुध्यन्त्यनर्थकं ये गोप्त्रे घटिकामहीभृतो हरये ।
मन्ये मन्दधियस्तान् मातङ्गानेव मदजुषः कलुषान् ॥ ५८ ॥

दुष्टान् निगृह्य तरसा शिष्टानखिलांश्चिरेण पालयते ।
स्वस्ति सुहृदे गुणानां भूत्यै घटिकाद्रिभूभुजे भूयात् ॥ ५९ ॥

मृदुलं भवाग्निपाकाद् व्याप्तं गुणतो विशुद्धमहमन्नम् ।
भोज्यं समर्पये स्वं भोक्त्रे घटिकाचलस्य सुस्नेहम् ॥ ६० ॥

नित्यश्रिये गुणानां निधये निष्ठ्यूतनिखिलदोषाय ।
प्रज्ञार्पिता मयैषा भर्त्रे घटिकाचलस्य भाग्यवशात् ॥ ६१ ॥

पात्रे समाश्रितानां शास्त्रे सत्पुरुषविद्विषां सततम् ।
दात्रे सकलफलानां नेत्रे जगतां नमो नृसिंहाय ॥ ६२ ॥

सुमनःसमूहभव्याच्छुकमुखसेव्यात् सुशीतलच्छायात् ।
घटिकाद्रितटविरूढात् कल्पतरोः कस्य काङ्क्षितं न फलम् ॥ ६३ ॥

अविरतहितप्रवृत्तेरापदि सहितादकृत्रिमस्नेहात् ।
मम घटिकाचलबन्धोर्मान्यादन्येन केन किं कार्यम् ॥ ६४ ॥

घनकरुणामृतपूरैर्घटिकाचलकृष्णमेघतो जनितैः ।
पापाटवी प्रदग्धा भजते चित्रं भवाम्बुधिः शोषम् ॥ ६५ ॥

गोभिः प्रकाशितार्थाद् गोप्तुर्घटिकाभिधानवाद्युदितात् ।
जागर्ति सततनिद्रं सवितुर्जगतां मनःसरोजं मे ॥ ६६ ॥

रुष्टेन येन रौद्रो रुग्णो धरणिं जगाम शरभोऽपि ।
स न दुरितदन्तिनोऽस्माद् घटिकाद्रिहरेः कथं न बिभ्यति मे ॥ ६७ ॥

अव्याहतप्रचारादवमतमन्त्रौषधात् सहस्रास्यात् ।
पातकमूषकनिवहात् पायात् घटिकाद्रिभोगिनः को वा ॥ ६८ ॥

कलितपुरुषार्थसार्थाद् घटिकाघटितात् सनातनाद् धर्मात् ।
किं वा प्रमाद्यतां स्यात् क्षेमं ह्यत्राप्यमुत्र वा पुंसाम् ॥ ६९ ॥

घनसमयनिर्व्यपेक्षाद् घटिकाचलभूमिभर्तुरुद्भूता ।
क्षालयति कलुषमलिनं काचन करुणातरङ्गिणी भुवनम् ॥ ७० ॥

संनिहितशङ्खपद्मात् सर्वसखात् सकलपुण्यजनसेव्यात् ।
घटिकाद्रिराजराजात् का वा न स्यात् समाश्रिता संपत् ॥ ७१ ॥

वृजिनविषानलमूर्च्छाविमुषितचित्तान् भवोरगग्रस्तान् ।
कुर्वीत लब्धसत्तान् को वा घटिकाद्रिगारुडिकतोऽन्यः ॥ ७२ ॥

नित्यान्निरस्तदोषान्नियतपदात् पुण्यकीर्तनश्रवणात् ।
विनतोचिताभिधानाद् ब्रह्मण एवाधिगम्यते सकलम् ॥ ७३ ॥

शुद्धिमुपजनयतोऽग्र्यां स्वालोकेनैव चक्षुषो जगताम् ।
घटिकाद्रिमित्रतोऽन्यं कलयेऽखिललोकबान्धवं नाहम् ॥ ७४ ॥

अमृतप्रवाहसहजैरालोकैरमलशीतलैः स्नपिताः ।
विविधान् भवदवदाहान् विजहति घटिकाद्रिविलसितस्य विधोः ॥ ७५ ॥

धर्मोत्तरं द्विपाद्रेः शङ्के घटिकाद्रिमत्र न विवादः ।
केनाङ्कचकारि नास्मिन् कृष्णमृगस्यास्य नियतसंवासः ॥ ७६ ॥

अमृतार्पणं श्रितानामभिदुररसनत्वमार्जवं गमने ।
कथमिव च गरुडसख्यं घटिकाचलकृष्णभोगिनो घटते ॥ ७७ ॥

आगःसु संश्रितानामनभिज्ञस्यात्मसाम्यदस्याहम् ।
नियमेन सेवकः स्यां नित्यं घटिकाद्रिभूमिपालस्य ॥ ७८ ॥

सत्त्वोत्तरस्य दानं सद्भ्यो घटिकाद्रिभूभृतो युक्तम् ।
सुतरां पापरतानां युज्येत कथं सुरद्विषां दानम् ॥ ७९ ॥

घटिकाद्रिकामसुरभेः काङ्क्षापदसकलफलदुहो जगताम् ।
मातुर्गवां मयि स्याद् वत्से बहुलं कथं न वात्सल्यम् ॥ ८० ॥

हन्त न जहत्यमोघामाशिषमायुःश्रियं प्रयुञ्जानाः ।
घटिकाचलहरिचन्दनपार्श्वमहीनाः सुपावनाहाराः ॥ ८१ ॥

सदमृतफलस्य घटिकाशैलगसालस्य सविधगस्यापि ।
शब्दादिनिम्बसेवां संत्यजति न हन्त हृदयकामो मे ॥ ८२ ॥

अमलानुरागसलिलैरभिलाषमलान्यपोह्य सकलानि ।
कुसुमैरहिंसनाद्यैः कुर्यां घटिकाद्रिदैवतस्यार्चाम् ॥ ८३ ॥

धनदाद्यैरपि न परैः साध्यं सुमहद्भिरण्यदानं तत् ।
सुकरेण कृतवतः स्यात् तुल्यो घटिकाद्रिभूभृतः को वा ॥ ८४ ॥

जनयत्यवति च सकलाञ्ज्ञापयति यो हिताहिते शास्त्रात् ।
साम्ये तु तस्य को वा ज्ञानी घटिकाद्रिसर्वजनकस्य ॥ ८५ ॥

दोषाकरे विरागं सूर्यालोके विकासमामोदम् ।
पद्माख्यामपि वहतो युक्तं घटिकाद्रिपस्य केसरिता ॥ ८६ ॥

तन्वी मयाद्य लब्धा तपसा विपुलेन भक्तिकन्येयम् ।
भजतामव्यभिचारं भावं घटिकाद्रिभर्तरि प्रौढा ॥ ८७ ॥

भास्वति सुरासुरगुरौ भोगिनि वन्दारुसौम्यमन्दारे ।
घटतामभायघटिते घटिकाद्रिविधौ कथं ग्रहैः पीडा ॥ ८८ ॥

समवर्तिनि भुवनेशे पुण्यजने पावके जगत्प्राणे ।
श्रीदे शिवेऽपि घटिकाशैलहरौ सति किमन्यदिक्पालैः ॥ ८९ ॥

यस्योदयः परार्थो यस्यालोकेन यात्यघं विलयम् ।
काले च बोधयति यो घटिकामित्रेऽत्र को विरागी स्यात् ॥ ९० ॥

सरसे जाग्रति घटिकाशैलगते सरसिजालये मोहात् ।
विरसेषु चित्तनामा विषयक्षरकेषु विभ्रमति भृङ्गः ॥ ९१ ॥

बिभ्रति सदैव लक्ष्मीं विश्राम्यति मित्रमण्डले विदुषाम् ।
घटिकाद्रिसार्वभौमे घटते किं वा न संश्रिताभिमतम् ॥ ९२ ॥

श्रितघटिकाचलशिखरे स्थिरकरुणापूरनिर्भरे शिशिरे ।
दीव्यन्ति विमलपक्षा दिव्ये कमलालये चिरं हंसाः ॥ ९३ ॥

विहरति बहुगुणजाले वीरे घटिकाद्रिकृष्णवर्त्मनिभे ।
विजहति समस्ततापान् विजयन्ते मृत्युमपि विमोहमहो ॥ ९४ ॥

कनकमयकटकशोभां कलयति घटिकामहीभृतो रुचिरे ।
दीप्तिमति कृष्णरत्ने दृष्टे त्रासलवमनुभवेत् को वा ॥ ९५ ॥

सप्तर्षिसेव्यमाने संततसुमनस्कृते सहस्राक्षे ।
रमतां मनो हरौ मे राजति घटिकाद्रिरत्नसानुतटे ॥ ९६ ॥

पादस्पर्शनविभवात् पावितभुवने प्रबोधितात्मगुणे ।
भजति घटिकाद्रिमित्रे भगवति भावं मनःसरोजं मे ॥ ९७ ॥

तुष्टेऽल्पतः सुशीले सुगुणगृहीते सुलक्षणे सुदृढे ।
आरोपितो मदीयो भद्रे घटिकाद्रिधूर्वहे भारः ॥ ९८ ॥

अननुगुणामपि वाणीमागःसंदोहमन्दमतिकलिताम् ।
अङ्गीकरोतु भगवानाश्रितदोषावलोकनाकल्यः ॥ ९९ ॥

स्वामिन एव कृतिर्मे सूक्तिस्तोषाय तदपि तस्यैषा ।
स्वोक्तमनुवदति बाले सुतरां तातो हि तोषमुपयाति ॥ १०० ॥

भक्तोचितोपयुक्तां भक्त्या **सौम्यवर**किंकरोपहृताम् ।
अमृतफलावलिमनघां मृदुलामास्वाद्य मृत्युमतियन्ति ॥ १०१ ॥

इति श्रीघटिकाद्रिनाथशतकं समाप्तम्

## ५८. चक्रपाण्यष्टकम्[1]

सतोयतोयदालिनीलदिव्यविग्रहोपरि
स्फुरद्धिरण्यकान्तिजालशोभिपीतवाससे ।

[1] Edited from the single MS. No. 67160 (D. C, No. 1563).

किरीटरत्नरोचिषा विनिर्जितोष्णरश्मये
नतिर्ममास्तु संततं हृदिस्थचक्रपाणये ॥ १ ॥

ललामशोभितत्तदङ्गसौभगात्ममूर्तये
ललाटगोर्ध्वपुण्ड्रकान्तिधूतपातकालये ।
प्रफुल्लरत्नवारिरुट्छदायतात्मचक्षुषे
नतिर्ममास्तु संततं हृदिस्थचक्रपाणये ॥ २ ॥

अनर्घरत्नदीप्तिपुञ्जहैमकुण्डलत्विषा
धगद्धगायमाननैजगण्डयुग्मशोभिने ।
अमन्दशीतमन्दहासनिर्जितामृतांशवे
नतिर्ममास्तु संततं हृदिस्थचक्रपाणये ॥ ३ ॥

प्रशस्तकम्बुकंधरप्रलम्बिकौस्तुभोल्लसद्-
बृहद्विशालवक्षसि स्थितेन्दिराविभूतये ।
भुजङ्गराजभोगदीर्घभूषणाढ्यबाहवे
नतिर्ममास्तु संततं हृदिस्थचक्रपाणये ॥ ४ ॥

समस्तजीवसंतताण्डकोटिपूर्णकुक्षये
सदन्तरङ्गरत्नपीठवासिनेऽमलात्मने ।
खगाधिराजवाहनस्थिताय शेषशायिने
नतिर्ममास्तु संततं हृदिस्थचक्रपाणये ॥ ५ ॥

अशेषभूतभौतिकादिविश्वसृष्टिशक्तिमद्-
विधातृजन्मभूमिभूतनाभिपङ्कजश्रिये ।
समस्तवेदसंनुतप्रभावयुङ्निजाङ्घ्रये
नतिर्ममास्तु संततं हृदिस्थचक्रपाणये ॥ ६ ॥

दशाननाद्यनेकदुष्टनिग्रहार्थमादराद्
गृहीतरामकृष्णपूर्वदिव्यमूर्तिकोटये ।
गजेन्द्रपूर्वनैजभक्तपालनैकदृष्टये
नतिर्ममास्तु संततं हृदिस्थचक्रपाणये ॥ ७ ॥

अमायिकस्वरूपभूतपारमार्थिकाश्रया-
दखण्डसच्चिदात्मकस्वरूपमात्रशोभिने ।
अथापि तत्तदुत्सवाय तत्तदात्मकाय ते
नतिर्ममास्तु संततं हृदिस्थचक्रपाणये ॥ ८ ॥

चक्रपाण्यष्टकस्तोत्रमिदं भक्त्यैव यः पठेत् ।
विपच्चक्रान्न तस्यास्ति भयलेशोऽपि सर्वदा ॥ ९ ॥

इति श्रीचक्रपाण्यष्टकं समाप्तम्

## ५९. तत्त्वार्थसारावलिः[1]

सुब्रह्मण्ययोगिविरचिता

I

श्रीमद्वेङ्कटनायकं श्रुतिशिरःसीमन्तिनीवल्लभं
लक्ष्मीप्राणधवं भुवःपतिमजं सर्वेश्वरं सद्गुणम् ।

[1] Based on a single transcript, No. TR 811 (D. C. No. 3073). It is on the God Veṅkaṭeśvara, worshipped on the famous hill, Tirumalai (Tirupati). श्रीवेङ्कटेश्वरस्तुतिरूपा is written below the title in the MS.

शङ्खं चक्रमथाभयं वरमथ स्वैः पाणिभिः संततं
बिभ्राणं भगवन्तमार्तिहरणं वन्दे मदिष्टार्थदम् ॥ १ ॥

श्रीशेषाद्रिनिवासिनं स्मितमुखं चन्द्राननं श्रीपतिं
वागीशादिसुरेन्द्रवन्दितपदं वन्दे हरिं सुन्दरम् ।
ज्ञानानन्दघनं श्रुतिस्तुतगुणं सर्वज्ञमात्मेश्वरं
सर्वापद्विनिवारकं च सदयं सत्यं परं शाश्वतम् ॥ २ ॥

श्रीमद्वेङ्कटनाथ तावकपदं दीनार्तिविच्छेदनं
कामप्रापकमर्थिनां कलिमलप्रध्वंसि सेव्यं सुरैः ।
कल्याणाकरमाश्रितोऽहमधुना किं चिन्तयानन्तया
खिद्ये मामव माधवाखिलजगत्संरक्षणैकव्रत ॥ ३ ॥

व्याधिव्यालविषं निबर्हय विहंगाधीशयान प्रभो
मोहध्वान्तहरे हरे व्रणमहामत्तेभविद्रावणे ।
श्रीमद्वेङ्कटनाथ मामकमहादारिद्र्यदावानलं
कारुण्यामृतवर्षिणा प्रशमयापाङ्गेन पश्यन् मुहुः ॥ ४ ॥

रुग्णानां निजपादमाश्रितवतां भीतात्मनां यत्कलौ
क्षिप्रारोग्यविधायकं ज्वरहरं सौख्याभयेष्टप्रदम् ।
लक्ष्मीशं वरवेङ्कटाचलपतिं धन्वन्तरिं धार्मिकं
पक्षीन्द्रध्वजमक्षयं सकरुणं वैद्येश्वरं प्रार्थये ॥ ५ ॥

ब्रह्म ब्रह्महरीशरूपमहितं मायागुणैर्वस्तुत-
स्त्वामाहुः श्रुतयोऽथ निर्गुणमिमाः श्रीवेङ्कटेश प्रभो ।
कार्यत्वाज्जगतोऽस्य हेतुरखिलैः कर्तेति नैयायिकै-
स्त्वं ह्येवाह नुतोऽसि वेदकलितैः शब्दैस्तथा बोधितः ॥ ६ ॥

नाकेन्द्रादिनिकेतनाय नलिनद्वन्द्वप्रतिद्वन्द्वदृग् -
रम्याय प्रतिपन्थिदैत्यदमनायास्तु श्रियः प्राप्तये ।
नाथायास्मदभीप्सितस्य निगमान्तालंक्रियाशोभिने
निर्निद्राय समस्तजीवजगतीसंरक्षिणे मङ्गलम् ॥ ७ ॥

चन्द्रस्येव हि चन्द्रिका तव विभो संतोषिका या कृपा
जीवेषु स्वत एव सिध्यति ततः स्यादिष्टमस्मादृशाम् ।
किं संप्रार्थयते स्तनंधयशिशुस्तन्मातरं मे पयो
देहीतीश्वर नेच्छतामपि शिवं श्रीवेङ्कटेशार्पय ॥ ८ ॥

वन्दे वेङ्कटनायकाङ्घ्रियुगलं वन्दारुमन्दारकं
वन्दे तत्करपद्मयुग्ममनिशं बृन्दारकेष्टप्रदम् ।
वन्दे तन्नयनारविन्दयुगलीमिन्द्रादिकेन्दिन्दिरा-
नन्दार्थामपि चोर्ध्वबाहुयुगलं यच्छङ्खचक्रान्वितम् ॥ ९ ॥

ध्यायामि श्रुतिशाखिपल्लवपदं द्रक्ष्यामि लक्ष्मीपतिं
सेवे सर्वसुखप्रदं सुरवरं श्रीवेङ्कटाद्रीश्वरम् ।
सच्चित्सौख्यमयं स्मरामि सततं सर्वज्ञमात्मेश्वरं
विष्णुं जिष्णुमनन्तसद्गुणगणं सर्वस्वतन्त्रं विभुम् ॥ १० ॥

जीवानामुपभोगसाधनवपुः कारुण्यतः कल्पय-
न्निष्टप्राप्तिमनिष्टवर्जनमपि प्रख्याप्य चादृष्टतः ।
तत्संपादककर्ममार्गमखिलं तस्मान्निवृत्तिं विभो
वेदैस्त्वं विशदीकरोषि भगवन् श्रीवेङ्कटाद्रीश्वर ॥ ११ ॥

शेषाद्रीश्वर तावकान् गुणगणान् वक्तुं फणाभृद्वरो
नालं कोऽहमतीव मन्दधिषणश्चेतः परं काङ्क्षति ।

तन्मे साहसमद्य पूर्णशशिनं चाहर्तुमिच्छावतो
डिम्भस्येव मुहुर्निरीक्ष्य सदयं मां पाहि लक्ष्मीपते ॥ १२ ॥

नाथ त्वं पुरुषोत्तमोऽसि कमला पत्नी वरा देवता
पुत्रः पद्मभवश्च वाहनमहो तार्क्ष्यस्त्रयी विग्रहः ।
शस्त्रं चापि सुदर्शनं निजवपुः सच्चिन्मयं सद्गुणं
त्वं चानन्दघनोऽसि वेङ्कटपते मां पाहि विश्वेश्वर ॥ १३ ॥

उन्मीलत्पुलकाङ्कुरं सुखजलस्राव्यक्षिहर्षोन्मिष-
द्व्यत्यस्ताक्षरगद्गदस्वरमुदृढप्रीतिसत्सात्त्विकम् ।
लोकव्यापृतिवर्जितं निजमुखैकावासलक्ष्यं कदा
श्रीमद्वेङ्कटनाथ ते पदयुगं द्रक्ष्याम्यहं निर्भयः ॥ १४ ॥

श्रीमद्वेङ्कटनायकाङ्घ्रिकमलं श्रद्धातटाकोदितं
भक्तिध्यानतपोजलस्थितमपि स्वास्तिक्यकन्दोद्भवम् ।
वेदान्तार्करुचिस्फुटं सकलचैतन्यस्फुरद्भ्रम्भरं
त्राणोदारमरन्दशक्तिसुखसंवित्सत्यरूपं भजे ॥ १५ ॥

द्वैतध्वान्तदिवाकरे मुरहरे मध्वादिविध्वंसके
सत्तामात्रशरीरिणि प्रियतमे सर्वस्य जन्तोः शिवे ।
आनन्दात्मनि चिन्मये निरुपमे मूलप्रकृत्याश्रये
सर्वज्ञे सकलेश्वरे विहरतु श्रीवेङ्कटेशे मतिः ॥ १६ ॥

श्रीमद्वेङ्कटशैलनाथ भगवन् मामद्य दीनं विभो
श्रामंश्राममपेक्षितासिकृतिषु भ्राम्यन्तमप्राप्तितः ।
त्वामेवाश्रितलोकरक्षणचणं स्वामीति मत्वा दृढं
नामैवेश्वर ते स्मरन्तमघहन्नानन्दय श्रीपते ॥ १७ ॥

यस्याद्रिः स्पृशतामघान्यपनुदत्यह्नाय यत्संनिधि-
वैकुण्ठादतिरिच्यते यदुदरं ब्रह्माण्डकोट्याश्रयम् ।
यन्नाम स्मरतां मनोरथततिः सार्थैव यद्भक्तिभाज्-
जीयाद् वेङ्कटनायकः स भगवानस्मान् भयात् त्रात्विह ॥ १८ ॥

श्रीशेषाद्रिविहारिणं कृतजगत्संरक्षणं चक्रिणं
श्रीवत्साङ्कितवक्षसं कनकभासंस्पर्धिसद्वाससम् ।
कस्तूरीघनसारकुङ्कुममिलत्कालेयकालेपनं
कल्याणैकनिकेतनं भज मनः कौमाररूपं हरिम् ॥ १९ ॥

श्रीमद्वेङ्कटनायकस्य सकलप्राणिप्रियस्य प्रभो-
र्लक्ष्मीनेतुरनन्तपुण्यफलदस्योदारदानस्य च ।
दातुश्चाहमिहास्मि संप्रति पुमर्थार्थप्रतिग्राह्यतो
दारिद्र्यं न ममास्ति पुष्कलधनग्रामस्य चर्णं कुतः ॥ २० ॥

श्रीकान्तं शरदिन्दुकान्तिहसितं श्रेयस्करं प्राणिनां
पाकारिप्रमुखामरार्चितपदं पाथोजरम्येक्षणम् ।
लोकानां जननस्थितिप्रलयकृल्लीलाविलासं हरिं
नाकारातिरिपुं निरस्तदुरितं श्रीवेङ्कटेशं नुमः ॥ २१ ॥

चक्षुर्दक्षिणमब्जपोषणरतं सव्यं तदब्जात्मकं
पादावब्जनिभौ करे च विलसत्यब्जं तु यस्याब्जजः ।
सूनुश्चाब्जनिकेतना भगवती पत्नी च नाभौ स्वके
भात्यब्जं भुवनत्रयं स भगवानव्यात् स शेषाद्रिराट् ॥ २२ ॥

दीनानाथदयालुना भगवतानूनप्रभावेन च
ज्ञानानन्दघनेन चेतनगणत्राणप्रवीणेन च ।

श्रीनाथेन गुणैकतानतनुना श्रीवेङ्कटस्वामिना
को नामार्तिहरेण जन्तुरधुना न स्यात् सनाथः कलौ ॥ २३ ॥

सत्यानन्दचिदम्बुधौ गुणमणिस्थाने च मुक्ताश्रये
कारुण्योर्मिकलापिनि श्रितसमस्तप्राणिवर्गे तथा ।
ब्रह्माण्डाह्वयबुद्बुदे घनमहामायावलम्बे त्रयी-
घोषे श्रीमति वेङ्कटेशजलधौ चेतो मदीयं प्लवः ॥ २४ ॥

यन्नामस्मरणप्रवीणजनतानन्दोपभोगैकभू-
र्यत्पादाम्बुरुहद्वयीप्रणतिरप्यापन्निवृत्तिप्रदा ।
यत्साक्षात्करणं नरस्य पुरुषार्थाप्तौ भवेत् कारणं
श्रेयोदानचणं करार्पणकृते तं वेङ्कटेशं भजे ॥ २५ ॥

सुब्रह्मण्यमुखोदितस्तुतिमिमां श्रीवेङ्कटाद्रीशितुः
सौभाग्योपचयप्रदां श्रुतिमयीं तत्त्वार्थसारावलिम् ।
यः प्रातः प्रतिमन्दवारमनिशं भक्त्या पठेत् सादरं
तस्येष्टार्थसुखाप्तिबोधविजयारोग्यायुराप्तिर्भवेत् ॥ २६ ॥

II

श्रीवेङ्कटाचलनिकेतनमाश्रयामः
श्रीभूसनाथमखिलात्मशरण्यपादम् ।
श्रीमन्ति यद्भजनशीलकुलानि लोके
धन्यानि धीबलतपःसुखकीर्तिभाञ्जि ॥ २७ ॥

यत्पाददर्शनपवित्रितलोचनानां
यत्पुण्यनामपरिकीर्तनपुण्यवाचाम् ।

श्रेयांसि नित्यसुलभानि नृणां भवन्ति
श्रीवेङ्कटाचलपतिः परिपातु सोऽस्मान् ॥ २८ ॥

सच्चित्सुखादिदमजायत वर्तते च
सच्चित्सुखे लयमुपैति जगत् समस्तम् ।
सच्चित्सुखं तदिति वेङ्कटशैलनाथ
शुद्धाद्वयं श्रुतिरिहाह तत्र स्वरूपम् ॥ २९ ॥

पूर्णामृतद्युतिलसद्वदनस्य पद्म-
पत्राभदीर्घनयनस्य रमाधिनेतुः ।
श्रीवेङ्कटाद्रिवसतेः कमनीयरूपं
कल्याणदं भवतु लोचनगोचरं नः ॥ ३० ॥

आराधितोऽपि भगवन्नधुना कलौ त्वं
किं नाम यच्छसि सुखं सकलास्तिकेभ्यः ।
गोमांसखादिवशवर्तिनि भूतले च
गोविप्रसौख्यकरणे किमु बीजमस्ति ॥ ३१ ॥

आरोग्यदायिनि तपःफलदातरि त्व-
यीशे समस्तजगतां श्रितकल्पवृक्षे ।
श्रीवेङ्कटाद्रिनिलये वरदे प्रसन्ने
नाहं बिभेमि दुरितामयदुःखसंघात् ॥ ३२ ॥

चन्द्रश्चकोरमिव पूर्णतनुः करैः स्वै-
राप्याययत्यमृतगुः सदयैरपाङ्गैः ।
श्रीवेङ्कटेश भगवन् विषयाभिलाप-
संतप्तचित्तमधुना परिपाहि मां त्वम् ॥ ३३ ॥

जीवोपभोग्यजगदाकलनावनादि-
दक्षं दयार्द्रहृदयं दयितं रमायाः ।
दामोदरं दरविकस्वरपुण्डरीक-
पत्रेक्षणं भजत पन्नगभूधरेशम् ॥ ३४ ॥

दीनात्मरक्षणनिसर्गदयापयोधिं
मानावनैकबिरुदं निजकिंकराणाम् ।
श्रीनायकं श्रितभुजंगमराजभूध्रं
को नाम नाश्रयति चित्सुखरूपमर्थी ॥ ३५ ॥

नेत्रोत्सवं निखिलसाधुजनस्य नित्यं
श्रोत्रोत्सवं श्रुतिनुतं श्रितवेङ्कटाद्रि ।
दिव्यं हरेर्निखिलजीवशरण्यमीडे
रूपं च नाम रमणीयमनन्ययोगम् ॥ ३६ ॥

श्रीशेषशैलशिखराभरणं रमायाः
प्राणप्रियं श्रुतिशिरःसरिदीशचन्द्रम् ।
वित्तार्थिवित्तदमपारकृपं प्रपद्ये
श्रीवेङ्कटेश्वरमखण्डसुखैकतानम् ॥ ३७ ॥

संसारसागरमपारमिहातितीर्षो-
र्मर्त्यस्य मृत्युमकरामयजन्तुजुष्टम् ।
श्रीवेङ्कटेश्वरपदस्मरणादृतेऽस्ति
नान्यः प्लवः प्रविततादिशताकुलस्य ॥ ३८ ॥

दुष्पारकुक्षिभरणोद्यमदुर्विदग्धं
दुर्वारदुःखशतदन्तुरितान्तरङ्गम् ।

दोषैकतानमतिदीनममुं दयालो
देवेश वेङ्कटमहीधरनाथ पाहि ॥ ३९ ॥

अज्ञानपातकमहामयशत्रुचिन्ता-
दुःखर्णदोषशमनाय तवैकमेव ।
श्रीवेङ्कटेशचरितामृतपानरूपं
दिव्यौषधं न हि ततोऽधिकमस्ति विष्णो ॥ ४० ॥

श्रीवेङ्कटेश भगवञ्जगतः पितासि
माता च मामकगुरुः परिपालकश्च ।
गर्भस्थितस्य भरणे जनने सहाय-
स्त्वं गर्भिणीं च परिरक्षसि दीनबन्धो ॥ ४१ ॥

कंदर्पकोटिजनकानपि कांश्चिदीडे
कल्याणजालकलनैकपटीयसोऽन्यान् ।
कल्याधिदावशमनोद्यतवृष्टिधारा-
पूरांश्च वेङ्कटपतेः करुणाकटाक्षान् ॥ ४२ ॥

श्रीवेङ्कटेश भवदीयकृपाकटाक्ष-
संजीवितस्य सकलेप्सितभोगभाजः ।
विद्वज्जनस्य कलिदोषलवाप्तिशङ्का
नैवास्ति धर्मपरिरक्षकता यतस्ते ॥ ४३ ॥

कल्याणकल्पतरुभिः करुणाकटाक्षैः
कंजातदर्पशमनैः कलयाशु धन्यान् ।
अस्माननन्तधरणीधरमौलिवास
लक्ष्मीपते सकललोकशरण्य विष्णो ॥ ४४ ॥

पूर्णामृतद्युतिलसद्वदनाय फुल्ल-
पद्मेक्षणाय वरदाभयपाणयेऽस्तु ।
शेषाद्रिमौलिनिलयाय रमासखाय
शङ्खारिभृत्करयुगाय नमःसहस्रम् ॥ ४५ ॥

वैश्वानरोऽस्युदरगः सकलस्य जन्तो-
र्भुक्तान्नपाकरसभोजनदेहवृद्धीः ।
कुर्वन् क्षुधां प्रतिदिनं कुरुषे त्वमेव
भुङ्क्ष्वाद्य वेङ्कटपते परिपाहि मां त्वम् ॥ ४६ ॥

मध्वादिमत्तगजकुम्भविदारणैक-
दक्षोग्रसिंहवपुषे परमेश्वराय ।
विद्यामयाय भजकाभयदाय सन्तु
श्रीवेङ्कटाद्रिनिलयाय नमांसि नित्यम् ॥ ४७ ॥

श्रीवेङ्कटेशभगवच्चरणं भवाब्धि-
संतारणं भजकभावुककारणं च ।
भक्तार्तिसंहरणमर्थिजनेप्सितार्थ-
विश्राणनैकनिपुणं शरणं भजामः ॥ ४८ ॥

अर्थं हि सर्वजनकाम्यमदुःखलेश-
मानन्दमाहुरनुभूय च यं महान्तः ।
तत्साधनं च भवतीत्युभयात्मकस्तु
श्रीवेङ्कटाचलपतिः स हि मे पुमर्थः ॥ ४९ ॥

स्रष्टा रजोगुणयुतः परिपालकस्त्वं
सत्त्वान्वितश्च तमसा पिहितो निहन्ता ।

विश्वस्य कारणममुष्य गृणन्ति वेदा-
स्त्वामेव वेङ्कटपते भगवन् रमेश ॥ ५० ॥

आपन्निवारणमनाथजनावनैक-
दीक्षाधुरीणकरुणं जगतां शरण्यम्
श्रीशं श्रितामरतरुं शशिसूर्यनेत्रं
सेवेऽन्वहं सपदि वेङ्कटशैलनाथम् ॥ ५१ ॥

*लक्ष्मीधवाय लसदुत्तमसद्गुणाय*
*लावण्यरत्ननिधये ललितस्मिताय ।*
*लीलाविनिर्मितजगत्ततिरक्षणैक-*
*शीलाय सन्तु नतयः सततं मदीयाः ॥ ५२ ॥*

कल्याणमूर्तिमखिलाघनिवृत्तिमूल-
लीलाचरित्रमहिराजगिरीन्द्रवासम् ।
श्रीवेङ्कटेश्वरमनन्तमपारवीर्यं
सेवे श्रियै श्रितजने सदयं सदैव ॥ ५३ ॥

विश्वावनव्यसनिने निजकिंकरेषु
विश्वासिने विहितदुष्टनिबर्हणाय ।
विद्रावितात्मरिपवे विधिवन्दिताय
श्रीवेङ्कटाद्रिपतयेऽस्तु मम प्रणामः ॥ ५४ ॥

आम्नायमुद्ददनुजनिग्रहदुग्धसिन्धु-
निर्मग्नमन्दरसमुद्धरणादि कर्तुम् ।
पाठीनमूर्तिमपि कच्छपविग्रहं त्वां
श्रीवेङ्कटेश भजतां न भयं कदाचित् ॥ ५५ ॥

आनन्दमाशु सदयं ह्यभयं विधेहि
रोगं निराकुरु निबर्हय चित्ततापम् ।
श्रीवेङ्कटाचलपते शरणं त्वमेव
देह्यन्नमीश परिपोष्ययुताय मह्यम् ॥ ५६ ॥

श्रीवेङ्कटाचलपते शरणागतैक-
संरक्षणव्रत समस्तसुखैकधामन् ।
सच्चिन्मयाद्वय सनातन सर्वसाक्षिन्
सर्वेश्वरस्त्वमसि मां परिपाहि विष्णो ॥ ५७ ॥

नाथोऽसि मामककुलस्य रमासनाथ
श्रीवेङ्कटेश भगवन् मम च प्रभुस्त्वम् ।
क्षेमंकरेण वरदेन तथाभयेन
मां पालयस्यनिशमीश करेण विष्णो ॥ ५८ ॥

उत्पाद्य मामुदितबोधलवं च कृत्वा
संवर्ध्य लौकिकसुखैरपि कैश्चिदीश ।
श्रीवेङ्कटाचलपते तव भक्तमेनं
नित्यं धिनोषि निजसद्गुणचिन्तनेन ॥ ५९ ॥

श्रीवेङ्कटेश्वर शिवंकर भूसुराणां
श्रीशेषशैलनिलयाश्रितकल्पशाखिन् ।
श्रेयो विधेहि भगवन् भवदीयपाद-
कैंकर्यलक्षणमनन्तसुखानुभूति ॥ ६० ॥

नामाक्षराणि भगवन् भवतः प्रकामं
कामारिमुख्यसुरपुंगवसेवितानि ।

तन्वन्तु संततमनन्यगतेरमुष्य
भर्तव्यवर्गभरणार्थमनीषितानि ॥ ६१ ॥

श्रीवेङ्कटाचलपतौ जगतां शरण्ये
जीवेश्वरे जगति कः कलिदोषसङ्गः ।
पापप्रसक्तिरपि नास्त्यखिलाघहन्तृ-
तत्पादसेवकजनस्य न कष्टलेशः ॥ ६२ ॥

श्रीवेङ्कटेश्वरविभोश्चरणारविन्दं
चक्राङ्कुशध्वजसरोरुहमत्स्यचिह्नम् ।
नित्यं भजामि निरुपाधिकसौख्यदायि
निर्निद्रमस्य जगतः परिरक्षणादौ ॥ ६३ ॥

सर्वापदुद्धरणदीक्षितमस्मदीय-
सौभाग्यपुञ्जसफलीकरणप्रभावम् ।
श्रीवेङ्कटेशचरणं शिरसा भजामि
श्रीकण्ठपूर्वकसुरेश्वरसेव्यमानम् ॥ ६४ ॥

सानन्दमर्थिजनसार्थकतापहं नः
सौलभ्यमूलमरविन्दविजेतृकान्ति ।
श्रीवेङ्कटेश्वरपदं शरणं प्रपद्ये
श्रीमन्महाजनमनःसदनैकवासम् ॥ ६५ ॥

आनृण्यमावहति दुःखमपाकरोति
चिन्तां निरस्यति सुखं जनयत्यजस्रम् ।
दूरीकरोति दुरितं शमयेच्च रोग-
मिष्टं ददाति फणिशैलपतेः स्मृतिर्नः ॥ ६६ ॥

दृष्टोत्तमर्णलिखिताक्षरपङ्क्तिमन्त-
र्मानच्युतिव्यसनकम्पितचेतसो मे ।
चित्तं सुखीकुरु चिरंतनसूक्तिगम्य
श्रीवेङ्कटेश भगवन्नभयं विधेहि ॥ ६७ ॥

स्वामिन् मया तव गुणानविचिन्त्य लोक-
संरक्षणैकनिपुणाञ्जगतः शरण्ये ।
आरोप्य दोषशतमस्म्यघभाजनं मा-
मेनं त्वदेकमनसं परिपाहि विष्णो ॥ ६८ ॥

सर्वोत्तमस्त्वमसि तावकचित्रलीलाः
पुण्या न वेद्मि सरहस्यमतस्त्वयीशे ।
श्रीवेङ्कटेश भगवन्नपकर्षमन्यै-
रुक्तं शिवादहमवोचमिदं क्षमस्व ॥ ६९ ॥

रुद्रस्त्वमेव खलु रुद्रमथाधिकं मे
त्वत्तो न वक्तुरपराधलवोऽपि विष्णो ।
सर्वात्मकस्य न किमस्त्यपकृष्टता ते
यद्यस्ति तथ्यवचसोऽस्तु न मेऽपराधः ॥ ७० ॥

सच्चासि वेदवचसा भगवंस्त्वमेव
त्वच्छासि सर्वमसि केवलमेक आत्मा ।
द्वैतं न चेन्मम कथं वदतोऽपकर्षं
मन्तुर्मृषा स यदि मद्गदितं तथैव ॥ ७१ ॥

विष्णुं शिवाधिकमथानधिकं ततोऽपि
न्यूनं गुणैर्विकृतिभागिनमब्रुवं यत् ।

वागाद्यगोचरपदे कथमस्य योगः
सोऽयं न चेन्मम कथं दुरितोपभोगः ॥ ७२ ॥

यत्पारमार्थिकमथेदमखण्डबोधं
यद्ब्रह्मविष्णुशिवशक्त्यखिलोपगूढम् ।
चैतन्यमेव तदहं मयि सर्वमस्ति
भातीव मायिकमतोऽस्म्युभयं प्रपन्नः ॥ ७३ ॥

यद्व्यावहारिकधियापकलानुभूतं
द्वैतं मृषा न यदि विष्णुशिवादिभेदः ।
सिध्येत् तदा हि कतमावधि तारतम्यं
दोषाय तद्व्यवहृतेः परतो न किंचित् ॥ ७४ ॥

त्वय्येव नाथ परिकल्प्य समस्तदोषं
नाहं बिभेमि भवता परतन्त्रितात्मा ।
मन्तुस्तवैव यदि तत्फलभागिनो मे
स्यादस्तु तात्त्विकमथैक्यमिति ध्रुवं नौ ॥ ७५ ॥

आनन्दरूपमखिलात्मशरीरलोक-
बीजायितप्रकृतिगं परमात्मतत्त्वम् ।
श्रीवेङ्कटेश्वरमनन्तमचिन्त्यशक्तिं
ब्रह्माहमद्वयमजस्रमखण्डमीडे ॥ ७६ ॥

नारायणस्य दशभिः शिवनन्दनस्य
स्कन्दस्य षड्भिरखिलैरुदितोऽंशकैर्यः ।
विश्वावनाय कलिदोषनिवारणाय
श्रीवेङ्कटाचलपतिः स जयत्वजस्रम् ॥ ७७ ॥

श्रीवेङ्कटेश्वरपदाम्बुजभृङ्गसुब्र-
ह्मण्याख्ययोगिमुखनिःसृतवैखरी वा ।
वृत्तैर्वसन्ततिलकैरुपचीयमाना
दद्याच्चिराय पठतामखिलेप्सितार्थान् ॥ ७८ ॥

III

श्रियः कान्तं शान्तेर्निलयमखिलाम्नायवचसां
फलीभूतस्तुत्यं परमपुरुषं चित्सुखमयम् ।
महोदारं दूरं दुरितनिचयस्योरुसुगुणं
शरण्यं सर्वेषां भजति सुकृती वेङ्कटपतिम् ॥ ७९ ॥

महिम्नस्ते मार्गं मदनजनकानन्दसुगुण
प्रभो निर्णेतुं कः प्रभवति यतन्तेऽपि निगमाः ।
कियन्तः क्वाहं चेदपि मुहुरुपासादितमतिः
स्तुतौ त्वत्कारुण्यं मुखरयति मां वेङ्कटपते ॥ ८० ॥

इयत्तामेतावानिति तव महिम्नः श्रुतिरहो
जगादाधो नेशा वदति हि यतो वाच इति च ।
कथं वा तत्तादृग्दुरधिगमतत्त्वं भगवतो
भवेद् वक्तुं शक्तो नरपशुरयं वेङ्कटपते ॥ ८१ ॥

लसन्माहेन्द्राश्मच्छविकुलगुरूणां नवनभो-
घनश्रीरम्याणां कुवलयदलश्यामलरुचाम् ।
फणीन्द्रादिस्वामिप्रतिकृतिजुषामस्तु महसां
प्रचारो मे दिव्याञ्जनमिव दृगानन्दजनकः ॥ ८२ ॥

महामोहध्वान्तप्रशमनवरिष्ठार्करुचये
महारोगव्यालीविदलनविहंगाधिपतये ।
महापापाम्भोधिग्रसनबडबायै स्पृहयते
मुहुर्मेचेतः श्रीफणिगिरिनिवासाय महसे ॥ ८३ ॥

मृगेन्द्राणां लीलागमनकुशलत्वप्रदगुरुः
सरोजानां लज्जाजनकरुचिरत्वैकशरणम् ।
स्वभक्तैकश्रेयोवितरणसुरद्रुर्विजयते
सरस्वत्या स्तुत्यः स किल चरणो वेङ्कटपतेः ॥ ८४ ॥

मुनीन्द्राणां चेतोभवनमणिदीपच्छविरियं
दरिद्राणां तृप्तिव्यतिकरविधानाक्षयनिधिः ।
त्रयीसीमन्तिन्याश्चिकुरनिकुरुम्बाभरणम-
प्युदारस्ते पादो जयति भगवन् वेङ्कटपते ॥ ८५ ॥

ययोर्लावण्याब्धौ मुनिजनमनांसि प्रतिकलं
सरोजायन्ते श्रीनयनरुचयो वेङ्कटपतेः ।
झषायन्ते नित्यं सुकृतसुखसंवित्कुशलता-
श्चिरं रत्नायन्ते विचरतु च वाङ्मनश्चरणयोः ॥ ८६ ॥

दिशन्ती प्रोल्लासं मुनिजनमयूरप्रवितते:
सृजन्ती भक्ताभीप्सितसलिलधाराश्च जगति ।
रमाविद्युद्रम्या भुजगपतिभूभृन्निवसति-
र्घनश्श्यामा सा मे दुरितभवतापं शमयतु ॥ ८७ ॥

दिदृक्षासाफल्यं नयनयुगली यास्यति कदा
फणिक्ष्माभृन्मौलिप्रथितवसतौ पद्मनयने ।

द्रुतं दूरीकर्तुं दुरितनिचयं बुद्धिरपि मे
बुभुत्सासार्थक्यं चिरतरसमाप्तैश्च सुकृतैः ॥ ८८ ॥

नमस्कुर्मो नित्यं निखिलसुरकोटीरपटली-
मणित्विण्मालाभिर्मुहुरुदितनीराजनविधिम् ।
फणिक्ष्माभृन्मौलिप्रथितवसतेर्वेङ्कटपतेः
पदाम्बोजद्वन्द्वं श्रुतिनुतशताद्वन्द्वविभवम् ॥ ८९ ॥

स्वयं न्यक्कुर्वन्तौ रुचिरकमलाभां निजरुचा
सदा सेव्यौ विष्णो तव हि चरणौ यौ कमलया ।
सरागौ ध्यातव्यौ मनसि हि विरागैर्नरवरै-
र्मदक्ष्णोस्तौ स्यातां भजनविषयौ वेङ्कटपते ॥ ९० ॥

तव स्थानं सर्वं जगदखिलचैतन्यवपुषः
समस्तस्य स्थानं त्वमसि जगतो वेङ्कटपते ।
बहिश्चान्तर्व्याप्तं सदमलमनन्तं सुखपदं
चिदानन्दाद्वैतं शिवमहमहंत्वेन कलये ॥ ९१ ॥

रमानीलाभूमीकलितवरिवस्यौ श्रुतिशिरः-
सहस्रस्तोतव्यौ सकलसुरसेव्यौ सुरुचिरौ ।
तपस्विध्यातव्यावरुणसरसीरुट्प्रतिभटौ
प्रपद्ये प्रत्यञ्चौ फणिपतिगिरीशस्य चरणौ ॥ ९२ ॥

निसर्गप्रेमार्द्रं निरवधिकसौशील्यसुभगं
जगज्जन्मस्थेमप्रलयकृतिनिस्तन्द्रमनिशम् ।
चिदानन्दाकारं तव हृदयमस्मानपि कदा
स्मरेद् यद्यद्भक्तान् वद यदि कृपा वेङ्कटपते ॥ ९३ ॥

त्वमेवास्मद्दैवं तव भजनमस्माकमुचितं
वयं त्वत्तो जातास्त्वमपि भरणे नः पतिरपि ।
त्वमस्माकं शास्ता गतिरपि च चैतन्यमखिलं
त्वदन्यो नास्त्येव त्वमहमहहा वेङ्कटपते ॥ ९४ ॥

त्वदंशोऽहं यस्मात् त्वमहमखिलाधार भगवन्
त्वमात्मा सर्वेषां जगदुदयरक्षादिनिपुणः ।
चिदानन्दाकारस्त्वमहमुदिताभ्यासविकृति-
स्ततस्त्वद्दासं मामव फणिमहीभृन्निवसते ॥ ९५ ॥

फणीन्द्रः छत्रं ते शयनमपि वाहः खगपति-
र्ध्वजो वा चन्द्राकौं नयनयुगमब्धिर्गृहमपि ।
रमाभूमी पत्न्यौ तनुरपि चिदानन्दसुभगा
स्वयं धर्मोऽसि त्वं जय जय चिरं वेङ्कटपते ॥ ९६ ॥

कुमारस्ते वेधाः सकलभुवनोत्पादनपटुः
तथानङ्गः कामप्रभुरखिलजेता सुमशरः ।
कलानामीशित्री कलयति पतिं नः श्रुतिमयी
स्नुषा श्लाघ्यं भाग्यं फणिगिरिपते तावकमिह ॥ ९७ ॥

तवाकारः संवित्सुखमयशरीरस्य सुभगो
दृशां योगिध्येयः श्रुतिशिखरगानां हि विषयः ।
कथं वा मद्दृष्ट्योः सुमशरसहस्राधिकरुचि-
र्विना पुण्यं लक्ष्यः प्रभवति फणिक्ष्माधरपते ॥ ९८ ॥

श्रुतिस्त्रीसीमन्तस्फुरदमलमुक्तामणिसरः
स्वपादाविर्भूतद्युसरिदुरुपूरः किमथवा ।

फणिक्ष्माभृन्नेतुश्चरणनखराणां धवलिमा
वितर्के मद्बुद्धेरुपदिशति मोहं शमयति ॥ ९९ ॥

अन्तर्यामी त्वमसि भगवन्नस्य सर्वस्य जन्तोः
सर्वं व्याप्तोऽप्यखिलमहह त्वं पदेनैककेन ।
विश्वं विष्णो वरद परमस्त्वं ततस्त्वां प्रपद्ये
कारुण्याब्धे कलिकलुषितं पाहि मां वेङ्कटेश ॥ १०० ॥

सुब्रह्मण्यमुखोदितस्तुतिमिमां भक्त्या पठन्तोऽन्वहं
ब्रह्मण्यस्य जगद्गुरोर्भगवतः श्रीवेङ्कटेशप्रभोः ।
देवेशस्य रमापतेः करुणया विष्णोः सुखं भावुकं
पुण्यं कीर्तिमनामयं चिरतरायुः प्राप्नुवन्ति ध्रुवम् ॥ १०१ ॥

## IV

लीलामूलं नाथ ते नैव विद्मः
काले देशे कर्मयोगे विचित्रम् ।
दोषैर्जुष्टं दोषहीनं गुणाढ्यं
निश्चेतव्यं तत् कथं वेङ्कटेश ॥ १०२ ॥

वेदैः शास्त्रैर्योगिभिः शिष्टवृन्दैः शस्तं लीलाजालमुक्तं तवैव ।
दोषैर्हीनं सद्गुणाढ्यं विचित्रं तत् प्रत्येमि श्रीपते वेङ्कटेश ॥ १०३ ॥

सच्चिन्मात्रं शुद्धमद्वैततत्त्वं ब्रह्मज्योतिर्निर्गुणं त्वं हि विष्णो ।
मायाध्यासादीश्वरः सद्गुणौघैः पूर्णः साक्षाद् वेङ्कटाद्रीश्वरोऽसि ॥ १०४ ॥

धर्मात्मानं सत्यसंधं दयालुं सर्वाधारं सर्वगं सर्ववन्द्यम् ।
विश्वाकारं विश्ववेद्यं मुकुन्दं विष्णुं साक्षाद् वेङ्कटेशं भजामः ॥ १०५ ॥

वृत्तीरन्तश्चोदयस्यन्तरात्मन्
मातेव त्वं रक्षसि श्रीनिवास ।
श्रेयःप्राप्तौ तातवत् त्वं नियोक्ष्य-
स्यस्मान् विष्णो न त्वदन्योऽस्ति नाथः ॥ १०६ ॥

दत्त्वा वित्तं दीनलोकाय विष्णो कृत्वा चान्तः प्रेरणं कार्यजाते ।
ज्ञात्वा तत्तद्बुद्धितस्त्वं फलानि श्रीमच्छेषाद्रीश यच्छस्युदार ॥ १०७ ॥

जीवंजीवं यद्वदिन्दुः करैः स्वैः
भास्वान् कोकीकोकयुग्मं यथोस्रैः ।
तद्वच्छ्रीमान् वेङ्कटेश त्वदक्ष्णो-
र्लीलापाङ्गैः पाहि मां सानुरागैः ॥ १०८ ॥

सद्रूपस्त्वं सत्त्वदातासि विष्णो चिद्रूपत्वाच्चेतनां मे प्रयच्छ ।
आनन्दस्त्वं शर्म देहीश्वरं त्वां सेवे श्रीशं शेषशैलाधिवासम् ॥ १०९ ॥

सर्वव्यापि स्वप्रकाशस्वरूपं सत्तामात्रं संविदानन्दपूर्णम् ।
ब्रह्मैवेदं मायया मूर्तमेकं जीवोपास्यं वेङ्कटेशाभिधानम् ॥ ११० ॥

नाहं कर्ता कारयत्यन्तरात्मा विष्णुः शेषाद्रीश्वरो वेदवेद्यः ।
कर्मानादि प्राकृतं मे निमित्तं भोगप्राप्तौ तत्स्वभावो हि तादृक् ॥ १११ ॥

देहारामे चित्तवृत्त्याख्यभूमौ
सत्संगत्या साधुकृत्योचितायाम् ।
भक्तिश्रद्धाद्यालवाले गुरूक्तं
बीजं श्रीमद्वेङ्कटेशस्य मन्त्रः ॥ ११२ ॥

ध्यानं वृक्षस्याङ्कुरं नित्यपूजा-
काण्डो मन्त्रावर्तयो यस्य शाखाः ।
शेषाद्रीशस्योत्सवादीनि पर्णा-
न्यानन्दाख्यं चिद्रसं सत्फलं नः ॥ ११३ ॥

सुब्रह्मण्यप्रस्तुतः श्रीनिवासः
सिद्धान्तार्थः सर्ववेदान्तवाचाम् ।
स्तोत्रं चैतद् ये पठन्ति प्रभाते
पायाद् भक्तान् तानजस्रं दयालुः ॥ ११४ ॥

V

श्रीनिवासं भजे मौनिहृन्मन्दिरं
वेङ्कटाद्रीश्वरं वेदवेद्यं हरिम् ।
कामितार्थप्रदं स्वामिनं सर्वदा
भूमिदेवप्रियं स्तौमि नौमि स्वयम् ॥ ११५ ॥

शेषगिरिभूषणमशेषजगदीशं
दोषगणशोषणविशेषितमनीषम् ।
भाषितविशेषकृतसुश्रुतिसमूहं
शेषशयनं भज सदा वेङ्कटेशम् ॥ ११६ ॥

शेषगिरीश्वर शश्वत्कामं शिवमाकलयान्तर्यमयन् ।
मामकमीश्वर माधव विष्णो मोहमपाकुरु मे कुरु बोधम् ॥ ११७ ॥

दीनजनावनदीक्षितमीडे मानदमसत्कुलदैवम् ।
स्वामिनमहिपतिगिरिकृतवसतिं कामितदातारं श्रीशम् ॥ ११८ ॥

शरणागतजनभरणादरणप्रवरं सद्गुणगणशरणम् ।
फणिपतिधरणीधरवरभूषणचरणं भज भोऽन्तःकरण ॥ ११९ ॥

क्षरादतीतोऽक्षरतोऽप्यतीतो विष्णो यतोऽतः पुरुषोत्तमोऽसि ।
शरीरशायी पुरुषोऽहमस्मि तन्मामहीन्द्राद्रिपते पुनीहि ॥ १२० ॥

सत्सङ्गमूलां सुकृतालवालां श्रद्धाङ्कुरां भक्तिरसप्रवृद्धाम् ।
दयाप्रसूनां श्रितवेङ्कटाद्रिं विज्ञानवल्लीं सुखसत्फलां भजे ॥ १२१ ॥

निजनामजपप्रवृत्तलोकावनशौण्डेन दयामयेन देव ।
वरवेङ्कटनाथमूर्तिभाजा भवतास्मन्नयनानि सार्थकानि ॥ १२२ ॥

सफलीकृतदर्शनार्थिचक्षुस्तव सौन्दर्यमहीन्द्रशैलनाथ ।
श्रुतिसार्थकतावहं च नाम श्रुतिमौलीशतसंस्तुतं च जीयात् ॥ १२३ ॥

यावत् क्रियाः कर्तुमशक्नुवानः कुर्वन् यथाशक्ति नरो न दुष्यति ।
तथा प्रतिज्ञातमथोपवासं मयेति जानीह्युरगाद्रिनाथ ॥ १२४ ॥

परं परस्मात् पुरुषं पुराणं पद्मेक्षणं चित्सुखसत्यलक्षणम् ।
श्रीवेङ्कटाद्रीश्वरमाश्रयामश्चिरंतनं योगिजनात्तचिन्तनम् ॥ १२५ ॥

वेङ्कटपतिपदपङ्कजभक्तः संकटमुक्तः सत्यनियुक्तः ।
सर्वजनोत्तमतां समुपैति स्वामी भूमेर्भविता धन्यः ॥ १२६ ॥

स्वामिन् वेङ्कटरमण श्रीमन् कामितदानधुरीण विभो ।
मामतिदीनं पालय दयया स्तौमि तवाङ्घ्रिद्वयमेव ॥ १२७ ॥

सेवे शेषाद्रीशं भक्त्या दोषातीतं तोषं प्राप्तुम् ।
श्रीभूमीशं श्रीदं नृणां साभिप्रायाम्नायैर्गम्यम् ॥ १२८ ॥

साक्षाद् विष्णुं लक्ष्मीकान्तं प्रेक्षालक्ष्यं मोक्षाधीशम् ।
पक्षीड्वाहं रक्षाधुर्यं द्रक्ष्याम्येकं कुक्षौ यन्मे ॥ १२९ ॥

क्षेत्रं श्रीवेङ्कटाद्रिः श्रिततरुदृषदो धातवो देवरूपा-
स्तत्त्वानि प्राणिनः स्युस्तनुकरणगता देवता देवताश्च
विप्राद्या भोजनाद्यं प्रतिदिननियतं पूजनं वेङ्कटेशः
क्षेत्रज्ञस्तत्र चैतन्यमखिलपरिपूर्णं परं ब्रह्म सत्यम् ॥ १३०

त्वन्नाम स्मरतामघौघशमनं त्वद्भक्तिभाजां सदा
योगक्षेमसमृद्धिरीप्सितफलप्राप्तिर्निरायासतः ।
त्वत्सेवाधिगतात्मबोधकगुरुश्रीपादुकार्चावतां
ब्रह्मप्राप्तिरपि प्रसिद्धमखिलं श्रीवेङ्कटाद्रीश्वर ॥ १३१ ॥

सुरक्षितश्चास्मि तवाश्रयादहं जगत्प्रभो दीनशरण्य विष्णो ।
पाल्यस्त्वयेतश्च सदैव सादरं त्राता न चान्यो मम वेङ्कटेश ॥ १३२

दूरं दुरापं च दुरात्मनां हरिं पारे गिरां स्वानुभवैकलभ्यम् ।
हिरण्यगर्भाद्यमरार्चिताङ्घ्रिं वरं श्रियः शेषगिरौ श्रयामः ॥ १३३ ॥

उरगपतिशिखरिशिखराकलितवसतिं
चरणनतजनसुहितकरणचणकरुणम् ।
वरदमुरुसुगुणगणपरिकलितदिव्या-
भरणमतसीसुमसमानरुचिमीडे ॥ १३४ ॥

चिदानन्दरूपं सदात्मस्वरूपं निराकारमाद्यं पराकारवेद्यम् ।
जगद्वृक्षबीजं समं देवभाजं भवाधिप्रणाशं भजे वेङ्कटेशम् ॥ १३५ ॥

त्रयीचोरहन्ता महीध्रस्य धर्ता महीगोलभर्ता महादैत्यभेत्ता ।
बलेर्भूमिहर्ता नृपव्रातकर्ता दशग्रीवहन्ता हरिर्वेङ्कटेशः ॥ १३६ ॥

कलिन्दात्मजाखेलनः कंसहन्ता कलौ दैत्यसंघस्य संमोहकर्ता ।
कुराजव्रजध्वंसनः कोऽपि कल्की हरिर्वेङ्कटेशो हरत्वस्मदार्तिम् ॥१३७॥

अनाथस्य नाथस्त्वमेवासि विष्णो सनाथस्त्वयाहं न मेऽन्योऽस्ति नाथः ।
अथानृण्यमारोग्यमायुः सुखं मे त्वमेव प्रयच्छ प्रभो वेङ्कटेश ॥ १३८ ॥

मनो मे समाधत्स्व मां पाहि विष्णो महाक्रोधजुष्टं महामोहदुष्टम् ।
मुहुर्मीनकेतुप्रभावापकृष्टं निकृष्टस्वभावं भवद्भक्तमीश ॥ १३९ ॥

ममारोग्यमायुष्यमानृण्यमर्थं यशः पुण्यमानन्दमीश प्रयच्छ ।
प्रपन्नार्तिहारिन् प्रभो वेङ्कटेश प्रसीद त्वदेकावलम्बस्य विष्णो ॥१४०॥

विष्णो मामव विस्मृतिशीलं विश्वव्यापक मां पाहि ।
वेङ्कटनायक वेत्सि समस्तं वेत्तृत्वं मे देहि विभो ॥ १४१ ॥

वराभयदरारिभृत्करसरोजमाराधये
पुरान्तकसुराधिपद्विरदवक्त्रपूर्वार्चितम् ।
गिरामतितरामुरःसरवरात्मके सर्वदा
विराजदुरुविग्रहं वरदमर्थिनां श्रीपतिम् ॥ १४२ ॥

कृपारसकरम्बितान् कमलसुन्दरानिन्दिरा-
कपोलपरिचुम्बिनः कलुषहारिणः काङ्क्षये ।
कलौ कुशलदायिनः कलितभोगिराड्भूधरान्
कटाक्षसुभगोदयान् परमपूरुषस्यान्वहम् ॥ १४३ ॥

श्रीमद्वेङ्कटनायक भगवन् कामितदानधुरीण विभो ।
चामीकरनिभचेलविराजित भूमीधव मामव सदयम् ॥ १४४ ॥

पन्नगराजमहीधरमस्तकसंनिहिताविर्भावस्य ।
चिन्मयमूर्तिं चेतसि कलयन् तन्मयतामाप्नोति नरः ॥ १४५ ॥

शेषगिरीन्द्रं श्रितवति देवे दोषविहीने दुरितारौ ।
सर्वार्थेशे साक्षिणि भगवति सर्वस्वं ते कुरु चेतः ॥ १४६ ॥

घटादेः कुलालः पटादेः कुविन्दो
गृहादेश्च कार्त्स्न्यथा लोकदृष्टः ।
प्रपञ्चस्य कर्ता तथा वेददृष्ट-
स्त्वमेवासि विष्णो फणीन्द्राद्रिवासिन् ॥ १४७ ॥

यथा स्वाप्निकस्य प्रपञ्चस्य कर्ता
शरीराभिमानी श्रुतस्तैजसात्मा ।
तथा जाग्रतोऽपि त्वमेवासि विश्व-
स्त्वदन्योऽस्ति को वा हरे वेङ्कटेश ॥ १४८ ॥

न मे किंचिदस्ति त्वदीयं हरे स्वं स्वतन्त्रस्त्वमेवाहमस्मि त्वदीयः ।
अतश्चास्वतन्त्रत्वतः किं नु कुर्यां त्वदीयां सपर्यां कथं वेङ्कटेश ॥१४९॥

कलौ वेङ्कटेशात् परं नास्ति दैवं
यतस्तस्य भक्ता जयन्ति प्रकामम् ।
न तेषां पराभूतिरात्माखिलानां
तमीशं भजामो हरिं श्रीनिवासम् ॥ १५० ॥

भजे वेङ्कटेशं भवभ्रान्तिनाशं सुराणामधीशं सुपुण्योपदेशम् ।
विहंगेशवाहं विनिर्मुक्तमोहं चिदेकप्रवाहं मुदे यामि सोऽहम् ॥ १५१ ॥

कलौ युगे वेङ्कटनायकस्य कल्याणमूर्तेः कमलाश्रयस्य ।
नामस्मृतिः सर्वरुजापहन्त्री स एव देवो भिषजां भिषक्तमः ॥ १५२ ॥

श्रीवेङ्कटेशं स्मरतां न रोगः श्रीवेङ्कटेशं भजतां न दुःखम् ।
श्रीवेङ्कटेशं नमतां न भीतिः श्रीवेङ्कटेशं विदुषां न चिन्ता ॥ १५३ ॥

श्रीनिवास जगतां निवास ते मानवाकृतिमिवाश्रितं वपुः ।
दीनरक्षणविधानदीक्षितं ध्यानगोचरमिहास्तु मे सदा ॥ १५४ ॥

श्रियः कटाक्षैरभिषिक्तमूर्तिं पयःपयोधौ वटपत्रशायिनम् ।
विभावये वेङ्कटशैलमस्तके विभ्राजमानं हरिनीलभासा ॥ १५५ ॥

श्रियः सहायं श्रितकल्पभूजं शेषाद्रिगं दोषविवर्जितं हरिम् ।
समस्तलोकैकशरण्यमच्युतं सुखैकतानं शरणं भजामः ॥ १५६ ॥

श्रीशेषशैलं श्रितकल्पसालं श्रीवेङ्कटाख्यं श्रुतपुण्यमुख्यम् ।
वन्दे हरिर्यत्र वसत्यजस्रं वन्दारवो यस्य सुराः सहस्रम् ॥ १५७ ॥

त्रयीमयी यस्य हि पुण्यमूर्तिस्त्र्यन्तकूटोऽवतु वेङ्कटो नः ।
यत्रैव नित्यं रमते रमेशो धात्रादिभिर्दैवगणैरुपास्यः ॥ १५८ ॥

सुरालयादेष सुवर्णशैलात् कैलासतो वापि हिमालयाद्वा ।
विन्ध्यात् पुनर्मन्दरतोऽपि रम्यः श्रीवेङ्कटाद्रिर्वरदश्च पुण्यः ॥ १५९ ॥

यत्रोदकं विष्णुपदानुषङ्गाद् गङ्गाम्भसोऽप्युत्तमतीर्थमाहुः ।
पुराणवाक्यानि स वेङ्कटाद्रिः पुनातु पुण्यः कलिकालिकान्नः ॥ १६० ॥

यदाश्रितानामनघत्वसिद्धिर्यत्रत्यतीर्थाम्बुनिषेवणेन ।
ऐरंमदीयामृतलभ्यलाभः स वेङ्कटाद्रिः सुलभो ममास्तु ॥ १६१ ॥

भानुप्रभामण्डलभासुराणि भास्वन्ति कार्तस्वरकान्तितोऽपि ।
ज्योतींषि शेषाचलशृङ्गभाञ्जि ज्वरं हरन्त्वीक्षणमात्रतो नः ॥ १६२ ॥

घनाश्रयत्वाद् घनसारशीतः प्रवाति वातः प्रचुरो हि यत्र ।
तत्रैव वासोऽस्तु निरन्तरं मे श्रीवेङ्कटाद्रौ श्रिततापहारिणि ॥ १६३ ॥

यत्रोपला दैवतमूर्तिकल्पाः कल्पद्रुकल्पास्तरवोऽप्यनल्पाः ।
सुपुष्कलं पुष्करिणीजलं च नः सार्थतीर्थोऽस्तु स वेङ्कटाद्रिः ॥ १६४ ॥

अधित्यकायाममराधिवासप्रसाधितायां पुरुषोत्तमस्य ।
विराजते यत्र विहारभूमिः स वेङ्कटोऽद्रिः शरणं ममास्तु ॥ १६५ ॥

गुहाशये यत्र हरिर्विराजते गजेन्द्रसंतोषकरः सुशान्तः ।
नान्यत्र तस्मादविरोधयुक्तः श्रीवेङ्कटाद्रिं शरणं भजामः ॥ १६६ ॥

महर्षिसेव्यं मनुजैरुपास्यं मुकुन्दमुख्यैरमरैरधिष्ठितम् ।
मूलं महिम्नो महसां निदानं महाफणीन्द्राद्रिमहं भजामि ॥ १६७ ॥

विहारभूमिर्वनमालिनोऽयं विलासहेतुः कमलाधिनेतुः ।
विवेकिनां वेङ्कटनामकोऽद्रिर्वेदात्मकत्वं विवृणोति हि स्वम् ॥ १६८ ॥

श्रीस्वामिनः पुष्करिणीतटस्थमश्वत्थरूपं प्रणमामि देवम् ।
यत्संनिधौ भक्तजनस्य नित्यं भवन्ति कर्माणि शुभप्रदानि ॥ १६९ ॥

भूतानि भेतालपिशाचयक्षप्रेतानि शेषाद्रिनृसिंहतीर्थे ।
यः स्नाति तद्देहमपास्य मुक्तिं प्रयान्ति रक्षांसि च तत्क्षणेन ॥ १७० ॥

गोविप्रनारीशिशुसर्पहत्यानास्तिक्यतत्कार्यभवान्यघानि ।
श्रीवेङ्कटाद्रौ कपिलस्य तीर्थं निषेव्य नश्यन्ति नरस्य तत्क्षणात् ॥१७१॥

तच्चक्रतीर्थं स्मृतिमात्रतो यद् रुग्णस्य रोगार्तिमपाकरोति ।
तीर्थं च शङ्खस्य सुखाय यत्र स वेङ्कटाद्रिः सुखयत्विहास्मान् ॥ १७२ ॥

यत्पुष्करिण्यामवगाह्य मर्त्यः पापानि सर्वाणि विधूय सद्यः ।
योग्यो भवेद् वेङ्कटनाथमीक्षितुं स वेङ्कटाद्रिः शरणं ममास्तु ॥ १७३ ॥

यदीयसोपानमुपारुरुक्षोर्भवेन्मुमुक्षोरिव भूमिकाप्तिः ।
विश्रामभूमिश्च मरुत्पथस्थं श्रीगोपुरं नः स पुनातु वेङ्कटः ॥ १७४ ॥

अधित्यकायामरविन्दनाभश्रीमूर्तिनित्योत्सवयोग्यरूपम् ।
वेदान्तवाक्यार्थमयं विमानं विराजते यस्य स वेङ्कटाद्रिः ॥ १७५ ॥

दैनंदिना वारविशेषलक्ष्याः पक्षोदिता मासगताश्च वार्षिकाः ।
महोत्सवा यत्र हरेरनर्गलाः भवन्ति तं वेङ्कटशैलमाश्रये ॥ १७६ ॥

समस्तदेशागतभक्तसंघैः करार्पणद्रव्यसमर्पणाय ।
यः प्रत्यहं पूर्णतनुस्तमद्रिं श्रीवेङ्कटाख्यं शरणं भजामः ॥ १७७ ॥

उपासकार्थार्पणयोग्यरूपं कटाहयुग्मं पुरतः श्रियःपतेः ।
निरन्तरं नाणकनाददन्तुरं प्रकाशते यत्र स वेङ्कटाद्रिः ॥ १७८ ॥

सुराः परं भूसुररूपमेत्य ब्रह्मोत्सवे यत्र हरिं दिदृक्षवः ।
प्रत्यक्षमेष्यन्ति कलौ तमाश्रये श्रियःपतेरायतनं गिरीन्द्रम् ॥ १७९ ॥

कलौ युगे कामरतस्य जन्तोर्भक्तस्य संकल्पितसाधनाय ।
दया बभूवेशितुरञ्जनाद्रौ सा मूर्तिमत्यस्मदभीष्टदा स्यात् ॥ १८० ॥

भद्रात्मने भद्रकराय देहिनां गरुत्मदुद्यद्रथकेतनाय ।
वरप्रदायाञ्जनशैलगाय तेजस्विने श्रीपतये नमोऽस्तु ॥ १८१ ॥

तवेङ्गितं वेत्तुमिहाखिलेश प्रकल्पते कः फणिशैलमौलेः ।
तटे निषण्णस्य रमाधिनेतुः स्वशक्तिलेशेन जगन्ति शासतः ॥ १८२ ॥

श्रियःपते जीवगणस्य देहं ज्ञानं च तत्साधनसाध्यभोग्यान् ।
प्रादाः पुरा त्वं कृपया ममापि त्वमेव नाथः परिपाहि मां त्वम् ॥१८३॥

अद्याशनं देहि जगन्निवास त्वदेकनाथाय च वेङ्कटेश ।
दासाय मह्यं मुहुरर्थिने त्वां स्मृत्वाप्नुवन्तीप्सितमेव सन्तः ॥ १८४ ॥

इन्दिन्दिरेन्दीवरमेचकेन बृन्दारकेन्द्रार्चितपादुकेन ।
चन्द्रद्युतिद्योतिदरस्मितेन श्रीवेङ्कटेशेन वयं सनाथाः ॥ १८५ ॥

यच्चिन्तितं दुष्कृतमेव चेतसा पापं मयोक्तं वचसा च यत् कृतम् ।
कायेन तत् सर्वमघं क्षमस्व श्रीवेङ्कटेशाश्रितरक्षक त्वम् ॥ १८६ ॥

अनन्तकल्याणगुणाकरस्य शेषाचलेशस्य पदाब्जभक्तिः ।
अनन्तकल्याणसुखं तनोति जन्तोरशेषस्य जगत्त्रयेऽस्मिन् ॥ १८७ ॥

श्रियःपते वेङ्कटनायकश्च कलौ युगे त्वं वरदोऽसि नृणाम् ।
अस्मत्कुलाधीश्वरमीप्सिताप्त्यै सर्वेश्वरं त्वां शरणं भजामः ॥ १८८ ॥

धनं नमत्सर्वसुखैकमूलं धनाय सर्वेऽपि सदा यतन्ते ।
धनं प्रयच्छ प्रियमद्य मह्यं धनेश्वरस्त्वं खलु वेङ्कटेश ॥ १८९ ॥

सच्चित्सुखाखण्डरसैकरूपं साक्षात् परब्रह्म गिरां दुरापम् ।
श्रीवेङ्कटेशं श्रितदुःखनाशं श्रियः पतिं मद्गतिमाश्रयामः ॥ १९० ॥

मङ्गाम्बिकाजानिरमन्दबोधमाहात्म्यसंपत्सुखशक्तिरूपः ।
महीन्दिराभ्यां परिसेव्यमानः श्रीवेङ्कटेशो मुदमातनोतु ॥ १९१ ॥

सत्योद्भवां संविदुदारकाण्डां सत्कर्मपुष्पां सुकृतप्रवालाम् ।
आनन्दपूर्णामृतसत्फलाढ्यां शेषाचले कल्पलतां भजामः ॥ १९२ ॥

जीवा न जीवन्ति विना भवन्तं लोकैकसंजीवनजीवसंज्ञम् ।
स्वाधीनमायं परमेश्वरं च श्रीवेङ्कटाद्रीश निरस्तमाय ॥ १९३ ॥

सच्चित्सुखाखण्डमयात्ममूर्ते सर्वज्ञ सर्वेश्वर दिव्यशक्ते ।
लक्ष्मीपते वेङ्कटशैलनाथ विलोकयास्मान् सदयैरपाङ्गैः ॥ १९४ ॥

अनन्तकल्याणगुणैकधामा समाश्रिताचिन्त्यविचित्रभूमा ।
पारम्यसीमान्वितसत्यभामा शेषाचले कोचन कोऽपि भाति ॥ १९५ ॥

समानशून्योऽप्यधिकेन हीनो रमासनाथो जगतां सहायः ।
पुमान् पुराणः श्रितवेङ्कटाद्रिर्ममास्तु नित्यं शरणं दयालुः ॥ १९६ ॥

सर्वात्मनां तुल्यदृगीश्वरस्त्वं स्वामी सहायं कुरुषे पितेव ।
तथाप्यहोऽप्याश्रितपक्षपाती कुतोऽसि भो वेङ्कटशैलनाथ ॥ १९७ ॥

फलाभिसंध्या त्वशनाद्यभावं तपो भवेन्नानशनं हि किं तु ।
त्यागः फलस्य त्वयि वेङ्कटेश तपस्तदेवानशनं हि मन्ये ॥ १९८ ॥

श्रीवेङ्कटेशं श्रितदुःखनाशं कृतावतारं कलितारणाय ।
मुकुन्दमाद्यं मुनिवृन्दवन्द्यं मध्वादिविध्वंसकमाश्रयामः ॥ १९९ ॥

श्रियःपते वेङ्कटशैलनाथ सर्वज्ञ सर्वेश्वर सर्वशक्ते ।
सर्वान्तरात्मन्नरविन्दनेत्र स्वामिन् पदं ते शरणं प्रपद्ये ॥ २०० ॥

श्रीवेङ्कटेशाह्वयमाश्रयामश्चिन्तामणिं सत्सुखचित्स्वरूपम् ।
फणीन्द्रशैलस्य फणामणिर्यथा विराजतेऽनर्घ्यगुणः सदा यः ॥ २०१ ॥

जगत्पतिर्वेङ्कटशैलगम्यः श्रिया धरण्या श्रितसेव्यपादः ।
जयत्यजस्रं जितदैत्यवर्गो देवस्तुतश्चक्रधरो मुकुन्दः ॥ २०२ ॥

अकिंचनं मां परिपाहि विष्णो निसर्गनिर्व्याजदयासमुद्र ।
यत्किंचिदस्तीह मदीयपुण्यं यदीश तद् वर्धय वेङ्कटेश ॥ २०३ ॥

त्वमुत्तमर्णोऽप्यधमर्णता मे ततोऽभवत् सर्वमपीह वस्तु ।
तवैव नो मे किमहं समर्थः कुर्यां विभो वेङ्कटशैलनाथ ॥ २०४ ॥

दातुं समर्थोऽसि पुमर्थजालं पातुं प्रभुः स्वाश्रितजीवजालम् ।
मां पाह्यतो वेङ्कटशैलनाथ त्वां पालकं प्रार्थयते न को नु ॥ २०५ ॥

शेषाद्रिवासी शरणं हरिर्नः केषामसौ यच्छति कामितार्थम् ।
येषां मनस्तस्य पदारविन्दे तेषां हि नान्येषु तनोति तोषम् ॥ २०६ ॥

श्रियःपतिर्नः श्रियमातनोतु दहत्वघं वेङ्कटनायको मे ।
स पातु यः पालयति प्रपञ्चं मामीश्वरः प्रेरयतु प्रकाशे ॥ २०७ ॥

श्रीवेङ्कटेशस्मृतिचित्सुखाख्यफलोपभोगाप्तमहानुभावः ।
आयुष्यमारोग्यमुदारभाग्यं ज्ञानं च विष्णोः पदमेति धन्यः ॥ २०८ ॥

श्रीवेङ्कटेशस्मरणौषधं नः समस्तदुःखानि निराकरोति ।
श्रीवेङ्कटाद्रीश्वरमन्त्रराजस्त्वसद्भयं शामयति प्रकामम् ॥ २०९ ॥

ब्रह्मोत्सवं शेषगिरीन्द्रनेतुर्निरीक्षते भक्तियुतः पुमान् यः ।
अंहो निरस्याप्तसमस्तकामः परं पदं वैष्णवमेति सत्यम् ॥ २१० ॥

श्रीरङ्गशायी परिचिन्त्य सर्वं चिरं जगद्रक्षणतन्त्रतत्त्वम् ।
कलौ युगे वेङ्कटशैलनाथः करोति लोकस्य च तेन रक्षाम् ॥ २११ ॥

शेषाद्रिमौलौ शिवलिङ्गमर्चयन् विष्णुत्वमेत्याखिलरक्षणाय ।
श्रीवेङ्कटेशात्मक आविरासीत् तं देवसेनापतिमाश्रयामः ॥ २१२ ॥

आगत्य शंभोरवतारमूर्तिः श्रीवेङ्कटेशस्य कलाभिवृद्ध्यै ।
यन्त्रं धनाकर्षणमालिलेख यत्रैव तं शेषगिरीन्द्रमीडे ॥ २१३ ॥

मङ्गाम्बिकोद्वाहकृताधमर्णमात्मानमीशोऽपि समुद्दिधीर्षुः ।
गृह्णाति भक्तार्पितमर्थमीप्सितं प्रत्यर्पयन् यत्र स वेङ्कटाचलः ॥ २१४ ॥

अभ्यर्थितैर्व्याधिनिपीडितैर्वा धनार्थिभिर्जीवनकाङ्क्षिभिश्च ।
भक्त्यर्पितं प्राप्य करं प्रदिष्टं प्रत्यर्पयेद् यत्र हरिः स वेङ्कटः ॥ २१५ ॥

यन्मौलिगं श्रीपतिदिव्यरूपं यत्रैव सिद्धा बहवस्तपस्विनः ।
देवांशजा यत्र वसन्ति जन्तवो जयत्यसौ शेषगिरिर्महीशः ॥ २१६ ॥

उन्मूलयेद् वाङ्मलमस्य कीर्तनं मूर्तिर्मलं चाक्षुषमुन्मृजेन्नः ।
स्मृतिर्मलं मानसिकं निहन्याच्छ्रीवेङ्कटाद्रेः किमितोऽधिकं शिवम् ॥२१७॥

श्रीवेङ्कटेशायतनोदितं हि तीर्थं पिबन्तः शिरसा वहन्ति ।
श्रीपादरेणुं सततं लभन्ते शनैर्दिने त्वेकभुजः सुखानि ॥ २१८ ॥

कलौ युगे पापिनि नास्तिकाढ्ये श्रीवेङ्कटेशाह्वयमस्ति दैवम् ।
यदास्तिकानां वरदं वरिष्ठं प्रत्यक्षमेतद्धि मयानुभूतम् ॥ २१९ ॥

सत्यप्रतिज्ञं सफलं हि कुर्यात् तथानृताञ्छिक्षयतीव भीतिम् ।
उत्पादयेद् भक्तियुतं मुहुस्तं संजीवयेदेष दयालुरीशः ॥ २२० ॥

पठन्ति पद्यान्यपि यत्र मूका जानन्ति मूढाः कुणयो लिखन्ति ।
पश्यन्त्यथान्धा बधिराश्च तद्वच्छृण्वन्त्यहो शेषगिरिप्रभावात् ॥ २२१ ॥

पङ्गुः समारोहति वेङ्कटाद्रिं वन्ध्याश्च हस्ते शिशुमुद्वहन्ति ।
ददाति दीनोऽपि महाधनानि पापी सुखं याति हरेः प्रसादात् ॥२२२॥

अशेषदेवांशविशेषवेषं निःशेषितानन्तविकर्मदोषम् ।
शेषाद्रिभूषायितदिव्यमूर्त्युन्मेषं मुहुश्चिन्तय शेमुषीशम् ॥ २२३ ॥

श्रीमद्वेङ्कटनायक मामककुलदैवतं त्वमेवासि ।
कामितदानधुरीणः कलौ युगे न त्वदन्योऽस्ति ॥ २२४ ॥

पद्मालयासहायं मदीयचेतश्चकोरपूर्णेन्दुम् ।
मङ्गलमूर्तिं वेङ्कटशृङ्गालयमीशमाकलये ॥ २२५ ॥

राकाशशाङ्कवदनं राक्षसमथनं कृपासदनम् ।
सौन्दर्यविजितमदनं सौगुण्यैकतानमहमीडे ॥ २२६ ॥

श्रीशेषशैलवासी श्रियःपतिर्नः श्रियं दिशतु ।
स्वाश्रितजनचिन्तामणिरखिलात्मैवाश्रयोऽस्माकम् ॥ २२७ ॥

अथ मम किंचनमघकृतमशक्तमज्ञं त्वमेव मां वेत्सि ।
सर्वज्ञ सर्वशक्ते सर्वेश्वर वेङ्कटेश परिपाहि ॥ २२८ ॥

वेङ्कटनाथो भगवान् वेदस्तुतवैभवो धवोऽस्माकम् ।
वितरतु वित्तानि मुहुः प्रतिदिनमक्षीणभोगभाग्यानि ॥ २२९ ॥

आपन्निवारको नः कोऽपि पुमान् वेङ्कटाद्रिकृतवासः ।
विजयति देवशिखामणिरोजस्वी रक्षको जगताम् ॥ २३० ॥

शेषाद्रिशिखरधामा दोषान् स्पृष्टप्रशस्तगुणभूमा ।
श्रीवेङ्कटेशनामा श्रियःपतिर्मद्गुरुश्च तन्नामा ॥ २३१ ॥

योगारूढो भगवान् भोगीन्द्रगिरौ च तिन्त्रिणीमूले ।
वल्मीकाभिव्यक्तो विराजते वेङ्कटेशाख्यः ॥ २३२ ॥

अन्वहमभिषिञ्चन्तीं क्षीरं वल्मीकमूर्ध्नि गां विष्णुः ।
त्रातुं दधौ जिघांसोर्गोपस्य कुठारघातमन्तःस्थम् ॥ २३३ ॥

कुपितस्य गोजिघांसोः कुठारघातं वहन् मूर्ध्ना ।
तद्व्रणशामकमौषधमीशः शेषाचले निषन्नस्ति ॥ २३४ ॥

सुरवरवन्दितचरणं करदायिषु सज्जनेषु सादरणम् ।
वरवेङ्कटगिरिशरणं परमं ज्योतिः सदास्तु मे शरणम् ॥ २३५ ॥

पुरुषायास्तु परस्मै पुरातनाय प्रपञ्चलीलाय ।
पुरुहूतादिभिरमरैः पुरस्कृताय प्रणामोऽयम् ॥ २३६ ॥

वेङ्कटरमणाय नमः संकटहरणाय साधुशरणाय ।
शङ्खसाङ्खघनसाराङ्कितवपुषे रमाविहारजुषे ॥ २३७ ॥

वरिवस्ये वेङ्कटगिरिशरणं करुणालुमिन्दिरारमणम् ।
हरिमखिललोकरक्षणधुरीणमाम्नायमस्तकाभरणम् ॥ २३८ ॥

वृन्दारकगणवन्दितमिन्दीवरसुन्दरं दरस्मेरम् ।
वन्दे वेङ्कटभूभृन्मन्दिरमानन्दवल्लरीकन्दम् ॥ २३९ ॥

अतसीसुमसंकाशं शतमखमुख्यामरव्रजाधीशम् ।
कृतदुष्टदनुजनाशं सततं श्रीवेङ्कटेशमहमीडे ॥ २४० ॥

पद्मावतीविवाहे पद्मधनर्णं कुबेरतः कृत्वा ।
पद्मद्वयधनकाङ्क्षी सद्मनि शेषाद्रिगे हरिर्वसति ॥ २४१ ॥

क्रीत्वा वराहदत्तं क्षेत्रं वित्तेन शेषगिरिमौलौ ।
प्रणयकुपितेन्दिरायाः प्रसादनार्थी हरिः कलौ वसति ॥ २४२ ॥

भृगुमुनिपदहतिधूसरभगवत्तनुसङ्गमाक्षिपन्तीव ।
प्रणयकुपितेन्दिरासीन्मङ्गाम्बा शेषभूभृतो निकटे ॥ २४३ ॥

आकाशराजतनयामाकाङ्क्षन् वेङ्कटाचले विष्णुः ।
मृगयामटन्नवाप प्राक् पद्मां प्रणयकोपतद्रूपाम् ॥ २४४ ॥

वेङ्कटभूधरशिखरप्राङ्गणभुवि तिन्त्रिणीमूले ।
भक्तावनाय भगवान् व्यक्ताकृतिरस्य वसति वल्मीके ॥ २४५ ॥

शम्पासनाभिचेलं संपादितसर्वभक्तसाफल्यम् ।
तं पालकं त्रिजगतां चम्पासमनासमाश्रये देवम् ॥ २४६ ॥

अञ्जनगिरिकृतवसतिं रञ्जकमखिलस्य भक्तलोकस्य ।
कुञ्जरवरदं कलये कंजदृशं वेङ्कटेशमिष्टाप्त्यै ॥ २४७ ॥

का नाम देवतान्या मानावनदीक्षितास्माकम् ।
दीनानाथशरण्यं ज्ञानानन्दात्मकं हरिं त्यक्त्वा ॥ २४८ ॥

कलशातपत्रकेतनकुलिशाङ्कुशचक्रपद्मरेखाभिः ।
विलसत्कराब्जमीडे कुलदैवं वेङ्कटाद्रिकृतवासम् ॥ २४९ ॥

वस्त्वस्त्यनन्तभूभृन्मस्तकवसतिप्रदर्शिताकारम् ।
स्वस्त्ययनं साधूनामस्तमिताज्ञानमस्मदाराध्यम् ॥ २५० ॥

वेङ्कटमहीध्रमौलौ व्यक्तं शिवलिङ्गमर्चयन् स्कन्दः ।
विष्णुत्वमेत्य तत्फलविशेषयोगेन वैष्णवेशोऽभूत् ॥ २५१ ॥

कलिकालेऽपि कलाभिः कलितः षड्भिः कुमारस्य ।
कमलापतेश्च दशभिः कल्याणं वेङ्कटेश्वरः कुरुते ॥ २५२ ॥

वेमिति कलिमलमखिलं कटतीति दहत्यसौ स्कन्दः ।
वेङ्कटसुब्रह्मण्यं तं वन्दे यत्र वैष्णवं धाम ॥ २५३ ॥

शिवलिङ्गार्चनसुकृतं भवति हि विष्णुत्वसाधकं जन्तोः ।
वेङ्कटसुब्रह्मण्यो विष्णुर्भवितैष विष्णुकल्पान्ते ॥ २५४ ॥

नीलघनरुचिरगात्रं निरुपमविश्वातिशायिचारित्रम् ।
लक्ष्मीकटाक्षपात्रं लक्ष्यं भक्तैर्महोऽस्ति सुपवित्रम् ॥ २५५ ॥

वस्त्वस्ति शेषशैले वरदाभयशङ्खचक्रशयशोभि ।
विश्वामरगणमुख्यं विख्यातं वेङ्कटेशाख्यम् ॥ २५६ ॥

रमते रमया साकं रमणः सर्वप्रपञ्चस्य ।
कमलाक्षः शेषाद्रौ शमयन्नंहांसि भक्तानाम् ॥ २५७ ॥

ओं तत् सदिति पदैर्यत् सततं निर्दिश्यते परं ब्रह्म ।
सत्यं तच्चैतन्यं नित्यं श्रीवेङ्कटेशरूपं हि ॥ २५८ ॥

प्राणिष्वव्याजकृतं वाणीपतिपितरमच्युतमनादिम् ।
पूर्णशशिवक्त्रमनिशं पूर्णगुणं श्रीनिवासमहमीडे ॥ २५९ ॥

यद्विषयाज्ञानभवं यत्राध्यस्तं जगन्मिथ्या ।
यज्ज्ञानेन तदेकं सत्यं वस्त्वस्ति वेङ्कटेशाख्यम् ॥ २६० ॥

ब्रह्मैवेश्वरसंज्ञं स्वमायया वेङ्कटेशाख्यम् ।
रक्षत्यात्मविद्याप्रतिबिम्बितजीवकोटिमपि कृपया ॥ २६१ ॥

अत्र खलु प्रत्यक्षं शेषाद्रौ श्रीनिवासाख्यम् ।
प्रार्थितदानवरिष्ठं सदयं भक्तेषु सर्वदा दैवम् ॥ २६२ ॥

मङ्गलदेवी महिषी यत्पुत्रस्ते पितामहो जगतः ।
आयुधमपि च सुदर्शनमत्यधिकं वेङ्कटेश साम्राज्यम् ॥ २६३ ॥

विद्याधिदेवता ते स्नुषा त्वदीयान् गुणान् परं स्तौति ।
वागात्मना त्वमेव स्वात्मानं स्तौषि वेङ्कटाद्रीश ॥ २६४ ॥

विश्वासरूपिणस्ते वेदास्त्वय्येव नित्यमनुरक्ताः ।
सारस्वतसर्वस्वं त्वदेकफलकं हि शेषगिरिनाथ ॥ २६५ ॥

शेषगिरीशं स्तोतुं शेषो नालं सहस्रवदनोऽपि ।
आजन्मसिद्धजडिमा किमुताहं शुकवदत्र किं वच्मि ॥ २६६ ॥

नाहं वदामि वचनं वाचयिता वेङ्कटेश्वरो वसति ।
हृदये सदयः सततं मदागसो नावकाशलेशोऽपि ॥ २६७ ॥

जय जय निजचिच्छक्तिप्रतिबिम्बितविविधलोकविश्वात्मन् ।
श्रीवेङ्कटेश भगवञ्छ्रितजनसंरक्षक स्वामिन् ॥ २६८ ॥

शेषगिरीश्वर तावककल्याणगुणाः कथं नु गण्याः स्युः ।
यदि शेषिताखिलानां जीवानामप्यशेषाणाम् ॥ २६९ ॥

वेङ्कटरमणो भगवान् वेत्ति मदीयाधमर्णताखेदम् ।
वितरति वित्तं कृपया विष्णुर्विख्यातभक्तजीवातुः ॥ २७० ॥

भक्तेभ्यस्त्वमभीष्टं भगवन् यदि न दिशसि त्वमीशोऽपि ।
तावकनिर्व्याजकृपा कां कीर्तिं प्राप्नुयाद् दत्त्वा ॥ २७१ ॥

विष्णुः परम इति श्रुतिरूचे यत्परेषां ते ।
दत्त्वा च मां परेभ्यः परमोऽसि त्वं कथं नु तद् भगवन् ॥ २७२ ॥

कारयसि त्वमृणार्णं तस्य निवृत्तौ धनानि दापयसि ।
श्रीवेङ्कटेश भगवन्नानृण्यं त्वत्प्रसादिनो भविता ॥ २७३ ॥

निजतनुवनितात्मजगृहधनमुख्यं यन्ममेति सर्वस्वम् ।
श्रीवेङ्कटेश भगवंस्तवैव चाहं द्वितीयोऽस्मि ॥ २७४ ॥

त्वद्भक्तं मन्वानानामस्माकं विवेकविधुराणाम् ।
त्वन्नामस्मरणवतां मानच्युतिमीक्षसे कथं विष्णो ॥ २७५ ॥

धनलाभस्यापायं किंचित् संदर्श्य कृच्छ्रमघहेतुम् ।
तत्रापि भयमलाभं किं मे दर्शयसि वेङ्कटाद्रीश ॥ २७६ ॥

इत्थं करोषि चेदहमधमर्णत्वं कथं निराकुर्याम् ।
भीतोऽस्म्यभयं याचे त्वामेव श्रीनिवास तद् देहि ॥ २७७ ॥

वनितात्मजादिनिजजनसहवासं काङ्क्षतः प्रभो यन्मे ।
आकारयितुं तानिह धनदौर्लभ्यं करोषि किं श्रीश ॥ २७८ ॥

हर मे मनांसि कर्तुं रयेन यायान्नरोऽद्य शेषाद्रिम् ।
येन श्रीहरिदर्शननमस्क्रियादौ यथेच्छलाभः स्यात् ॥ २७९ ॥

श्रीमन्नद्य हि जगतां निवास शेषाद्रिवास गोविन्द ।
मा मतिदीनं कृपया पाहि प्रतिपन्थिशमनमाकलयन् ॥ २८० ॥

शशिरविलोचन माधव परमेश्वर ते जगत्पते यदहम् ।
वेङ्कटरमण श्रीमन् जय विष्णो श्रीनिवास भो भगवन् ॥ २८१

पन्नगराड्गिरिमस्तकमन्दिरवासिप्रपन्नसौभाग्यम् ।
चिन्मयरूपं तेजश्चित्ते नित्यं चिरंतनं मेऽस्तु ॥ २८२ ॥

अन्नमयाद्यावरणैः पञ्चभिरत्यादरोपगूढधनम् ।
श्रीवेङ्कटेशरत्नं स्वात्माख्यं पूर्णमस्म्यतोऽस्मि धनी ॥ २८३ ॥

सुखतरमखिलसुखानां ज्ञानानामुत्तमं ज्ञानम् ।
सत्यानामपि सत्यं स्वं मे वस्त्वस्ति वेङ्कटेशाख्यम् ॥ २८४ ॥

[उप्त्वा बीजं वेङ्कटनाथः संवित्फलानि संतनुते ।
श्रीवेङ्कटाचलपते श्रीमन्तं त्वां भजामि गोविन्दम् ॥ २८५ ॥]

निजभक्तलोकमानससुक्षेत्रेऽत्यर्थसुप्रसादाख्यम् ।
उप्त्वा बीजं वेङ्कटनाथः संवित्फलानि संतनुते ॥ २८६ ॥

श्रीवेङ्कटाचलपते श्रीमन्तं त्वां भजानि गोविन्दम् ।
स्वामिन् प्रयच्छ कृपया मह्यमुदारां मनोरथावाप्तिम् ॥ २८७ ॥

शेषगिरिनाथ तावकचरणयुगालम्बिशेमुषीयोगात् ।
निःशेषितदोषोऽहं तोषं यास्यामि ते कृपया ॥ २८८ ॥

श्रीवेङ्कटाचलेश्वर तावकशक्तिः समस्तजीवेषु ।
आनन्दचिद्घनाख्या स्वानुभवे भाति तामहं कलये ॥ २८९ ॥

शेषगिरीशपदाम्बुजशेखरितात्माश्रितः सौख्यम् ।
संवित्सत्तारूपं सौवर्गं याति सर्वदा साक्षात् ॥ २९० ॥

करवाणि वेङ्कटेश्वरचरणं शरणं समस्तजीवानाम् ।
दुरितनिवारणनिपुणं दूरीकृतदुःखमस्मदादरणम् ॥ २९१ ॥

श्रीवेङ्कटेश भगवन् श्रितजनचिन्तामणे जय श्रीमन् ।
मां पाहि सत्यभूमन् मुकुन्द विश्वात्मक स्वामिन् ॥ २९२ ॥

आवासं करुणाया अधिभूमिं सर्वसुगुणततेः ।
आनन्दबोधमन्दिरमालम्बे वेङ्कटाद्रीशम् ॥ २९३ ॥

गौरिव वत्सं भगवन् गोविन्द श्रीनिवास मामद्य ।
तावककरुणामृतरसतरङ्गिणी वेङ्कटेश तर्पयतु ॥ २९४ ॥

कमनः कमलभवायाः शमनः संसारघोरतापानाम् ।
दमनो दुरात्मनामपि सुमनःसेव्योऽस्ति वेङ्कटाद्रीशः ॥ २९५ ॥

वेङ्कटशैलनिवेशे विजयति विश्वावने श्रीशे ।
भक्तजनानां भद्रं निरुपद्रवमेव भवति निर्निद्रे ॥ २९६ ॥

वितरसि वित्तं विष्णो वेङ्कटनाथ श्रियःपते मह्यम् ।
योगक्षेमौ वहसे योगीश्वर मे त्वदाश्रितस्य सदा ॥ २९७ ॥

विधिमिह विधेरपि त्वां विद्मः श्रीवेङ्कटेश वरदं नः ।
विज्ञातसर्वतत्त्वं विज्ञानानन्दसत्यभूमानम् ॥ २९८ ॥

हरिरवतु वेङ्कटाचलशरणः सर्वार्थवर्गनुतचरणः ।
असमानुदारकरुणः कल्याणगुणो रमारमणः ॥ २९९ ॥

कमलानाथ कटाक्षान् कलयेऽहं कल्पपादपसदृक्षान् ।
दुर्जनशिक्षणदक्षान् सज्जनसंरक्षणैकदीक्षांश्च ॥ ३०० ॥

श्रीवेङ्कटाचलपते वेङ्कटमचलं पतिं च त्वाम् ।
श्रीमन्तमपि पुराणान्याहुस्त्वं विजयसे विराण्मूर्तिः ॥ ३०१ ॥

मन्तुसहस्रं कृतवत्यन्तो मयि पातकस्य नैवास्ति ।
क्षन्तव्योऽस्मि त्वां श्रीकान्तं सेवे फणाभृदद्रीशम् ॥ ३०२ ॥

निजचरणाश्रितजनतावननिरतां देवतां भजे कांचित् ।
श्रीवेङ्कटेश्वराख्यां श्रीमन्तो यत्प्रसादिनो मनुजाः ॥ ३०३ ॥

कलिकलुषतारकं ते कलये कल्याणगुणनिधे भगवन् ।
श्रीवेङ्कटेश्वरेति च नामामृततुल्यमेव जिह्वायाम् ॥ ३०४ ॥

कटुम्ललवणरसमयकरालनरसिंहदुःसहाकार ।
श्रीवेङ्कटाचलपते क्रोधमयस्त्वं कथं नु सत्सेव्यः ॥ ३०५ ॥

क्षुत्क्षामं त्वां सेवे क्षुत्क्षामोऽहं ततोऽभवं खिन्नः ।
सर्वाधारगतात् ते वेङ्कटरमणस्य दुःखिता न कुतः ॥ ३०६ ॥

लक्ष्मीपतिरिति नामानर्थं तव येन भक्तलोकस्य ।
दिशसि त्वं भिक्षुकतां तद्वित्तं प्राप्य वेङ्कटाद्रीश ॥ ३०७ ॥

भक्तजनदत्तवित्तं प्रतिगृह्य न लज्जसे कथं श्रीमन् ।
दीनेषु तेषु खिद्यत्स्वपि ते न दया फणीन्द्रगिरिराज ॥ ३०८ ॥

वित्ताशया करं ते दातुं संकल्प्य कंचिदथ दत्त्वा ।
रिक्तस्त्वत्तस्तदृणं खिद्यति लब्ध्वा फणाभृदद्रीश ॥ ३०९ ॥

तव किल सर्वं वित्तं त्वद्भक्तस्यास्ति किंनु तद्भिन्नम् ।
निःस्वः किं वा दद्यात् करदानं वेङ्कटेश कथयस्व ॥ ३१० ॥

स्वत्वमथारोप्यात्मन्यभिमानी तत्प्रयुक्तसंकल्पैः ।
क्लिश्यति भक्तस्तद्भ्रमनिवृत्तये वेङ्कटेश तत् कुरुषे ॥ ३११ ॥

पालयितुमेनमीदृशमसमर्थश्चेज्जगत्पते दीनान् ।
कथमिह सर्वानवसि श्रीवेङ्कटशैलनाथ किमशक्तः ॥ ३१२ ॥

भ्राम्यत एव हि जीवान् योनिष्वपि चतुरशीतिलक्षासु ।
सर्वांस्त्वमेव पालयसीत्याहुर्वेङ्कटेश वेदान्ताः ॥ ३१३ ॥

पालनशक्तिसमेतस्त्वमिमं दीनं कथं न पालयसे ।
शक्तेः संकोचो वा त्वं वाप्यलसोऽसि वेङ्कटाद्रीश ॥ ३१४ ॥

अथवा निर्घृणता ते लौभ्यं दृप्तत्वमनभिमानित्वम् ।
दोषा एते त्वयि किं सन्ति वद श्रीनिवास किं ब्रूषे ॥ ३१५ ॥

श्रीमद्वेङ्कटगिरिवरधामानं चित्सुखैकभूमानम् ।
कामितदानधुरीणं कलये कल्याणकल्पतरुमीशम् ॥ ३१६ ॥

वन्दे वेङ्कटनायकसुन्दरचरणारविन्दयोर्द्वन्द्वम् ।
अद्वन्द्वमखिलसंसृतिनिर्द्वन्द्वं द्वन्द्वदुःखपरिहरणम् ॥ ३१७ ॥

शेषिञ्छेषमहीभृति शेषे त्वमशेषवन्द्यचरणोऽसि ।
पेषय मदीयपापं शोषय दुःखार्णवं च जगदीश ॥ ३१८ ॥

दक्षिणनयनं विष्णोर्दूरे तमसां निरस्तदुरितं च ।
आरोग्यदायि कलये वेङ्कटरमणस्य वाञ्छितावाप्त्यै ॥ ३१९ ॥

दीनानाथशरण्यं देवं श्रीवेङ्कटेशमहमीडे ।
दुरिततिमिरौघमिहिरं दूरीकृतदुःखमखिलशुभनिलयम् ॥ ३२० ॥

व्याधिव्यालसुपर्णं सुपर्णवाहं च वेङ्कटाद्रीशम् ।
कलये कमपि रमेशं कलिकलुषहरं कृपापूरम् ॥ ३२१ ॥

भुङ्क्ते ब्रह्मक्षत्राद्यखिलजगत्कबलमेकमिव देवः ।
उपदंशीकृतमृत्युः स त्वं श्रीवेङ्कटेश मां पाहि ॥ ३२२ ॥

आदित्यान्तर्वर्तिज्योतिर्मूर्तिर्हिरण्मयः पुरुषः ।
चक्षुःप्रकाशकस्त्वं जगतश्चक्षुश्च वेङ्कटाद्रीश ॥ ३२३ ॥

त्वं दहरपुण्डरीके क्षेत्रे क्षेत्रे विभासि सूक्ष्मायाः ।
दीपशिखाया मध्ये परमात्मा वेङ्कटाद्रीश ॥ ३२४ ॥

श्रोतव्यस्त्वं श्रोता श्रवणमपि श्रीपते त्वमेवेति ।
श्रुतिराह वेङ्कटाद्रौ श्रोतार्थं त्वां प्रपद्येऽहम् ॥ ३२५ ॥

वक्ता वाग् वक्तव्यो वाचयिता वेङ्कटेश्वरो नान्यः ।
वचसामभूमिरस्य प्रभोर्हि महिमा गतिः स मे देवः ॥ ३२६ ॥

त्वामप्राप्य वचांसि श्रौतान्यपि यन्निवर्तन्ते ।
सह मनसा वेङ्कटगिरिनाथ कथं गोचरोऽसि मद्वचसाम् ॥ ३२७

दृश्यं द्रष्टा दृष्टिस्त्वमेव यत् सकलजगदधिष्ठानम् ।
सत्यं चित्सुखरूपं वेङ्कटराट् त्वां कथं नु पश्यामि ॥ ३२८ ॥

आधिव्याधिनिवारणमापन्नत्राणमार्तिसंहरणम् ।
वन्दे वेङ्कटरमणं विश्वामरवन्द्यचरणमुरुकरुणम् ॥ ३२९ ॥

निजचरणभक्तरक्षणनिपुणोऽयं वेङ्कटाद्रिकृतशरणः ।
नित्यानपायकरुणः कमलारमणः करोतु कल्याणम् ॥ ३३० ॥

वरदरचक्राभयकरमरविन्दाक्षं परात्परं वस्तु ।
करुणैकतानमाश्रितभरणधुरीणं भजे हरिं भक्त्या ॥ ३३१ ॥

वेङ्कटशैलविहारी वेत्ति नराणां मनोगतं सकलम् ।
देवः स एव भगवान् भावं सफलीकरोतु मे कृपया ॥ ३३२ ॥

स्रष्टा जगतां स्रष्टुः पालयिता पालकानां च ।
हन्तॄणामपि हन्ता हरे त्वमेवासि वेङ्कटाद्रीश ॥ ३३३ ॥

भगवन् वेङ्कटनाथ त्वदाज्ञया वाति वायुरादित्यः ।
अम्बरचरो विभाति त्वत्तो मृत्युर्बिभेति धावति च ॥ ३३४ ॥

वन्दे वेङ्कटनाथं सकलबुधाश्रेयपादपद्मं यम् ।
आराध्य भक्तिभरिता राजन्ते देवमानिताः काले ॥ ३३५ ॥

त्वत्पदपङ्कजहंसायितचित्तमिमं जनं कृपाजलधे ।
मां पाहि संततं त्वं भक्तानां क्षेमदानकृतदीक्ष ॥ ३३६ ॥

ओं तत्सदिति यदुक्तं ब्रह्म श्रीवेङ्कटाद्रिगं ध्याये ।
तस्मात् सर्वोपास्यं सर्वज्ञं सर्वपूर्णमात्मानम् ॥ ३३७ ॥

श्रीवेङ्कटेशमङ्गलमूर्तिध्यानं जनस्य विमलदृशः ।
सर्वं श्रीविष्णुमयं भाति चिदानन्दरूपमहमेव ॥ ३३८ ॥

यमयत्यन्तर्यामी मदन्तरङ्गं यथा यथान्तःस्थः ।
कलये तथैव कर्ता वेङ्कटगिरिनायको नाहम् ॥ ३३९ ॥

देहदृशा जातोऽहं जीवदृशा वेङ्कटेशांशः ।
आत्मदृशैव तु सोऽहं प्रत्यग्ब्रह्माद्वयानन्दः ॥ ३४० ॥

श्रीवेङ्कटेशकृपया श्रीमत्स्वखिलेषु भक्तवर्गेषु ।
कश्चित् तत्त्वं बुद्ध्वा सत्तामात्रो निरञ्जनो भवति ॥ ३४१ ॥

अभयममृतं प्रपद्य ब्रह्माकारान्तरङ्गवृत्तिर्यः ।
निर्द्वन्द्वः सुखसंपत्सत्तामात्रो भवेद् विष्णुः ॥ ३४२ ॥

नित्यं शुद्धं बुद्धं शान्तं शिवमव्ययं चिदानन्दम् ।
पूर्णं ब्रह्माहमहं ब्रह्म श्रीवेङ्कटेशपदलक्ष्यम् ॥ ३४३ ॥

भावानाद्यज्ञानद्वैतध्वान्तप्रमापणादित्यान् ।
भगवत्पादकटाक्षान् कलये कल्याणकल्पवृक्षांश्च ॥ ३४४ ॥

जयति ब्रह्मानावृतचिदखण्डरसं जगद् यत्र ।
अस्तीव वेङ्कटेश्वरपदलक्ष्ये भाति लीयते तत्र ॥ ३४५ ॥

वेदान्तसारभूतैस्तत्त्वमसीत्यादिकैर्महावाक्यैः ।
श्रीमच्छंकरभगवच्चरणोक्तार्थैः प्रबोधितः सोऽस्मि ॥ ३४६ ॥

**सुब्रह्मण्य**मुखोद्गतसिद्धान्तार्थस्तुतिं विष्णोः ।
पठतां पापनिवृत्तिः फलमभिलषितं भवेत् सत्यम् ॥ ३४७ ॥

इति श्रीतत्त्वार्थसारावलिः समाप्ता

# ६०. तुरगशतकम्[1]

कुट्टिकविविरचितम्

चलत्प्रोथप्रान्तं चटुनटदुदग्राग्रचरणं
मुहुर्हुंकाराञ्चन्मुखगलितफेनस्तबकितम् ।
खलीनाभुग्नास्यं खमिव निगिलन्तं निजजवात्
तुषाराद्रिप्रोत्तुङ्गं तुरगवरमारोहति हरिः ॥ १ ॥

अथ कथमपि सोढुं रङ्गनाथस्य रिङ्खत्-
तुरगखुरनिपातानक्षमेव क्षमेयम् ।
अविरलबहुलोद्यन्मांसलोत्तालधूली-
पटलकपटतः खं लक्ष्यते धावमाना ॥ २ ॥

विचरति परिवीथि रङ्गनाथे हयमधिरुह्य खुरक्षतावनीकम् ।
सपदि वियदवेक्ष्य रेणुसान्द्रं चकितमनोभिरभावि चक्रवाकैः

पटुतरखुरकोटिक्षुण्णपृथ्वीतलोद्यत्-
प्रसृमरघनरेणुव्याप्तरोदोऽन्तरालम् ।
हयवरमधिरूढो वीक्षते वक्षसि द्राग्
जनकविलयभीतामङ्गनां रङ्गनाथः ॥ ४ ॥

स्वामिन् रङ्गविभो जगत्त्रयपरित्राणाय बद्धादर
ब्रूमः किं भुवनस्वतन्त्र भवतो लीलाविहारक्रमम् ।

[1] Edited from the MS. No. TR. 319 (described in D. C. of Kāvya MSS., vol. V, No. 518). Although the title and colophon have it as a *śataka* (100 verses) there are only 50 verses.

धाटीकौतुकिनि त्वयि श्रितवति त्वङ्गत्तुरङ्गोत्तमं
व्योम क्ष्मातलतां दधाति रजसा क्षुण्णा क्षितिर्व्योमताम् ॥ ५ ॥

त्वद्धाटीपटुघोटनिष्ठुरखुरप्रत्यग्रटङ्कत्रुटत्-
पृथ्वीनिर्यदवार्यरेणुपटले द्रागुज्जिहाने दिवम् ।
स्त्रैणं सर्वसुपर्वणां घटगतं मन्दाकिनीयं पयः
कृच्छ्रादच्छयितुं चिराय कतकक्षोदेषु संनह्यति ॥ ६ ॥

त्वङ्गत्तुङ्गतुरङ्गनिष्ठुरखुरक्षुण्णक्षमामण्डली-
धूलीभिर्भुवनोदरं स्थगयति श्रीरङ्गनाथ त्वयि ।
बाधिर्यं भुजगाधिपः सुरपतिस्त्वान्ध्यं रविः पङ्गुतां
मूकत्वं जलधिः प्रयाति भगवन् को न्वेष लीलाक्रमः ॥ ७ ॥

रङ्गेशे सहसाधितिष्ठति जवं तुङ्गं तुरङ्गोत्तम
धूलीपालिषु जृम्भितासु परितोऽप्यन्यत् किमाचक्ष्महे ।
नद्यो बिभ्यति लज्जते वसुमती पद्मा परं खिद्यते
शंभुः कुप्यति च प्रयाति वरुणो वस्तुं च वास्त्वन्तरम् ॥ ८ ॥

रङ्गेशतुङ्गतुरगोदितरेणुबृन्दे-
मन्दाकिनीपयसि पङ्किलतां दधाने ।
तत्संभवानि कमलान्यपि पङ्कजाख्यां
मन्ये चिराय दधते किल योगरूढाम् ॥ ९ ॥

पुर्यामद्भुतभोगसीम्नि भवतो रङ्गप्रभो वासिनां
देवानामविरूपवैभवगुणैः किंचिन्न वीक्षेऽन्तरम् ।
देवा नैव महीं स्पृशन्ति पुनरित्येको विशेषो यदि
त्वद्धाटीतुरगोत्थरेणुनिबिडस्ववासिनस्तेऽप्यहो ॥ १० ॥

रङ्गेशस्य विहारसीमसु वलज्जङ्घालतुङ्गाश्वराड्-
वेगोदग्रखुराग्रचूर्णितधराधूलीकदम्बेऽम्बरे ।
संध्याभ्रभ्रमतः सचन्द्रकशिखौ चञ्चत्कलापाञ्चितौ
सोत्कण्ठं किल ताण्डवं कलयतो द्राङ्नीलकण्ठौ क्षणम् ॥ ११ ॥

श्रीरङ्गेशतुरङ्गमस्य महतो धाव्यारभटयुच्चलत्-
पादाघातमहाजवार्तिमतुलां प्राप्ता धरामण्डली ।
आपातालनिपातखातविवरप्रोद्यत्फणिग्रामणी-
रत्नश्रेणिरुचां भरैः सरुधिरस्यन्देव संदृश्यते ॥ १२ ॥

हेषाभिर्बधिरीकृतत्रिभुवनं पादाग्रवज्राहति-
प्रोड्डीनक्षितिमण्डलं हयवरं देवे समारोहति ।
अद्योद्ग्रीविकया चिराद् विदधते दिक्कुम्भिकुम्भीनस-
ग्रामण्यादिमपोत्रिकूर्मपतयो विश्रान्तितः फूत्कृतिम् ॥ १३ ॥

आ पातालतलादहीश्वरशिरोरत्नांशुनीराजिता-
दा विष्यण्डकरण्डभित्तिशिखरादच्छाम्बुसंप्लावितात् ।
राकाकाशमथान्यशेषभुवनान्यन्तर्धिनिर्भेदनात्
सद्यः कर्तुमना इवाद्य तुरगो निर्याति रङ्गेशितुः ॥ १४ ॥

रुद्ध्वा दिग्वलभीर्जगत्त्रयमभिव्याप्योर्ध्वमुज्जृम्भिते
रङ्गेशस्य तुरङ्गधावनसमुद्भूते रजोमण्डले ।
आबध्नन् सनकादयो मुनिगणाः पुस्तान्यदृष्टाक्षरा-
ण्याधुन्वन्नुदतिष्ठदात्तकलशः स्वीयां ब्रसीमब्जभूः ॥ १५ ॥

रंहःसंहृततार्क्ष्यमारुतमनोगर्वेऽध्वर[त्ने सुखं]
स्थित्वा खेलति रङ्गधामनि विभौ क्षोणी समालक्ष्यते ।

हेषाघोषविशेषजर्झरजरद्ब्रह्माण्डखण्डं जवा-
दुच्चैर्धर्तुमुदस्तहस्तयुगलेवोत्तालधूलीमिषात् ॥ १६ ॥

धाटीमाटीकमाने दृढधरणिहतिप्रौढवाहाधिरूढे
रङ्गेन्द्रे सान्द्रसान्द्रं वियति विसृमरापारपांसुच्छटानाम् ।
सेवाहेवाकदेवावलिबलिनिबिडोदस्तकल्पप्रसून-
स्रस्तस्फायत्परागैः क्षणमजनि किलान्योन्यसंघर्षयोगः ॥ १७ ॥

श्रीरङ्गेश्वर तावकाश्वचरणन्यासाहतोर्वीतल-
प्रोद्यन्मांसलपांसुबन्धनिबिडं वीक्ष्यान्तरिक्षं क्षणम् ।
वप्राघातकृताग्रहं नियमयत्यालग्नकुम्भं वल-
च्छुण्डामण्डलमङ्कुशेन हि निजं वेतण्डमाखण्डलः ॥ १८ ॥

रिङ्खत्तुङ्गतुरङ्गवङ्गिवपुषो धाटीषु रङ्गेशितु-
र्नीरन्ध्रोद्गतरेणुबन्धनिबिडाभोगे नभःप्राङ्गणे ।
सर्वस्वर्वनिताविमुक्तसुमनोमाध्वीकजम्बालिते
मन्दं वाहयते रथं दिनपतेर्मग्नप्रथिं सारथिः ॥ १९ ॥

विहृतिपरान्तरङ्गवति रङ्गपतौ [भुवने]
चतुरतुरङ्गचङ्क्रमणमत्र तरङ्गयति ।
अजनि रसातलं बत रसा तरसा वियद-
प्यवनितटीसमस्थितिमटीकत रेणुभरैः ॥ २० ॥

धाटीजातकुतूहलाकुलधियः श्रीरङ्गधाम्नः प्रभो-
रुद्यद्बन्धुरगन्धसैन्धवखुराघातक्षतैरङ्किता ।
आक्रन्दाय वसुंधराद्य नितरामारं कुमारं निजं
द्रष्टुं निर्भरपांसुबन्धमिषतो नूनं दिवं धावति ॥ २१ ॥

चतुरतुरगारूढं त्रैलोक्यमोहनमात्मनो
रमणमवनी दृष्ट्वा दृष्ट्वाद्य रङ्गमहीपतिम् ।
प्रतिकलमपि प्रोद्दामोद्यत्परागभरच्छला-
दजनि विपुलानन्दादापूर्यमाणतनूरिव ॥ २२ ॥

धाटीषु रङ्गपतिना पटु धावितस्य वाहोत्तमस्य खुरजृम्भितधूलिपालिः ।
रङ्गस्थलीनटनकौतुकिमुक्तिनट्या नेपथ्यकल्पिततिरस्करिणीव भाति ॥२३॥

अध्यम्भोनिध्यमन्दभ्रमणखगपतिव्याकुलाहीश्वराणि
क्षुत्क्षामक्रन्ददाशाकरटिमधुकराण्युत्पिपासापराणि ।
प्रम्लानाम्भोरुहाणि द्रुतगतितुरगारोहिणो रङ्गभर्तु-
र्धाटीकाले जयन्ति क्षितिजनितरजोमण्डलोज्जृम्भितानि ॥ २४ ॥

आरूढस्तुरगं हरिर्वसुमतीचूर्णीकृतिप्रक्रिया-
विक्रान्तं शयनालयस्य सहसाशास्ते शिवं चेतसा ।
गौष्ठीनस्य महानसस्य विलयत्रस्ते सुराणां गणे
गङ्गा प्रार्थयते च कर्णगतयोस्ताटङ्कयोर्मङ्गलम् ॥ २५ ॥

दिङ्मण्डलीमथ नभश्च सचन्द्रसूर्यं
हन्त क्षणात् कबलयन्निव रङ्गभर्तुः ।
धाटीषु सत्वरतुरङ्गरजःसमूहः
पातुं च सप्तजलधीनुपधावतीव ॥ २६ ॥

धाटीधावितरङ्गराजतुरगव्याधूतधूलीभरैः
सान्द्रे मन्दरुचिः प्रदीपति रविः सौवर्गमार्गान्तरे ।
किं चोदञ्चितकौतुकं विचरतां वैमानिकानां रथा
विद्योतैः क्षणदर्शितैर्विदधते खद्योतलीलायितम् ॥ २७ ॥

रङ्गेशस्य हि गर्वपर्वतचरत्खर्वेतरार्वाधिप-
प्रेङ्खत्तिग्मखुराग्रविष्टधरणीपांसुच्छटाबन्धुरे ।
दृश्यन्ते गगनाङ्गणेऽद्य परितो नक्षत्रताराग्रहाः
प्रत्यग्रप्रविकीर्णतद्घनयशोबीजप्ररोहा इव ॥ २८ ॥

हरनगरुचिलेशस्तेयमाधाय सोऽयं
भुवनमखिलमुच्चैर्भासयन् भ्राम्यतीव ।
तुरगखुरजधूलीपालिरभ्युज्जिहीते
ग्रसितुमिव सरोषं मण्डलं चण्डभानोः ॥ २९ ॥

आलोक्यते तुरगरेणुकदम्बलक्ष्या
त्रैलोक्यमप्यभिविगाह्य विजृम्भमाणा ।
पादत्रयीमितजगत्त्रयमात्मनाथं
प्रायोऽनुकर्तुमभिलाषवतीव पृथ्वी ॥ ३० ॥

संदृश्यते तुरगवाहनसादरस्य रङ्गेशितुस्तुरगजृम्भितधूलिपालिः ।
सेवाजुषां भगवतो दययाधिरोढुं सोपानपद्धतिरिव त्रिदिवस्य बद्धा ॥ ३१ ॥

धाटीषु रङ्गाधिपतेर्धरित्री रजस्वलाभून्मलिनाम्बरा च ।
मन्ये ततः पांसुकदम्बदम्भान्मन्दाकिनीं स्नातुमभिप्रयाति ॥ ३२ ॥

तुरगखुरविधूतधूलिपाली निबिडतरा दिवि रङ्गनायकस्य ।
रविकिरणनिवारणाय पृथ्व्या विधृतमिवोपरि वीक्ष्यते वितानम् ॥ ३३ ॥

निर्मातुर्जगतां चराचरगुरोर्देवस्य सर्गक्रमे
पद्भ्यां भूमिरभूदिति श्रुतिरियं युक्तार्थमाह ध्रुवम् ।
रङ्गेशस्य तुरङ्गधूलिमिषतः संव्याप्तलोकत्रयी
शक्तिं कामपि येन कारणगुणाधीनां व्यनक्ति क्षितिः ॥ ३४ ॥

लोकासेचनकाकृतेर्भगवतो वीथीषु वीथीषु च
क्रीडत्प्रौढतुरङ्गचङ्क्रमकलाचातुर्यमालोकितुम् ।
आयाते द्युसदां गणे धुतरजोव्यूहौ विधीन्द्रौ परं
हंसैरावणपक्षकर्णपवनैः कृच्छ्राद् गतौ संनिधिम् ॥ ३५ ॥

कैलासाचलतुङ्गशृङ्गधवलस्वाङ्गं तुरङ्गाधिपं
प्रत्यारुह्य सुरूपधेयविभवे रङ्गेश्वरे खेलति ।
ऊर्ध्वोज्जृम्भितसान्द्ररेणुविहतालोकाश्चिरं मेदिनी-
वासाय स्पृहयन्ति वासवमुखा बर्हिर्मुखानां गणाः ॥ ३६ ॥

दिवि विसृमरशीलैर्देवदेवस्य धाटी-
चलितहयरजोभिश्छादिते पद्मबन्धौ ।
सपदि कृतनिरोधे संकुचन्नाभिपद्मे
मुखकमलमपश्यन्मुह्यतीवाब्जयोनिः ॥ ३७ ॥

रङ्गेशस्य हि घोटवर्तकसमुद्भूतस्त्रिलोकाङ्गणा-
भोगोल्लङ्घनसाहसीप्रचलितो यः सान्द्रधूलीभरः ।
तत्संदर्शनतर्षहर्षिदिविषद्गन्धर्वविद्याधरा-
मन्दानन्दभराश्रुवृष्टिभिरसौ खञ्जोऽजनिष्टाञ्जसा ॥ ३८ ॥

अव्यासुर्भुवनत्रयीं भगवतो देवस्य रङ्गेशितु-
र्लीलातुङ्गतुरङ्गरिङ्खणभवाः पुण्याः परागोद्भवाः ।
प्रत्युद्यत्कलिपङ्कहारिकनकक्षोदा विमुक्त्यङ्गना-
पिष्टाता भवदुष्टभूतसरयप्रोच्चाटना भूतयः ॥ ३९ ॥

आभाति रङ्गपतिघोटकफेनपुञ्ज-
संच्छन्नतत्खुरपदावलिमेदुरा भूः ।

क्षौमेण वल्लभसमागमसंभृतानि
संवृण्वतीव कुटिलानि नखक्षतानि ॥ ४० ॥

धाटीवेगार्भटीभिर्जितविहगपतिं कल्यपल्याणभूषं
वन्दे [श्रीरङ्ग-]देवाद्भुतपदकमलन्यासधन्यं तुरङ्गम्
सद्यो यद्वेगलेशं कमपि कथयितुं हन्त सोत्कण्ठकण्ठं
मूकं वा लोहलं वा मुखरयति नरं कापि साहित्यधाटी ॥ ४१ ॥

फूत्कुर्वत्फण्यधीशान्यतिचलितमहीभ्रान्त्युदस्ताम्बुधीनि
क्रींकुर्वद्दिग्गजान्युद्भटखुरघटनारुग्णताराग्रहाणि ।
अत्यारब्धोग्रवाक्यस्खलितनिपतिताकीर्णवैमानिकानि
श्रीरङ्गेशस्य धाटीचतुरगतुरगक्रीडितान्युल्लसन्ति ॥ ४२ ॥

धाटीवेगार्भटीभिर्निशितखुरपुटीगर्भनिर्भिन्नपृथ्वी-
जृम्भद्गम्भीरधूलीपटलविलुलितार्केन्दुबिम्बे त्वयि द्राक् ।
त्वामारूढोऽद्य रङ्गो भुवनपरिबृढः सत्वरोदित्वराणा-
मक्षीणाक्षिव्यधानां तुरगकुलपतेर्याति देवोऽप्युपज्ञाम् ॥ ४३ ॥

धाटीसंरम्भसज्जे हरितुरगपतौ मज्जदुन्मज्जदुर्वी-
निर्वाहादक्षचक्षुःश्रुतिपतिकृतफूत्कारचण्डानिलेन ।
तद्भारस्फारघर्मोद्गतचटुलतनूपम्यकूर्माधिराज-
श्वासैः पातालकोकेऽजनि पवनभुजामन्धसामाशु वृद्धिः ॥ ४४ ॥

हेषाघोषैरशेषैः खुरपुटघटितक्ष्मातटीटंक्रियाभि-
र्बन्धूरस्कन्धभित्तिस्खलितमणिलसत्किङ्किणीकेंक्रियाभिः ।
घोरप्रोद्गीर्णघोणाघुरुघुरितरवैः शार्ङ्गिणो भूषशब्दैः
शब्दैकाद्वैतभाञ्जि व्यतनिषत जगन्त्यश्वरत्नेन शश्वत् ॥ ४५ ॥

अग्रे श्रीरङ्गभर्तुः प्रचलितजनतोद्धूतधूलीकदम्बैः
श्रीमूर्त्यालोकसौख्याननुभवविफलीभूतनेत्रे जनौघे ।
अश्वं शश्वत् स्ववालानिलधुतरजसं संश्रितस्यास्य पश्चात्
सौन्दर्यं वीक्ष्य केचिन्नयनसफलतां मन्वते नन्वतीव ॥ ४६ ॥

वाहं वाहं हि वाहं निजजवविजितस्यानिलस्याभ्युदेति
स्पर्धालोर्मानसस्यात्मज इति च रुचा स्वच्छफेनच्छलेन ।
श्रीरङ्गेशेन धाटीकुतुकितमनसा धाव्यमानो मुदा द्रा-
गर्वागर्वातिगर्वाद् रजनिकरमसौ सर्वतश्चर्वतीव ॥ ४७ ॥

अच्छैर्माणिक्यगुच्छैः कलितरविमहःखण्डनैर्मण्डनैर्वा
घोषैः कल्पान्तपोषैः सहितमतिरजोधूसरैः केसरैश्च ।
उच्चैराधातुमुच्चैःश्रवसि पदमिवोदग्रनम्राग्रपादं
पश्याम्यश्वं विनश्यद्वृजिनधनदृशां दृश्यमस्याद्य ॥ ४८ ॥

नव्यं नव्यं च नव्यं सकलजनदृशां रूपमाबिभ्रदश्वो
हस्ताब्जन्यस्तशक्तिं हरिमपि च वहन् सादिवेषेऽपि रम्यम् ।
वीथीष्वाधाव्यमानस्तिमितनिजशिरश्चामरश्चामरेड्यो
ऽप्यंहःसंहारकारी मम भवतु परं रंहसा सिंहसारः ॥ ४९ ॥

कल्याणाञ्चितनूत्नरत्नकलिकावल्यावभुग्नाननः
कल्याङ्गो हरिसंगतो जलनिधीन् कुल्या इवोल्लङ्घयन् ।
कल्यावेगकृतानि सज्जनमनःशल्यानि सद्यो हरन्
कल्याणं वितनोतु कल्पितमणीपल्याणरम्यो हयः ॥ ५० ॥

इति श्रीकुट्टिकविविरचितं तुरगशतकं(?) संपूर्णम्

## ६१. दशावतारप्रार्थना[1]

### रङ्गनाथसूरिविरचिता

मत्स्यरूपिणो भगवतः प्रार्थना—

त्रय्या दुर्जयदानवेन्द्रहृतया वैयाकुलीं प्रापिते
नालीकासनमानसे सरसिजे भानोरपायेन वा ।
मध्येऽम्भोनिधि यः प्रहृत्य तमरिं वाणीं पुराणीं पुनः
प्रादात् तस्य यथापुरं स तनुतां श्रीमत्स्यमूर्तिः श्रियम् ॥ १ ॥

कूर्मरूपिणो भगवतः प्रार्थना—

यच्छ्वासानिलपर्युदस्तजलधिक्रोडोच्चलद्वीचिका-
वेधःसौधविघट्टनोद्भटरवो ब्रह्माण्डमास्फोटयन् ।
दैत्यान् मोहयतो हरेर्दिविषदां पीयूषदानक्षणे
साहाय्यं विततान शर्म कुहनामूर्तिः स निर्मातु नः ॥ २ ॥

वराहरूपिणो भगवतः प्रार्थना—

दंष्ट्राग्रे पृथुसीम्नि यस्य जलधेरुन्मग्नमूर्तेः पुरा
घोणे घुर्घुरघूर्णमानतनुतामासेदुषी मेदिनी ।
प्रीता शैलशिखाधिरोहजनितामाधत्त दिव्यां श्रियं
मायासूकरशेखरः स दिशतामामोदभूमोदयम् ॥ ३ ॥

नरसिंहरूपिणो भगवतः प्रार्थना—

दंष्ट्रांशूच्चयपाण्डरैर्नखमुखैर्दैत्येन्द्रवक्षःस्थली-
निष्ठ्यूतामितकुङ्कुमाभरुधिरप्राग्भारसंभावितैः ।

[1] Based on a recent transcript, No. TR 804 (D. C. No. 1606).

मालिन्यं द्युसदां ममार्ज हृदये प्रह्लादमाह्लादयन्
य: पूर्वं तमिमं भजेम शरणं वैकुण्ठकण्ठीरवम् ॥ ४ ॥

वामनरूपिणो भगवतः प्रार्थना—

आसीद् यस्य वितानमम्बरसरित् पूर्वं परस्तादसौ
शीर्षत्राणमभूदथो गलतले मन्दारमालाभवत् ।
जाता धौतमथांशुकं कटितटे पादारविन्दे ततः
संपेदे मधुबिन्दुरीतिमवतात् याच्ञावटुस्तद्वटुः ॥ ५ ॥

परशुरामरूपिणो भगवतः प्रार्थना—

दृप्तक्षत्रवधाध्वरे पितृवधामर्षोदयाद् दीक्षितो
बाहा हेहयनायकस्य समिधः साहस्रमप्युज्ज्वलाः ।
धाराग्रज्वलदाशुशुक्षणिशिखामध्ये कुठारस्य यो
निस्तन्द्रं जुहुवांबभूव मुनिराडव्यादभव्यात् स नः ॥ ६ ॥

श्रीरामभद्ररूपिणो भगवतः प्रार्थना—

वीरः कोऽपि सकृन्नतार्तिहरणश्रद्धाविशुद्धाशयः
कामं कामपि संपदं वितनुतामाकल्पमल्पेतराम् ।
यस्यापाङ्गजशोणिमा स्तनतटे सेहे न मुक्ताश्रियं
नेत्रे कज्जलकालिमानमपि च क्रव्यादवामभ्रुवाम् ॥ ७ ॥

बलभद्ररूपिणो भगवतः प्रार्थना—

यस्याहुर्मुसलं हलं प्रहरणं संग्रामसीमाजुषो
भेत्तुं वैरिशिरोधनान् नमयितुं चान्यानपेक्षं बुधाः ।
येनाकार्षि च हस्तिनं कुरुमदज्वालारुजं जाह्नवी-
पूरे त्याजयितुं स लाङ्गलधरः कुर्वीत गुर्वीं श्रियम् ॥ ८ ॥

श्रीकृष्णरूपिणो भगवतः प्रार्थना—

अन्विष्टोऽपि चिरादकृत्रिमगिरां श्रेणीभिरेणीदृशां
गोपालाह्वयजन्मनां तु सुलभं स्वात्मानमाधत्त यः ।
यो विश्वस्य नियन्तृतामनुभवन्नप्यावहद् दूततां
बध्नीमोऽञ्जलिमादरेण करुणादिग्धाय मुग्धात्मने ॥ ९

कल्किरूपिणो भगवतः प्रार्थना—

राजन्यापशदैर्जगद्विपदलंकर्मीणचर्यापदै-
र्निर्मूले निखिले कलेरुपचयाद् धर्मे महीमण्डले ।
प्रादुर्भूय कृपाणपाणिरथ तान् निर्धूय भूयः पुरा
धर्मं कार्तयुगं प्रवर्तयति यः कल्की श्रियै कल्पताम् ॥ १० ॥

इति कौशिकरङ्गनाथसूरिः सुकुमारैः पदगुम्भनैः स्तुवन् सन् ।
परमं पुरुषं दशावतारं ⏑ ⏑ – – – ⏑ ⏑ शोभते कृतार्थः ॥

इति श्रीदशावतारप्रार्थना समाप्ता

## ६२. नवनीतकृष्णाष्टकम्[1]

मन्दस्मितं मधुरकोमललास्यलीलं
कंदर्पकोटिकमनीयकिशोरमूर्तिम् ।
कुन्दस्फुरद्दशनकं कुटिलालकान्तं
वन्देय नन्दतनयं नवनीतकृष्णम् ॥ १ ॥

[1] Based on the MS. No. 70690 (D. C. No. 1664).

नाट्यावलोकनकुतूहलिभिः प्रदिष्टं
कोट्या करस्य नवनीतघनं दधानम् ।
शाट्या शिशोरुचितया शबलावलग्नं
वीट्या लसन्मुखमिमो नवनीतकृष्णम् ॥ २ ॥

मञ्जीरमञ्जुचरणं मृदुलाङ्गुलीकं
पुञ्जीभवन्मधुपपुष्कलपुष्पमालम् ।
कंजीभवन्नयनमाश्रितदेहभाजां
संजीवनं नम मनो नवनीतकृष्णम् ॥ ३ ॥

पूरेण नीलमहसां परिपूर्णगात्रं
हारेण मौक्तिकजुषा हृतसर्वचित्तम् ।
चोरेण मोहितमुनिं दधिकुण्डभाजा
पारेगिरं स्तुहि मनो नवनीतकृष्णम् ॥ ४ ॥

पद्मालयाधरणिपालितपार्श्वयुग्मं
सद्मास्थितं मणिकनत्कनकावकल्पतम् ।
छद्मादिदूरगजनैः परिचर्यमाणं
विद्मः कथं वयममुं नवनीतकृष्णम् ॥ ५ ॥

ध्यातं सदा मुनिजनैरभिवृद्धहर्षैः
पूतं मुहुर्व्रजवधूजनचुम्बितैस्तैः ।
क्रीतं क्षणेन शरणागतदीनवाचा
स्फीतं श्रिया भज मनो नवनीतकृष्णम् ॥ ६ ॥

उद्यन्मृगाङ्ककमनीयमुखारविन्दं
सद्यःस्फुरत्कमलकोमललोचनान्तम् ।

यद्यन्नताभिलषितं तदुपार्जयन्त-
मद्य स्मरामि सरसं नवनीतकृष्णम् ॥ ७ ॥

तुङ्गं गुणैरनुपमैरनवद्यगन्धैः
सङ्गं श्रितेषु सततं स्वयमादधानम् ।
अङ्गं वहन्तमतुलं नवमेघनीलं
त्वं गन्तुमर्हसि मनो नवनीतकृष्णम् ॥ ८ ॥

नवनीतकृष्णविषयामवनीसुरभावुकां स्तुतिं कथयन् ।
सवनी संपन्नः स्यात् स वनी स यतिः स एव मुक्तश्च ॥ ९ ॥

इति श्रीनवनीतकृष्णाष्टकं समाप्तम्

## ६३. निर्वेदतारावली[1]

### कौशिकरङ्गनाथसूरिविरचिता

तर्केषु कर्कशतरापि मदीयवाणी नैवोज्जहाति मृदुतां कविताप्रसङ्गे ।
दंष्ट्राग्रमुद्भटसुरारिगिरीन्द्रभेदि कान्ताधरे नरहरेः सुकुमारमेव ॥ १ ॥

कदा वा सुस्नातो जलनिधिसुतानाथचरण-
द्वयाम्भोजश्रद्धासुरसरिति शुद्धात्महृदयः ।
दुहानं निर्वाणं वसुतिलकमष्टाक्षरमनुं
मुदा जापंजापं निमिषमिव नेष्यामि दिवसान् ॥ २ ॥

[1] Based on the transcript, No. TR 351. It is described under No. 1065 of the Descriptive Catalogue of Kāvya MSS. (vol. V).

कदा वा निर्लज्जं सुखतदितरे वापि तुलयन्
समो निन्दास्तुत्योरपि कलितशीतोष्णसहनः।
प्रकृत्येवोन्मत्तो दनुजरिपुनामानि बहुधा
जपञ्छृण्वन् गायन् निमिषमिव नेष्यामि दिवसान् ॥ ३ ॥

कदा वा संमोहान् विषयजनितान् बुद्बुदनिभान्
धिगित्येतानल्पान् जडजनमनोमोहनफलान्।
परित्यज्य प्राज्ञैर्मुररिपुपदाब्जैकशरणैः
परिष्वक्तः सुख्यन् निमिषमिव नेष्यामि दिवसान् ॥ ४ ॥

कदा वा संसर्गं परमपुरुषध्यानविमुखैः
सुखभ्रान्त्या पङ्के महति निपतद्भिः परिहरन्।
सतां सङ्गाज्जानन्नथ च हरिदास्यैकविभवं
स्वमात्मानं हृष्यन् निमिषमिव नेष्यामि दिवसान् ॥ ५ ॥

कदा वा दीनोऽपि प्रबलदनुजारातिचरण-
द्वयाम्भोजश्रद्धाकवचखचिताङ्गो गतभयः।
अपेहि त्वं दूरं यमभट वृथा ते प्रहरणं
मयीति व्याक्रोशन् निमिषमिव नेष्यामि दिवसान् ॥ ६ ॥

कदा वा सत्कर्माण्यनुदिनमुदारेण मनसा
यथाशक्त्यातिष्ठन् हरिचरणयोरर्पितफलः।
सुधीभिस्त्रय्यन्तप्रवणमतिभिः साधु विमृशन्
गुरूणां श्रीसूक्तीर्निमिषमिव नेष्यामि दिवसान् ॥ ७ ॥

कदा वा वेतालीं द्रुहिणशतपूर्णायुरवधिं
विवेकं धुन्वानां विफलधनचिन्तां विजहति।

नवादर्शस्वच्छे मम मनसि नाथे प्रतिफल-
त्यमन्दानन्दोऽहं निमिषमिव नेष्यामि दिवसान् ॥ ८ ॥

कदा वा दावाग्नेर्मृग इव हरिद्वेषिजनता-
मुखालोकाद् भीतो भगवदनुभूत्याहितहृदाम् ।
सतां तु प्रेक्षातः कुवलयदृशां कामुक इव
प्रहर्षादुन्मत्तो निमिषमिव नेष्यामि दिवसान् ॥ ९ ॥

कदा वा जित्वारीन् षडपि परवृत्त्याहमसतां
कथायामुत्तीर्णो निपुणगणनां प्रागिव ततः ।
सतामेव प्राप्तस्त्रिदशमहितैर्दास्यविभवै-
रमीषां निर्विष्टैर्निमिषमिव नेष्यामि दिवसान् ॥ १० ॥

कदा वा घोरेभ्यो जठरपिठरापूरणकृते
कृतेभ्यः पापेभ्यो निरयजनकेभ्योऽतिचकितः ।
हरे लक्ष्मीकान्त द्विरदवरबन्धो मधुरिपो
दयस्वेत्याक्रोशन् निमिषमिव नेष्यामि दिवसान् ॥ ११ ॥

कदा वा कान्तारे विषमविषयाख्ये तत इतो
यथेच्छासंचारात् कथमपि निवर्त्याङ्घ्रियुगले ।
मुरारेरालाने हृदयमुरुदन्तावलमिमं
निरुन्धन् निष्पन्दं निमिषमिव नेष्यामि दिवसान् ॥ १२ ॥

कदा वा मांसासृङ्मयवपुषि संप्रोषितरुचि-
स्तदित्कल्पे स्वल्पे त्रिदशनिलयोत्थेऽपि च सुखे ।
महानन्दब्रह्मानुभवकुतुकी कालगणना-
समासक्तो नित्यं निमिषमिव नेष्यामि दिवसान् ॥ १३ ॥

कदा वा कामाद्यैरनुपहतचित्तेन मुरजित्-
पदैकालम्बेन प्रशमनिधिना केनचिदिह ।
क्वचिज्जुष्टे देशे कृतवसतिरन्यानधिगते
तदीयैः संलापैर्निमिषमिव नेष्यामि दिवसान् ॥ १४ ॥

कदा वा नाथैकप्रवणहृदयेषु त्रिकरणैः
स्वसत्तालोपादेर्जनितमपराधं परिहरन् ।
प्रभोराज्ञासेतोः सकृदपि महानिग्रहफलाद्
विभेदात् संत्रस्तो निमिषमिव नेष्यामि दिवसान् ॥ १५ ॥

कदा वा खण्डेन्दुप्रतिमनखरेखांशुलहरी-
परीवाहैः शश्वन्मनसि विमलैः क्षालितमलः ।
गलत्संमोहाश्रु प्रकटपुलकं चापि चरणौ
हरेर्ध्यायंध्यायं निमिषमिव नेष्यमि दिवसान् ॥ १६ ॥

कदा वा कंसारेश्चरणपरिचर्याप्रणयिनां
सतां सङ्गं लब्ध्वा सुकृतपरिपाकैकसुलभम् ।
पवित्रं चित्रं तच्चरितममृतस्यन्दसुभगं
ततः श्रावंश्रावं निमिषमिव नेष्यामि दिवसान् ॥ १७ ॥

कदा वा कालिन्दीतटपरिसरे वेणुनिनदैः
पवित्रे सुत्रामप्रभृतिमहिते वल्लवशिशोः ।
जनित्वा बन्धूको वकुलविटपी वाथ कुटज-
स्त्रिभिस्तापैस्त्यक्तो निमिषमिव नेष्यामि दिवसान् ॥ १८ ॥

कदा वा गोपीनां करकमलसंवाहनविधि-
क्षमं श्रुत्यन्तेषु प्रथितविभवं वल्लवशिशोः ।

पदाम्भोजं श्रीमद्विजयरथभूषायितमहं
हृदि प्रेम्णा रुन्धन् निमिषमिव नेष्यामि दिवसान् ॥ १९ ॥

कदा वा संत्रस्तो विषमविषयाहीन्द्रपटलात्
पुमांसं प्राचीनं रविकुलनरेन्द्रं शरणयन् ।
अये पाहि स्वामिन् सकृदवनतत्राणकुतुक
प्रसीदेति क्रोशन् निमिषमिव नेष्यामि दिवसान् ॥ २० ॥

कदा वा सामोदैर्मरकतशिलाभङ्गसुभगै-
र्वनात् स्वेनानीतैस्तुलसिदलबृन्दैरभिनवैः ।
समभ्यर्च्य श्रीमद्रघुपतिपदत्राणयुगलं
दधानो मूर्ध्नाहं निमिषमिव नेष्यामि दिवसान् ॥ २१ ॥

कदा वा सद्वृत्तो जगति गणनीयो धुरि सतां
स्थिरप्रज्ञः श्रीमान् भरत इव संत्यज्य ममताम् ।
गृहारामक्षेत्रादिषु रघुपतेस्तानि चरणे
समर्प्य स्वस्थोऽहं निमिषमिव नेष्यामि दिवसान् ॥ २२ ॥

कदा वा गम्भीरे प्रकृतिमरुकान्तारजठरे
वृथा यातायातैः श्रममधिगतः केवलमहम् ।
गुणारामे रामे सकलसुलभायां गुरुकृपा-
सुधावाप्यां मज्जन् निमिषमिव नेष्यामि दिवसान् ॥ २३ ॥

कदा वा वैदेहीरमणचरणन्याससुभगे
मरुत्पोताक्रान्ते महति सरयूरोधसि वसन् ।
मनुं श्रीरामेति प्रणतजनचिन्तासुरतरुं
जपञ्छ्रद्धया भक्त्या निमिषमिव नेष्यामि दिवसान् ॥ २४ ॥

कदा वा साकेते सकलजगदंहःप्रशमनं
रजः स्रस्तं वीथ्यां रघुकुलपतेरङ्घ्रिजलजात् ।
प्रतीकेष्वालिम्पन् निटिलभुवि कुर्वंश्च तिलकं
वहन् मूर्ध्ना धन्यो निमिषमिव नेष्यामि दिवसान् ॥ २५ ॥

कदा वा साकेते रथचरणशङ्खाङ्कुशयव-
ध्वजाम्भोजच्छत्राङ्कितचरणमुद्रापरिचयैः ।
प्रतोल्यां पुण्यायां रघुकुलसुधांशोः परिलुठन्
सुरेन्द्रैर्लाल्योऽहं निमिषमिव नेष्यामि दिवसान् ॥ २६ ॥

कदा वा रक्ताम्भोरुहदलसुवर्णाङ्गुलितलं
नमन् नाकिश्रेणीमकुटमणिरोचिःशबलितम् ।
पदं सीताजानेः कनकमयपीठे विनिहितं
दृशा साक्षात्कुर्वन् निमिषमिव नेष्यामि दिवसान् ॥ २७ ॥

कदा वापादाग्रं रघुतिलकमाचूडमुचितै-
रनर्घैर्लावण्यैरिव विलसितं भूषणगणैः ।
चिरं दर्शंदर्शं प्रमदभरनिःष्पन्दनयनः
कृतार्थंमन्योऽहं निमिषमिव नेष्यामि दिवसान् ॥ २८ ॥

इति श्रीकौशिकरङ्गनाथसूरिकृता निर्वेदतारावली समाप्ता

---

## ६४. पञ्चश्लोकी[1]

(श्रीवैकुण्ठनाथस्तुतिरूपा)

आब्रह्मकीटमपरैर्दुरतिक्रमा या
यत्प्रेरिता गुणमयी तरुणीव माया ।
तामप्यहो तरति कोऽपि कदाचिदेव
यस्य प्रसादवशतस्तमिमं नताः स्मः ॥ १ ॥

संकल्पमात्रसचिवो जगदेतदादौ
सृष्ट्वा य एष कुतुकी तदनुप्रविश्य ।
सत्यानृतादिविविधव्यपदेशमेति
तस्मै नमो नम इदं पुरुषोत्तमाय ॥ २ ॥

प्रभवति विधिः स्रष्टुं लोकानिमान् सचराचरान्
शशधरधरो हर्तुं यस्य प्रसादलवांशतः ।
स्वयमवति यो विष्ण्वात्मानं प्रपद्य कृपानिधि-
र्विमलमनसां चेतोधाम्ने श्रियःपतये नमः ॥ ३ ॥

अशुद्धेऽस्मिन्नन्तर्जगति परिनुन्नेऽपि परया
दयास्रोतस्विन्या निरवधिविकारास्तदुदिताः ।
न सज्जन्ते यस्मिन्नधिनलिनपत्रं जलकणा
यथैनं प्राचीनं पुरुषमिह वन्देमहि वयम् ॥ ४ ॥

[1] Based on a recent transcript, No. TR 804 (D.C. No. 3087).

असारं संसारं सरुचि विसृजन्तः शमधना-
श्चिराद् योगारूढा निजहृदयनालीकमुकुलम् ।
समुद्घाट्य श्रीमच्चरणयुगलं यत्प्रयतनै-
र्निषेवन्ते धन्यास्तदिदमवतंसो भवतु नः ॥ ५ ॥

इति श्रीपञ्चश्लोकी समाप्ता

## ६५. परमपुरुषप्रार्थना[1]

(विष्णुपादादिकेशान्तवर्णनस्तुतिपूर्विका)

रङ्गनाथसूरिविरचिता

सेवाहेवाकदेवाधिपमकुटतटीस्रस्तमन्दारमाला-
लीलामालम्बमाना मधुरसपृषतश्रेणिकेनाङ्घ्रिपद्मे ।
गङ्गाभङ्गानुषङ्गादिव दनुजरिपोः पाण्डिमानं वहन्ती
पायादस्मानपायान्नखमणिसरणिस्तारकाकारकान्ता ॥ १ ॥

सेवाघूर्णन्मृडानीपरिवृढमकुटीकोटिकान्तारवाटी-
लीलालोलोर्मिमालोच्चलदमरसरित्पूरबिन्दुप्रबन्धाः ।
शोभन्ते हंसशाला इव नलिनधिया यत्र संश्लेषभाजो
राजीवाक्षस्य दद्यात् किसलयसदृशं तत्पदं संपदं नः ॥ २ ॥

गङ्गां वामाङ्घ्रिसङ्गान्महिमगरिमगां काममत्येतुकामा
सा मार्ताण्डस्य कन्या चरणनलिनयोः किंनु लग्ना चिराय ।

[1] Based on a recent transcript, No. TR 845 (D. C. No. 1718).

इत्येषा शङ्क्यमाना विबुधसमुदयैः श्रीपतेरिन्द्रनील-
प्रत्युप्तात्यन्तदीप्यत्कटकरुचिझरी रक्षतादक्षतान्नः ॥ ३ ॥

नादं कादम्बिनीनामिव तरलधियो यां समाकर्ण्य भूरि
त्रासादासादिताशाविधिसितगरुतो नाभिपद्मोपविष्टाः ।
छत्रायन्ते मुरारेरुपरिविलयिनः साद्यमञ्जीरशिञ्जा-
नल्पा कल्पान्तयूनो मम दुरिततते: कल्पतामल्पतायै ॥ ४ ॥

पूर्वं पादारविन्दे परिपतनजुषां योगिनां मानसाना-
मूर्ध्वारोहाय शातक्रतवमणिसमाबद्धनिश्रेणिकेव ।
अन्योन्यांशुप्ररोहप्रसरणसुभगं भावुकं शौरिजङ्घा-
युग्मं तिग्मांशुलीलामिह वहतु तमोमूलनिर्मूलनेन ॥ ५ ॥

अस्ताश्लोषाधिरज्यद्दिनकरकिरणश्रेणिशोषीकृताभ्र-
च्छायालीढेन्द्रनीलाचलविपुलतटीसाम्यमाटीकमानम् ।
श्रीमत्पीताम्बरश्रीपरिकलनवशादूरुयुग्मं मुरारेः
कान्तं स्वान्तं धिनोतु स्थिरचरकदलीकाण्डदण्डोपमं नः ॥ ६ ॥

ऊरुव्याजेन राजन्मृदुलकदलिकामूलकन्दायमानौ
संवीतौ पीतिमश्रीविहसितविकसत्किंशुकेनांशुकेन ।
लावण्यस्येव राशी मणिमयविरणत्काञ्चिदामाभिरामौ
पातां पीताम्बरस्य प्रमुषितनलिनश्रीकदम्बौ नितम्बौ ॥ ७ ॥

वक्षोदेशस्थलक्ष्मीवदनविलसितस्तेयकृत्यै निलीय
च्छिद्रान्वेषीव निद्रारसमपि विजहात्यद्य नालीकमेकम् ।
निम्नं नाभीबिलं तद्दनुजविजयिनः कान्तिलीलातटाकं
लोकस्यैकं वितानं विहितवदसितं पातु नो मध्यमस्य ॥ ८ ॥

एषा मेऽशेषदोषान्छमयतु शयनीभूतभोगीन्द्रसान्द्र-
स्फायन्निःश्वासवातैरनवरतमधः प्रेर्यमाणा मुरारेः ।
लक्ष्मीलीलागृहान्तर्ज्वलदमलमहाकौस्तुभच्छद्मदीप-
प्रोद्भूतश्यामधूमावलिरिव विरलान्येतरा रोमराजिः ॥ ९ ॥

अश्रान्तं दिव्यलीलाकमलविकसनापादनाय प्रियायाः
पार्श्वे विश्वप्रसिद्धाद्भुतमहिमवता कामिना केशवेन ।
निर्माय स्थापितान्यो निधिरिव महसामेष वक्षःस्थलस्थः
प्रत्यक्पर्यायमूर्तिर्वितरतु चतुरं कौस्तुभं प्रातिभं नः ॥ १० ॥

शङ्खं चक्रं कृपाणं धनुरपि दनुजच्छेदनायोद्वहन्तः
कान्ता मूर्तैः प्रतापैरिव भुजवलयैः पद्मरागानुविद्धैः ।
अर्थानामर्थितानां समसमयमिव त्यागहेतोश्चतुर्णां
चातुर्विध्यं दधाना मधुमथनभुजा भूतये नो भवन्तु ॥ ११ ॥

स्वान्तःशुद्धान्तदीव्यज्जलनिधितनयालोलनेत्रान्तसीमा-
निर्यत्कारुण्यधारावलिभिरिव समामुक्तमुक्तालताभिः ।
बिभ्राणं शारदेन्दुद्युतिझररुचिराभोगताराध्वलक्ष्मीं
वक्षः श्रीवत्सलक्ष्म क्षपयतु दुरितं न्यक्षमक्षीणरौक्ष्यम् ॥ १२ ॥

मध्ये लावण्यसिन्धोर्दयितदृढपरीरम्भगम्भीरलीला-
लोलाक्षीरोदकन्यामृदुलभुजलतावेष्टनस्य क्षणेषु ।
कम्बोराडम्बरं यो वहति वलयिनो वीरुधा विद्रुमाणां
वैकुण्ठस्यैष कण्ठः प्रचुरयतु चिरं भव्यमव्याहतं नः ॥ १३ ॥

संवर्तोद्दण्डचण्डच्छविशतसदृशं धाम सौदर्शनं त-
ज्ज्वालामालावलीढं प्रदहतु दुरितं तूलजालं समूलम् ।

चित्रं यत्राधिरूढे समरभुवि हरेर्दिव्यहस्तोदयाद्रिं
स्यन्दन्ते चन्द्रकान्ता दितिसुतसुदृशामायता लोचनान्ताः ॥१४॥

शौरेर्दिव्याधराग्रोद्गलदमृतरसास्वादमेदस्विमूर्तिः
कल्पान्तोन्निद्रपाथोनिधिविपुलसमारम्भगम्भीरनादः ।
शङ्खोऽसौ पाञ्चजन्यो दनुजरिपुवपुःकान्तिकालिन्दिवेणी-
लीलैर्यद्राजहंसो विशदयतु मनः कल्मषक्षालनेन ॥ १५ ॥

श्रीनासावंशबिम्बाधरदशनमणिश्रेणिकान्तित्रिवेणी-
मध्ये क्लृप्तावगाहं प्रशमितविविधानल्पतापे विशुद्धम् ।
लोलश्रीकण्ठनाले गलदलकभरैरञ्चिते केसरौघै-
र्धत्तां लोलम्बलीलां मम हृदयमिदं नाथवक्त्रारविन्दे ॥ १६ ॥

त्वमादिर्लोकानां युगशतसहस्राणि नियतः
समाराध्य श्रीमन् पदनलिनरेणुं तव विधिः ।
त्रिलोकीधातृत्वं पुनरपि समापन्मुनिगणा
घृणन्त्युच्चैर्घोषं परमपुरुषौदार्यमिति ते ॥ १७ ॥

सकृद्वा पादाब्जं तव नमति यः प्राकृतमतिः
कुटुम्बं स्वं दीनं झटिति भगवंस्त्याजयसि तम् ।
चिरोपात्तं वित्तं तिरयसि तमन्ते तु कुरुषे
परव्योम्नि श्रीमन्नहह करुणानीरधिरसि ॥ १८ ॥

न ते रूपं किंचिन्न च जगति नामापि भवतो
न वाधारः कश्चिन्न च भवसि दृश्यः क्वचिदपि ।
भुजंगे वासस्ते क्वचन जलराशौ तु भगव-
न्नहो ते विख्यातो निखिलजगदीशत्वमहिमा ॥ १९ ॥

विश्वं च विश्वमुदरे दधतो मुरारे
चेतोऽभवत् सुमनसां परमाणुरूपम् ।
धाम्नः परादपि तवादरणास्पदं यद्
व्यक्तीकृतं किल ततो नतवत्सलत्वम् ॥ २० ॥

विमलगुणावलीरुचिरमौक्तिकहारलता
पदनलिनद्वयेन भगवन्नवतंसवती ।
तव पदरेणुभिर्मलयजैरनुलिप्ततनू-
र्दृढपरिरम्भकेलिमयते श्रुतिमौलिसती ॥ २१ ॥

सहृदयशेमुषीस्फटिकशैलतटीप्रसृता
परिहृतमध्यलब्धविबुधान्तरशैलहतिः ।
अकृतकसूक्तिभावतटिनी त्वयि निम्नतरा
गुणगणसागरे पुरुषवर्य पतत्यनघा ॥ २२ ॥

निरुध्य प्राणादीनपि मुनिभिरन्तर्विधिमुखै-
श्चिराद् ये मृग्ये ते चरणनलिने माधव विभो ।
अपीमे कामं मे कलयसि पुरस्तान्नयनयो-
रहो मे सौभाग्यं मयि पतति कारुण्यलहरी ॥ २३ ॥

क्व ते भूमासीमा निगममकुटीकोटिविनुतः
क्व चाहं नीचात्मा विषयपदवीजाङ्घिकपदम् ।
तदप्येनं दीनं स्वजनमनुगृह्णासि भगवन्
कथंकारं ब्रूमस्तव कृपणवात्सल्यबहुताम् ॥ २४ ॥

चरन्तोऽपि श्रीमन्ननवरतमारादिह विधे-
र्न विन्देयुर्लोका बहिरपगमा जात्वसि यथा ।

तथा ते सर्वात्मन् विततमपि सर्वत्र जगति
स्वरूपं नो विद्मः कृपणत्रिषणामोहतमसा ॥ २५ ॥

झषशिशुकस्य याति बडिशामिषलोभवतो
विषयनिषद्वरे कृतपदो विपदं न चिरात् ।
पुनरपि जन्तुरेष कुरुते पदमत्र हरे
न तु तव तारकं चरणमञ्चति धिग् धिगमुम् ॥ २६ ॥

त्रिदशकदम्बमान्यमपि मानुषजन्म हरे
सुकृतशतैर्वीतीर्णमधिगम्य जनो भवता ।
अहह न चिन्तयत्ययमुपायमपायहरं
वनभुवि चन्द्रिकामिव तनोति तवोपकृतिम् ॥ २७ ॥

त्रिविधदुरन्ततापबडबार्चिरसह्यतनो-
र्विषयजलभ्रमैरविकलं परिमोहयतः ।
ननु भवतो वृणे परमपूरुष लिप्सुरहं
भवगुरुसागरस्य तरणं चरणं शरणम् ॥ २८ ॥

इति श्रीपरमपुरुषप्रार्थना समाप्ता

## ६६. भगवद्विचारललितार्याः[1]

गोविन्दाचार्यविरचिताः

निगमागमप्रबोधं विबुधनुतं वासुदेवपदवाच्यम् ।
देवं गुरुं च वन्दे श्रीहरिसर्वोत्तमत्वचिदवाप्त्यै ॥ १ ॥

[1] Edited from the single MS. No. PM 2741 (D. C. No. 1776).

ब्रह्माद्यमरसमूहान् नारदमुख्यान् समस्तदेवर्षीन् ।
ब्रह्मर्षीनपि वन्दे वर्णोचितकर्मरतिकृते मनसः ॥ २ ॥

पितरं **रङ्गाचार्यं** वेदपुराणेतिहासतत्त्वज्ञम् ।
वन्दे भवापनुत्त्यै साध्वीविनुतां **सरस्वतीं** जननीम् ॥ ३ ॥

निर्दोषः परमात्मा विभुः स्वतन्त्रः स सच्चिदानन्दः ।
श्रुतमिति सकृद्गुरुमुखादथ कर्तव्यं यतोऽस्य किल मननम् ॥ ४ ॥

परवासुदेवमूर्ते मद्गतमध्वार्यहृत्सरोजस्थ ।
पृच्छामि संशये त्वां सामीप्याच्छिन्धि तं मननसमये ॥ ५ ॥

चेतश्चाञ्चल्यान्न स्थिरभक्तिर्नामकीर्तनं न ततः ।
कर्तुं कर्म न शक्तस्त्वदनुग्रहमन्तरेण शर्म कुतः ॥ ६ ॥

मुक्त्वामृतफलभोक्तॄन् मुक्तिवने त्वं नरर्षभान् वत्सम् ।
बध्नासि मोहरज्ज्वाफलभवविपिने कुतोऽज मामीश ॥ ७ ॥

परपुरुष इति भवन्तं भजति नियुक्तापि न स्मृतिचलाक्षी ।
क्लेशयसि संसृतौ मामिदमनुचितमिति तवेश को ब्रूयात् ॥ ८ ॥

न धृता त्वद्भक्तिसती विवृतं न त्वद्रहस्यमपि तत् किम् ।
संयम्य प्रकृतिगुणैः संसृतिजलधौ क्षिपस्युचितमीश ॥ ९ ॥

त्वां परिचरितुमचिन्त्याद्भुतशक्तिं मम न कौशलं मां त्वम् ।
अपिधाय ज्ञानदृशं विसृजसि भवकानने किमिदमुचितम् ॥ १० ॥

यन्तृकरस्थितरश्मिप्रचोदिताश्वानुयायिरथिक इव ।
मत्संकल्पविधिज्ञ प्रकृतिवशोऽहं त्वयैव किमु दण्ड्यः ॥ ११ ॥

प्रकृतिवशतास्तु वा मम सा त्वदधीना किलात्र न वितर्कः ।
आद्यप्रकृतिवशं मां कुर्वन्नुचितकृत् ततोऽपि यदि दण्ड्यः ॥ १२ ॥

प्राक्कृतकर्मानुगुणां भजति प्रकृतिं किलात्र देहीति ।
चेत् तत् कारयिता कः सर्वव्यापिन् परेश भवदन्यः ॥ १३ ॥

देही स्वभावसिद्धं कर्म हि कुरुते न कारयति कश्चित् ।
इति चेत् स्वतन्त्रतास्य स्यात् तदयुक्तं न चोभयोः साम्यम् ॥ १४ ॥

आस्तामिति चेत् स्वाम्यं तुल्यं जगदीश देहिनो भवता ।
दण्डोऽस्य शास्त्रसिद्धः स च न घटेतास्य धारयितुरभावात् ॥ १५ ॥

कर्मानुगुणो दण्डः क्लृप्तो देहिनि पतत्यसाविति चेत् ।
तत्क्लृपकेन भाव्यं दण्ड्यः परतन्त्र इति तु जनसिद्धम् ॥ १६ ॥

राज्ञः पुरुष इवास्ति स्वातन्त्र्यं तदुदितान्यथाकरणे ।
उक्ताकरणे दण्डो देहिन इति किं जगत्पते न्याय्यम् ॥ १७ ॥

न्यायः किल सर्वसमः शूद्रासङ्गिन्यजामिले दण्डम् ।
अनिपात्य चोद्धृतः कथमीश तवेच्छात्र कारणं नूनम् ॥ १८ ॥

नारायणेति तेनोद्गीतं तन्नाम मरणसमय इति ।
चेत् स्वामिंस्तत् प्रथितं तेनाहूतः सुतोऽतिवात्सल्यात् ॥ १९ ॥

अथ चेद् यथाकथंचित् तव शुभनामाक्षरक्रमोच्चारः ।
आमरणरचितदुरितध्वंसाय नृणामलं च मोक्षाय ॥ २० ॥

गजरक्षक नरकान्तक सुरवर नारायणेति कीर्तनतः ।
मुक्तिश्चेदीश कुतो ब्रह्मविचारः कुतस्तपःकर्म ॥ २१ ॥

प्राग्जन्मनि सज्ज्ञानी ल्वदुरितवशाद् द्विजस्तथावृत्तः ।
भोगाद् दुरितविपाके नामोच्चारात् स तारितः सहसा ॥ २२ ॥

जीर्णोऽनुभवाद् रोगो नश्यति सकृदपि यथौषधग्रहणात् ।
आयुष्मान् भवति सुखी नाम्ना दुरितक्षये तथा ज्ञानी ॥ २३ ॥

यदजामिलेन नारायणेति चान्त्ये कथंचिदाकलितम् ।
तेन स दुर्वृत्तोऽपि ज्ञानी विप्रः पुरेति वा ज्ञेयम् ॥ २४ ॥

आस्तां स प्राग् ज्ञानी नामोच्चारात् कथं च समयेऽन्त्ये ।
मुक्तो नामग्रहणादेवेत्यत्रास्ति संशयो बलवान् ॥ २५ ॥

काश्यां सुतनिकटे वा मुक्तिर्मरणादिति स्मृतिः प्रथिता ।
सुतसामीप्ये सिद्धेऽप्यजामिले त्वत्स्मृतिः कुतः साध्या ॥ २६ ॥

असदृशभार्योत्पन्नः पुत्रो न मृतिर्न केवलं मुक्तिः ।
किंत्विह नष्टे दुरिते ज्ञानान्मोक्ष इति किमसि निर्दोषः ॥ २७ ॥

भक्त्या त्वज्ज्ञानाप्तिः सा किल दास्यार्चनादिरूपा हि ।
त्वमगोचरश्च मनसः संशयमेतं निवार्य मां पाहि ॥ २८ ॥

ब्रह्माण्डाद् बहिरस्यण्वन्तस्त्वमिति श्रुतिस्तदनुमेयम् ।
उपगन्तुं वा द्रष्टुं ज्ञातुं शक्यं कथं न्वपरिमेयम् ॥ २९ ॥

लोका विशन्ति भवति प्रलये श्रुतिराह चेत्थमविकलये ।
तत् कथमपि नित्यं त्वामपरिच्छिन्नं दिवि च भुवि कलये ॥ ३० ॥

नाण्वन्तर्व्रजति महद् दृष्टं न च न श्रुतं श्रुतिर्वदति ।
तं खलु गुरूपदेशं लघु चेतो न सहते हि धूर्वदति ॥ ३१ ॥

द्युतिरस्त्यन्तर्बहिरपि पृथौ पृथुतरे लघौ च हीरमणौ ।
महति च महत्तरे त्वं तद्वच्छ्रुतिवेद्य ननु किमणौ ॥ ३२ ॥

नह्यविकाराभासं योगाद्वा जगति तनु महद् भवति ।
घटते चैकत्वं कथमविकारे सङ्गवर्जिते भवति ॥ ३३ ॥

प्राग् यो हि घटाकाशः स महाकाशस्तु भवति घटविलये ।
महदाकाशः स गते सङ्गविकारौ न खस्य खलु निलये ॥ ३४ ॥

संज्ञा तथान्तरात्मा परमात्मेति त्वयीश सामनुते ।
इति किं त्वदचिन्त्याद्भुतशक्तिं ज्ञातुं श्रुतिर्हि सा मनुते ॥ ३५ ॥

स्वच्छन्दचारिणी वाग् योषेव ह्यविनयेन सामान्या ।
योज्या कथं तव नुतौ चिद्घनयुक्ता तथैनस मान्या ॥ ३६ ॥

कामाद्यरिगणवञ्चितहृद्वशगं विषयलोलमनवरतम् ।
विनिवेशयामि कथमहमक्षगणं त्वयि च विबुधजनवर तम् ॥ ३७ ॥

श्रीब्रह्मामरपरिवृढमुखसुरमुक्त्येकहेतुपदकमलम् ।
कृपया न दर्शयसि यदि शरणं यामि त्रयीड्य वद कमलम् ॥ ३८ ॥

तृषितं मरीचिकायां मृगयूथ सलिलशङ्कि मरुगमितम् ।
तद्वद्विषयेऽत्रान्तः प्राप्य त्वां विमलशङ्किमरुगमितम् ॥ ३९ ॥

नश्वरविषयापणिकश्चिद्घनहृद्यस्य बत सखा नु भवः ।
भवशमन त्वदवाप्तिं विनेश तस्य तु कथं सुखानुभवः ॥ ४० ॥

भवरोगिणाविचाराद् विषयापथ्यं हि सेवितं विपदि ।
तन्मां सदोषमव भवरुग्वैद्याकलय चिदञ्जनं सपदि ॥ ४१ ॥

त्वय्यस्त्यखिलविशेषस्तल्पीभवति नु न चेत् कथं शेषः ।
स्थितिलयसृष्टिकृदेष स्तौति त्वामिति हि सुरगणोऽशेषः ॥ ४२ ॥

दत्तस्त्वयावकाशः कुक्षौ जगतां न तेऽस्ति नीकाशः ।
त्वत्तो जगत्प्रकाशस्त्वन्नाभेरजनि यदयमाकाशः ॥ ४३ ॥

नकुले सोऽस्युरगे यस्ततो हि समभूस्त्वमसुरसुरगेयः ।
त्वां भक्तवशं कलये न दिशसि तद्धृदि यतः पदं कलये ॥ ४४ ॥

विलसति ते दासमता ह्याब्रह्मस्तम्बमपि सदा समता ।
अघनुत् त्वत्पदकमलं भजति श्रीस्तत्सदैव पदकमलम् ॥ ४५ ॥

अण्वन्तर्ब्रह्माण्डाद् बहिरपि विलसति यतस्तु तव सत्त्वम् ।
भूताधुनिकभविष्यत्कालनियन्तेति चोच्यसे स त्वम् ॥ ४६ ॥

ध्यायन्ति ये तव पदं भजन्ति ते वाञ्छितं तदेव पदम् ।
ज्ञानमयं ते सकलं वपुरित्युक्तं रमानिवासकलम् ॥ ४७ ॥

त्वां कृष्टकेशमवनौ भजमानाश्चाप्नुवन्नवदकेशम् ।
आनन्दमयं तव वपुरिति वोद्गीतं तदा प्रपदकेशम् ॥ ४८ ॥

त्वं निखिलदोषरहितो व्याप्तश्च सकलजगदीशः ।
कालत्रयनिरपायः सर्वज्ञो विजयसे सदात्मरतिः ॥ ४९ ॥

**गोविन्दाचार्येण** श्रीकौलगिवासुदेवगुरुकृपया ।
प्रीत्यर्थमेव हि हरेर्ग्रथिता **भगवद्विचारललितार्याः** ॥ ५० ॥

रचिता वसता स्वार्याः **चेरकेरल**देशयोः ।
भगवद्विचारललिताः कलिमाने शुभेधवे (४९४५) ॥ ५१ ॥

इति श्रीभगवद्विचारललितार्याः समाप्ताः

## ६७. मुकुन्दप्रसादस्तवराजः[1]

अलंकारमोंकारमञ्जूषिकाया-
स्त्रिलोकीनिदानं त्रिवेदीनिधानम् ।
मणिं कंचिदीडे सुमङ्गल्यशीलं
यशोदानशूरं यशोदाकिशोरम् ॥ १ ॥

सान्द्राभमिन्दीवरश्यामगात्रं
सनन्दादियोगीन्द्रवन्द्यं पवित्रम् ।
शरण्यं सहस्रांशुशीतांशुनेत्रं
प्रपद्येऽनवद्याङ्गमक्रूरमित्रम् ॥ २ ॥

प्रकाशैकरूपं हृदाकाशदीपं
प्रभातारविन्दप्रभाचोरपादम् ।
महारत्नविन्यस्तमञ्जीरभूषा-
मयूखावलीलिप्तपादाङ्गुलीकम् ॥ ३ ॥

समुत्तप्तचामीकराकारवस्त्रं
कनद्दिव्यमाणिक्यकाञ्चीकलापम् ।
स्फुरत्कौस्तुभश्रीपरिव्याप्तवक्षः-
स्थलीलोलहारावलीराजमानम् ॥ ४ ॥

बृहत्कङ्कणाबद्धशोणाश्ममाला-
रुचिस्तोमसंरक्तहस्तारविन्दम् ।
सुवर्णाङ्गदज्योतिरुद्भासितांसं
परिष्कारनिष्केण पर्याप्तकण्ठम् ॥ ५ ॥

[1] Based on the single MS. No. 66843 (D. C. No. 1787).

गदाशङ्खचक्रासिकोदण्डसेव्यं
भुजंगाधिराजाभिरामोरुबाहुम् ।
लसत्कम्बुबिम्बोकहृत्कंधराभं
नवीनप्रवालप्रवाहारुणोष्ठम् ॥ ६ ॥

सुवृत्तातिशुद्धद्युतिस्निग्धदन्त-
प्रतिक्षिप्तसंभिन्नकुन्दप्रसूनम् ।
हसत्कर्णिकारस्फुरत्कर्णिकार-
प्रभामञ्जरीपिञ्जरीभूतगण्डम् ॥ ७ ॥

प्रबुद्धारविन्दप्रतीकारनेत्रं
प्रकृष्टप्रकाशेन्दुदायादवक्त्रम् ।
किरीटद्युतिक्षिप्तसौवर्णगात्रं
कृपालुं परं नौमि पद्माकलत्रम् ॥ ८ ॥

समाकर्णितोदीर्णगन्धर्वचाटु-
प्रबन्धः पतङ्गप्रधानाधिरूढः ।
प्रपन्नार्तिहारः प्रणोदप्रवीणः
पुरस्तादुदस्तात् पुराणः पुमान् नः ॥ ९ ॥

सुधासारसुश्वेतया देहभासा
समन्तान्निषिञ्चन् स पद्मायुधो नः ।
सदा संनिधानं निधानं बुधानां
विधेयादमेयागमान्ताविधेयः ॥ १० ॥

जगन्नाथ जन्मादयस्ते न सन्ती-
त्यनेके गृणन्ति श्रुतीनां निगुम्भाः ।

असक्तस्वभक्तानुकम्पी पुरस्त्वं
दरीदृश्यसे देव नन्दादिगेहे ॥ ११ ॥

इहाजायमानो मुहुर्जायतेऽपी-
त्यसावादिदेवः श्रुतिः काचिदिन्धे ।
न चेयं विरोधप्रसक्तिर्यतस्ते
न खल्वीदृशं जन्मकर्मादि दिव्यम् ॥ १२ ॥

य एषोऽन्तरादित्य उद्यत्प्रकाशः
सुवर्णारुणश्मश्रुकेशः सुपर्णः ।
ज्वलद्दिव्यभूषांशुदेदीप्यमानः
स एवेति निश्चीयते साधुभिस्त्वम् ॥ १३ ॥

न तत्र प्रकाशत्यसौ तीव्रभानु-
र्न वा शीतभानुर्न ताराकुलानि ।
इमा विद्युतो नैव वह्निः कुतोऽयं
त्वदीयेन सर्वं प्रकाशेन भाति ॥ १४ ॥

रसोऽसि त्वमप्सु प्रभा चण्डभानौ
सुगन्धोऽसि भूमौ सुधा शीतधाम्नि ।
भवान् पुंसि चैतन्यमूष्मा कृशानौ
धनुर्व्योम्नि च त्वं समीरे च सत्त्वम् ॥ १५ ॥

नरेन्द्रं नराणां सुरेन्द्रं सुराणां
धरित्रीधराणां च सौवर्णशैलम् ।
कवीनां च शुक्रं सुरार्यं गुरूणां
भृगुं त्वामृषीणां बुधाः संगिरन्ते ॥ १६ ॥

कुमारो भवान् नाथ सेनापतीनां
मुनीनां भवान् व्यासनामा मुनीन्द्रः ।
भवान स्थावराणां तुषाराद्रिरुच्चै-
र्भवान् पारिजातोऽस्ति कल्पद्रुमाणाम् ॥ १७ ॥

भवान् शंकरो नाम रुद्रेषु भद्रो
भवान् कापिलो योगसिद्धेषु मूर्तिः ।
भवान् वासुकिः पन्नगेषु प्रवीरो
भवानुत्तमौजाः पतङ्गेषु ताक्ष्यः ॥ १८ ॥

भवानक्षराणामकारः प्रतीतो
भवान् पाण्डवानामपि श्वेतवाहः ।
भवान् पादपानां वरः पिप्पलद्रु-
र्भवान् सामवेदोऽस्ति वेदेषु शौरे ॥ १९ ॥

त्वमुच्चैःश्रवा वाजिनां वारणानां
त्वमैरावतस्त्वं गवां कामधेनुः ।
त्वमम्भोधिजन्मासि रत्नं मणीनां
त्वमोंकारनामासि मन्त्रो मनूनाम् ॥ २० ॥

श्रिया संविदा वा बलेनापि शक्त्या
रुचा वापि युक्तं परं वस्तु यद्यत् ।
तदेतत् समस्तं पुराणप्रवीण
त्वदीयांशसंभूतमेवामनन्ति ॥ २१ ॥

ज्वलत्यग्निरूर्ध्वं मरुद् वाति दिव्यं
तपत्येष भानुः सृजत्यभ्रमम्भः ।

भुजंगाधिराजो भुवं चापि धत्ते
तवैव श्रियेति श्रुतिः प्राह शौरे ॥ २२ ॥

रमानाथ मध्येहृदम्भोजमध्ये
सदा संनिविष्टं भवन्तं स्मरन्तः ।
अपारं समुत्तीर्य संसारवार्धिं
परं तत्पदं ते भजन्ते हि सन्तः ॥ २३ ॥

सलक्ष्मीकमम्भोधिमध्याधिवासं
समुल्लासिकल्हारमालाभिरामम् ।
घनश्यामवर्णं कदाचिद् भवन्तं
परं भावयन्तो भवन्तीह धन्याः ॥ २४ ॥

भवान् शंखचक्रे दधद् भानुचक्रे
सरोजाक्ष संवीक्ष्यते येन साक्षी ।
स निर्धूतपापस्तथा चाकशीति
प्रकृष्टोऽनिकृष्टो यथा भानुकान्तः ॥ २५ ॥

यदा चिन्त्यसे यैर्हरे चन्द्रबिम्बे
सुधाभिः प्रभाभिः प्रपञ्चं निषिञ्चन् ।
तदा त्वं पुरस्तान्मनस्तापमाला-
मशेषाममीषां धुनीषे निमेषात् ॥ २६ ॥

वरं पुस्तकं चाभयं हस्तपद्मै-
र्वहन्नक्षमालामपि स्फाटिकीं त्वम् ।
सुधानाथ संभाव्यसे येन शुभ्रः
स कर्ता भवेदाशु काव्यावलीनाम् ॥ २७ ॥

मुहुर्वल्लवीनां गणं मोहयन्तं
प्रलम्बालकान्तं कदम्बाधिरूढम् ।
निधत्ते यदा कृष्ण चित्ते स्थितं त्वां
तदा कामिनीनां भवेदेव कामः ॥ २८ ॥

महानीलगोत्रप्रभामित्रगात्रं
महाचित्रमायूरपिञ्छावतंसम् ।
महानन्दगोबृन्दमध्यस्थितं त्वां
महान्तः स्मरन्तो महीपा भवन्ति ॥ २९ ॥

समाक्रम्य पादेन दुष्टं भुजङ्गं
समालम्ब्य हस्तेन पुच्छं तदीयम् ।
सलीलं फणामण्डले तस्य नृत्यन्
समाधीयसे साधुचित्ते विषार्ते ॥ ३० ॥

समुद्धृत्य गोवर्धनं छत्ररूपं
समस्तानि भूतानि भीतानि वर्षात् ।
अवन्तं भवन्तं सकृच्चिन्तयन्तो
दुरन्तानन्तापदब्धींस्तरन्ति ॥ ३१ ॥

पवित्रं विचित्रं त्वदीयं चरित्रं
समाकर्ण्य कर्णामृतं पूर्णकामाः ।
गलत्तोयनेत्राः स्फुरद्रोमगात्राः
प्रहर्षप्रकर्षप्रवाहं प्रयान्ति ॥ ३२ ॥

कृती जीर्णचेलः कुचेलः कृशस्त्वां
प्रपेदे यदा देवभावानभिज्ञः ।

समस्तानि भाग्यानि तस्मै तदानी-
मदास्त्वं दुरापानि तत्तादृशानि ॥ ३३ ॥

हरे कृष्ण कृष्णेति कृष्णां वदन्ती-
मरक्षः समक्षं रिपूणां सभायाम् ।
अरण्ये शरण्योऽभवः पाण्डवानां
सरस्यां गजस्यापि जीवातुरासीः ॥ ३४ ॥

अहो देवदेव प्रभो कैटभारे
कुमारं चिरप्राप्तकीनाशलोकम् ।
मुकुन्दादिशस्त्वं मुदं चाप्यपूर्वा-
मुपाध्यायवर्याय विद्याप्रदाय ॥ ३५ ॥

इहानेकशोकावलीढाय गाढं
प्रतप्ताय पित्तानिलश्लेष्मपूगैः ।
हृषीकेश हीनाय दीनाय मह्यं
प्रसीद प्रसीद प्रसीद प्रसीद ॥ ३६ ॥

वदेयं वदेयं भवन्नाम दिव्यं
भजेयं भजेयं त्वदीयं प्रपन्नम् ।
जपेयं जपेयं मनुं तावकीनं
स्मरेयं स्मरेयं तवैवाङ्घ्रिपद्मम् ॥ ३७ ॥

हरे चक्रधारिन् हरे ह्लादकारिन्
महानक्रवैरिन् महीभारहारिन् ।
अहं त्वत्कथादुग्धपानं विनान्यत
त्यजेयं त्यजेयं त्यजेयं त्यजेयम् ॥ ३८ ॥

इदं देव दृष्टिद्वयं मामकीनं
तवैवाङ्गसौन्दर्यमीक्षेत साक्षात् ।
असौ नासिकापि प्रजिघ्रेत् पवित्रं
भवत्पादमूलार्पितं पत्रपुष्पम् ॥ ३९ ॥

नमेदेष मूर्धा पदाम्भोरुहं ते
तवैवार्चयेत् ताविमौ चापि हस्तौ ।
त्वदीयानि पुण्यानि धामानि गच्छेत्
पदद्वन्द्वमेतन्ममानन्त विष्णो ॥ ४० ॥

पुरे वा वने वा गिरौ वा समुद्रे
यदा यत्र कुत्रापि यायाज्जनोऽयम् ।
तदा तत्र तत्रापि पक्षीन्द्रकेतो
भवानेव भद्रं विधेयादमेयम् ॥ ४१ ॥

तनोति श्रियं तावदाधिं धुनीते
करोति द्रुतं शर्म कर्माणि दोग्धि ।
प्रतापं दुरापं च विज्ञानरत्नं
प्रदत्ते च मुक्तिं मुकुन्दप्रसादः ॥ ४२ ॥

इति मुकुन्दप्रसादो नाम स्तोत्रराजः संपूर्णः

# ६८. यदुगिरिनारायणस्तवः[1]

तिरुमलार्यकृतः

तर्कातर्किमुधाग्रहप्रतिवदद्दुर्वादिदुर्वारदु-
गर्वोर्वीधरकूटकुट्टनकलादम्भोलिवाग्गुम्भनः ।
व्यासोन्नीतनिशातनीतिदलितप्रच्छन्नबौद्धव्रजः
श्रीरामावरजो मुनिर्विजयते सिद्धान्तजैत्रध्वजः ॥ १ ॥[2]

आशासे षट्पदामोदवहां गुरुपरंपराम् ।
श्रीनारायणपादाब्जमधुधारामिवापराम् ॥ २ ॥

एधतां यतिराजस्य साम्राज्यं सर्वतोमुखम् ।
यत्र संपत्कुमारोऽपि युवराजपदास्पदम् ॥ ३ ॥

वन्दे भगवतः पादूं वकुलामोदमेदुराम् ।
तत्पदामर्शसंपन्नमञ्जुशिञ्जामनोरमाम् ॥ ४ ॥

स्वामी सुशीलः सुलभः सर्वज्ञः सर्वशक्तिधृत् ।
वत्सलो यत्सहायस्तां वन्दे यदुगिरीश्वरीम् ॥ ५ ॥

[1] Edited from the MS. No. 69730 (D. C. No. 1812). This Stotra on the God at Melkote near Mysore was printed in Telugu characters, in 1933, along with the commentary by Śiṅgarārya (brother of the author) and published by Jaggu Venkatacharya of Melkote. The Introduction to that edition gives some details of the life and works of the author (A.D. 1645-1706).

[2] Instead of this the printed edition has the following verse:

वाधूलश्रीनिवासार्यकृपासंपन्नवैभवम् ।
कौशिकश्रीनृसिंहार्यं कल्याणगुणमाश्रये ॥

अस्ति स्वस्तिवहं लक्ष्मीसंस्तुतं वस्तु निस्तुलम् ।
भूनीलास्तनकस्तूरीभूषितं यदुभूधरे ॥ ६ ॥

समिन्धे श्रीतनुलतास्वर्णसबन्धबन्धुरः ।
यदुभूधरकोटीरस्फुरन्मरतकाङ्कुरः ॥ ७ ॥

ईक्षे प्रतिक्षणं लक्ष्मीपादलाक्षारसोक्षितम् ।
श्रीयादवाचलशिखाशेखरश्यामलोत्पलम् ॥ ८ ॥

परेषां शङ्खचक्राद्यैः स्वेषामभयमुद्रया ।
हितं प्रियं च कलयन् पायाद्यदुगिरीश्वरः ॥ ९ ॥

यदभ्यस्तानन्दामृतजलधिकल्लोलकणिका-
रसास्वादाध्माता श्रुतिरपि विहस्ता निववृते ।
स्वकीयं सार्वज्ञ्यं प्रभवति न यस्य स्वविषये
यदुक्ष्माभृन्नाथं तमहह वयं स्तोतुमुदिताः ॥ १० ॥

गन्तुं वर्त्म गरुत्मतः प्रयततां खञ्जः स्वयं जानुना
वोढुं वल्गतु डुण्डुभः स्वशिरसा शेषीमशेषां धुरम् ।
स्वैरं प्रक्रमतां वितस्तिविमितस्त्रैविक्रमान् विक्रमान्
आचार्यैः स्तुतमास्तुमो वयममी श्रीयादवाद्रीश्वरम् ॥ ११ ॥

[अहह गणनां न्यक्कुर्वाणा गुणा यदुभूमिभृत्-
परिबृढ कथं सोढारस्ते पुनः स्तुतिसाहसम् ।
अपि तु भगवन्नेते स्वैरं यतीशवशंवदाः
सरसमधुरस्मेराः संप्रत्यतोऽयमुपक्रमः ॥][1]

[1] This verse is not found in our MS. but only in the printed edition.

वार्क्षं माक्षिकमाजिघृक्षति न किं खर्वो न वादित्सते
बालः किं शशिनं सिषाधयिषति श्रेयो न किं वालसः ।
तुष्टूषामितरां न किं यतिपते संपत्सुतं किं तु तत्
सर्वं प्राप्यरुचिप्रकर्षजमिति प्राज्ञः समाधित्सतु ॥ १२ ॥

अपि च मम वचांसि प्रायशो वेदवादा-
दपि यदुकुलनाथं स्वैरमावर्जयन्ति ।
न किमु मृगमदेन्दुस्मेरकाश्मीरलेपा-
दपि रमयति गोष्ठोपान्तजम्बालचर्चा ॥ १३ ॥

प्रियं कुलधनं प्रभुं पितरमीश्वरं मातरं
गुरुं प्रणतवत्सलं परमबन्धुमाप्तसखम् ।
यदुक्षितिधरोपरि व्यवसितात्मदानं न को
यतिप्रवरनन्दनं हृदयचन्दनं वन्दते ॥ १४ ॥

महसां निधये त्रयीशिखामणये मङ्गलमङ्गलात्मने ।
यदुभूधरशृङ्गबन्धवे स्पृहयाम्यद्भुतशीलसिन्धवे ॥ १५ ॥

अस्मै नमो यदुगिरिप्रवराय सूरि-
सेव्याङ्घ्रये विमलसत्त्वगुणोत्तराय ।
यः श्वेतमृत्तिलकितो धृतवैष्णवश्रीः
श्रीकान्तमव्यवहितं जगतां व्यनक्ति ॥ १६ ॥

चाम्पेयान्यपचिन्वतामुपवने मालाकृतां श्रीपते-
रानम्योपनयन्ति यत्र कपयः स्वैरं दुरापाण्यपि ।
ईडे क्रोडमुखावखातविततावालावटासेचन-
न्यञ्चत्कुञ्जरपुष्कराम्बुशिशिरं श्रीयादवक्ष्माधरम् ॥ १७ ॥

यत्रानुषङ्गिकनिवासलवोऽपि सूरि-
संसद्धराविनिमयश्रियमातनोति ।
तासु प्रसन्नहरिचन्दनशेखरासु
श्रीयादवाचलतटीषु कुटीमुपेयाम् ॥ १८ ॥

इयमभिवन्द्यतां यदुधराधरमौलिधृता
नृहरिगृहान्तगोपुरसमुन्नतिरुन्मिषिता ।
परिणतभूरिभाग्यजनलोचनभृङ्गकुलं
ललितवतंसकैतकशिखेव सुखाकुरुते ॥ १९ ॥

रहसि सहरिरंसायातकंसारिकान्ता-
चरणकमलसक्तालक्तरक्तोपकण्ठाः ।
यदुधरणिभृतोऽमी जन्मकान्तारपान्थ-
श्रमहरतरुमृष्टाः सानवो नः पुनीरन् ॥ २० ॥

रघुपतिचापकोटिदृढकुट्टनविस्फुटितोपलोच्चलद्-
विमलझरीषु कृष्णबलरोपितकल्पमहीजराजिषु ।
यतिपतिपादरेणुपरिमर्शपवित्रशिलासु निर्भरा
यदुगिरिसानुसीमसु रमेमहि साभिमताः समाः शतम् ॥ २१ ॥

कुरवकमल्लिकावकुलचम्पककुन्दलता-
र्पितकुसुमावतंसमकरन्दरसोऽञ्चिताः ।
यदुकुलदेवतापदसरोजपरागधरा-
श्चिरमवगाहिषीय यदुशैलझरीलहरीः ॥ २२ ॥

पदे तत्र विष्णोः परत्वानुभूत्या
परं निर्वृतास्तस्य सौलभ्यलोभात् ।

यदुक्ष्माभृदन्ते वसन्त्यत्र मुक्ता
नुमस्तान् समस्तांश्चरस्थास्नुरूपान् ॥ २३ ॥

अधूर्जटिजटाटवीतटकपालसंपूरणा-
मजह्नुजठरानलक्कथनखिन्नयादःकुलाम् ।
असागरचितावनोपचितसास्थिभस्मोत्करा-
मनुज्झितयदुक्ष्माधरपदां भजे स्वर्नदीम् ॥ २४ ॥

निर्णीचोच्चभिदं निराकृतगुणावद्यावमर्शं जना-
नाप्लावैरनुगृह्णतीं गुरुचिरागाधप्रसन्नाद्भुताम् ।
श्रीमद्यादवभूधरे सुचरितोल्लासावहामन्वहं
कल्याणीमवगाहिषीय करुणां नारायणस्यापराम् ॥ २५ ॥

हरेर्वराहरूपिणः श्रमाम्बुसंभवं भवश्रमापहम् ।
भविष्णुविष्णुपद्युपासितं सरश्चरीकरीतु मङ्गलम् ॥ २६ ॥

सेयं वैष्णवनर्महर्म्यशिखरोदञ्चत्पताकावली-
संघर्षक्षतचन्द्रनिःसृतसुधालिप्तेव देदीप्यते ।
श्वेतद्वीपविवर्तमूर्तिरनघश्रीभूमिनीलासख-
श्रीनारायणचित्तनिर्वृतिकरी नारायणाख्या पुरी ॥ २७ ॥

अश्रान्तोत्सवबद्धकौतुकयतिक्षोणीशसंपत्सुत-
प्रस्थानोत्सुकपौरयौवतसुसंमृष्टप्रतोलीमुखाम् ।
फुल्लत्पल्लवतोरणच्युतमधुस्यन्दापनीतश्रमा-
ऽशेषागन्तुजनामिमामनिमिषं सेवे पुरीं यादवीम् ॥ २८

तत्तादृक्षगजेन्द्रमोक्षणरथारोहक्षणस्वर्धुनी-
तीर्थाध्यक्षणपूर्वपर्वमहिते यस्मिन् यतीन्द्राज्ञया ।

आमातङ्गवसिष्ठमेति जनता मुक्तैकरस्यां श्रियं
सोऽयं प्रत्यहमस्तु वज्रमकुटीदिव्योत्सवो वात्सरः ॥ २९ ॥

स्वाङ्गीकारोपहारीकृतनतदुरिताः स्वाङ्घ्रिरेणुप्रभाव-
प्रेक्षासाक्षीकृतास्मत्सहपठितचतुर्वेदिसर्वापराधाः ।
श्रीमन्नारायणाङ्घ्रिद्वयपरिचरणैश्वर्यगर्वादुदस्त-
श्रीवैकुण्ठोपकण्ठा यदुगिरिकटकस्वामिनो मे स्वदन्ताम् ॥ ३० ॥

शुचि रुचिरं मनोज्ञचरितं नलिनाक्षदया-
मृतसरसीरसार्द्रमनुरञ्जितमञ्जुरवम् ।
इदमिह पक्षपातमनिमित्तकमाद्रियते
यदुगिरिहेमसानुरसिकं मयि हंसकुलम् ॥ ३१ ॥

केतुं नः प्रभवन्ति हन्त यतिराड्जन्मोत्सवोन्मस्तक-
प्रेमव्युत्क्रमनृत्यदार्यचरणोत्क्षिप्ता यदुक्ष्माभृतः ।
धूल्यो याः किल रङ्गवेङ्कटमुखश्रीदिव्यदेशाश्रितै-
रर्च्यन्ते नियमेन तीर्थवटिकारूपेण गोपायिताः ॥ ३२ ॥

मधुरिपुजलनिधिदृगमृतवीचीकृतपरिचितिमुरुमणिगणकीर्णाभम् ।
परिसरनतसुरसदसमुपासे यदुगिरितटभुवि तदजिरवेलाम् ॥ ३३ ॥

ताम्बूलदर्पणपतद्ग्रहतालवृन्त-
भृङ्गारधौतवसनाभरणस्रगादीन् ।
आबिभ्रतो यतिपतिप्रणिधीन् विभोर्द्वि-
पञ्चाशतः परिजनप्रवरान् भजामः ॥ ३४ ॥

द्रुहिणसनकयोगिनारायणात्रेयसंरक्षितं
यतिपतिकृपयेह सर्वात्मसेव्यां दशां प्रापितम् ।

निगमशिखरवत् परब्रह्मगर्भं यदुक्ष्माधर-
प्रवणमनुभवेयमानन्दसंज्ञं विमानं मुहुः ॥ ३५ ॥

शुभोदारस्निग्धाद्भुतमहितसंस्थानमभितः
सरन्तीभिर्भाभिर्हरितयदशेषाश्च हरितः ।
परं ज्योतिः साक्षादकरवमिहानन्दनिलये
विमाने मञ्जूषोन्मिषितमिव शातं मरतकम् ॥ ३६ ॥

युगपदुदितभास्वत्कोटिधामा सुधाब्धि-
स्नपित इव सुजातस्निग्धदिव्याद्भुतश्रीः ।
भुवनभवनभूषा ज्योतिषां ज्योतिरेष
स्फुरति यदुमहीभृन्मौलिरत्नप्रदीपः ॥ ३७ ॥

जगत्संभवक्षेमशिक्षादिदक्षं
परं क्षोणिलक्ष्मीकटाक्षैकलक्ष्यम् ।
यदुक्ष्माधरे मोक्षदानैकदीक्षं
महः पुण्डरीकाक्षमध्यक्षयामः ॥ ३८ ॥

अये श्यामोदारः किमयममृताध्मातजलद-
स्तमालद्रुः किंवा पृथुललितोद्दामविटपः ।
यदुक्ष्माभृत्सानुप्रगुणितविलासो नु कलभः
किमु क्रीडाशैलः श्रिय इह महानीलमहितः ॥ ३९ ॥

दरीधर्ति नीलाद्रिलीलां मुकुन्दो
बरीभर्ति हेमस्नुतां पीतवासः ।
वरीवर्ति चक्राम्बुजं पुष्पवत्तां
चरीकर्ति शृङ्गश्रियं रत्नमौलिः ॥ ४० ॥

मुखाम्भोजासक्तः किमलकतमःकोपकलुषः
किमु श्रीमच्चक्षुःस्वजनिभवनोत्कः किमथवा ।
जगच्चक्षुः साक्षान्मिषति यदुशैलेशमकुटी-
मिषेण प्रत्यूषे तदिदमुपतिष्ठेमहि महः ॥ ४१ ॥

न्यञ्चन्मौलिमणिप्रभाविनमितं प्रोद्यन्मुखेन्दुद्युति-
प्रत्यावर्तितमूर्ध्वपुण्ड्रविमलच्छायाविभक्ताकृति ।
पार्श्वोच्छ्रृङ्खलशङ्खचक्ररुचिभिः प्रायो विशीर्णं यदु-
क्ष्माभृद्वल्लभचूर्णकुन्तलतमः फालान्तमालम्बते ॥ ४२ ॥

अमी यदुधराधरेश्वरकिरीटरत्नाङ्कुराः
परत्वमुखरा मुहुर्मुहुरभीषयिष्यन्न नः ।
मृदुस्मितसुधारसोक्षितकटाक्षलीलायिता-
न्यकृत्रिमसुशीलतां सपदि नावदिष्यन् यदि ॥ ४३ ॥

अनिमित्तदयामृतसिक्तमृदुस्मितचन्द्रिकमस्तसमस्ततमः ।
यदुशैलपतेर्मुखमिन्दुमखं प्रमदं मम दृक्कुमुदं कुरुते ॥ ४४ ॥

दृशोर्विशालमायतं भ्रुवोश्च नीलमानतं
स्मिते मृदूद्गतं सितं रदेषु सान्द्रमुज्ज्वलम् ।
स्फुरद्विकासि गण्डयोश्चलं विलम्बि कुन्तले ।
यदुक्ष्माधरेशितुर्मुखं सुखं करोति नः ॥ ४५ ॥

नीलभ्रूमरुकाभ्रमायतदृगम्भोजं मिषन्नासिका-
चाम्पेयं धवलोर्ध्वपुण्ड्रकपटोदञ्चच्छिखाकैतकम् ।
उत्फुल्लाधरपल्लवं क्षितिरमालीलोचितं कन्धरा-
काण्डोदञ्चि यदुक्ष्माधरपतेर्मन्ये मुखं कन्तुकम् ॥ ४६ ॥

स्फुरच्चक्षुर्मीनाच्छ्रवणललितावर्तमहिताद्
यदुक्ष्माभृत्सानुप्रणयिमुखलावण्यजलधेः ।
सुधासूतेरोष्ठद्वयरुचिरवीचीविषमिता-
दुदेति भ्रूवेलावनपिहितभागोऽलिकशशी ॥ ४७ ॥

भ्रूमध्यतः प्रतिपदिन्दुकलावदात-
श्वेतो धिनोति तिलको यदुशैलबन्धोः ।
लालाटकान्त्यमृतसंग्रहणाय लक्ष्मी-
निक्षिप्तमौक्तिकचषकश्रियमाददानः ॥ ४८ ॥

भ्रूसेतुबन्धविधृताक्षितटाककुल्या
कल्या कटाक्षसरणिर्यदुशैलनेतुः ।
निम्नोन्नतस्थलजलादिभिदानपेक्ष-
माप्लावयत्यमुमिमं करुणासकुल्या ॥ ४९ ॥

अकस्मादस्माकं प्रचुरपरितापप्रशमनैः
कटाक्षोर्मिक्षेपैरनवधिकृपासौरभवहैः ।
सुधासिन्धुः साक्षादयमिह यदुक्ष्माधरतटे
स्वसेवासाम्राज्यौपयिकमभिषेकं वितनुते ॥ ५० ॥

तन्मन्दस्मितविस्मितं तदलकावर्तानुवृत्तं मुहु-
स्तद्बिम्बाधररागरक्तमनु तत्सौगन्ध्यसंमोदितम् ।
तद्भ्रूविभ्रमलब्धविभ्रमशतं तद्दृक्तरङ्गोर्मिलं
मच्चेतो यदुशैलवल्लभमुखच्छायोन्मुखं वर्तते ॥ ५१ ॥

कर्णिकामकरयुग्ममुदग्रं कर्णपाशबडिशं विनिगीर्य ।
वेष्टते यदुगिरीशमुखांशूत्कृष्यमाणमिदमंसतटाकात् ॥ ५२ ॥

पाञ्चजन्यमुपनीय सरूपं रूपसौष्ठवविवेचनचञ्चुः ।
यादवाचलपतिर्गलकम्बुं तारहारकलितं किमतानीत् ॥ ५३ ॥

पार्श्वोदञ्चन्यञ्चत्कुञ्चद्भुजकल्पविटपमञ्जर्यः ।
शङ्खरथाङ्गगदाभयमुद्रा भद्राय यादवाद्रीन्दोः ॥ ५४ ॥

श्रीभूमीकुचकुम्भनिर्भरपरीरम्भप्रमोदादिव
श्रीदिव्यायुधभव्यभूषणपरामर्शावलेपादिव ।
तारुण्याद्भुतयौवनव्यतिकरोत्साहादिवामी यदु-
क्ष्माभृद्वल्लभबाहवः सुपृथुलोदग्राः परं जाग्रति ॥ ५५ ॥

विटपाः किल कल्पपादपानां मधुपावर्जितपल्लवप्रसूनाः ।
यदुशैलपतेर्भुजाः सुवृत्ताः फलवर्गान् सुवतेऽत्र सूरिभोग्यान् ॥ ५६ ॥

आभ्यामङ्क्यतेति वोपनयतः श्रीशङ्खचक्रे उभा-
वेतावाश्रयतेति वक्ति गदया निर्दिश्य पादौ परः ।
मा भैष्टेत्यपरो व्यनक्ति यदुभूभृद्वल्लभास्मादृशा-
माद्याचार्य चतुर्भुजैः प्रगुणयस्याचार्यकप्रक्रियाम् ॥ ५७ ॥

स्वतः श्यामोदारं तरुणतुलसीदामहरितं
सितं मुक्ताहारैर्मणिवररुचा भास्वरमिदम् ।
रमापादालक्तारुणमिह यदुक्ष्माधरपते-
रुरश्चित्ते धत्ते मम रुचिविभेदान् नवनवान् ॥ ५८ ॥

श्रीकान्तकल्याणगुणानुषक्तमुक्तावलीसंस्कृतदिव्यधाम ।
वक्षो यदुक्षोणिधरेश्वरस्य मन्ये परं व्योम परार्ध्यभूम ॥ ५९ ॥

निगिरदपि जगन्ति क्षाममुद्यद्बुभुक्षं
सुचरितसुतभिक्षास्वादसंपूर्णकामम् ।

यदुवरणिधरेन्दोस्तुन्दमादौ यशोदा-
कलितकनकदामग्रन्थिलक्ष्म प्रतीक्षे ॥ ६० ॥

श्रीयादवाचलपतेः कलयेव लग्नं
कक्ष्यावनद्धकनकत्सरुखड्गवल्लि ।
गाढं निकृन्तदिव निष्ठुरकर्मबन्ध-
निर्बन्धबन्धुरचतुर्विधदेहबन्धम् ॥ ६१ ॥

विद्युद्भ्रान्ता तटित्वानिव नवतरणिच्छाययेवाञ्जनाद्रि-
र्वेलाहेमस्थलीभिर्जलधिरिव नभः सान्द्रसांध्यश्रियेव ।
आक्रीडः कर्णिकारैरिव कनककुथेनेव दन्तावलोऽसौ
देवः पीताम्बरेण प्रथयति सुषुमां यादवक्ष्माधरेन्दुः ॥ ६२

एवंप्रायानुपूर्वी यदपि करिकरे स्निग्धता दूरदूरे
रम्भास्तम्भे प्रसक्ता यदपि च कियती स्निग्धता क्वानुपूर्वी ।
स्यातां स्नैग्ध्यानुपूर्व्यौ कृतकमरतकस्तम्भके नो मृदुत्वं
मन्ये मृग्योपमाने यदुशिखरिपतेरूरुकाण्डप्रकाण्डे ॥ ६३ ॥

किं काहल्यौ किंनु पूगीकुहल्यौ श्रीभूवाह्ये किं समीच्यौ कलाच्यौ ।
मुग्धस्निग्धोदारदिव्यानुपूर्व्यौ किंवा जङ्घे श्रीयदुक्ष्माधरेन्दोः ॥ ६४ ॥

विभोः पादाम्भोजं तदिदमशरण्यैकशरणं
परं प्राप्यं प्राप्तं यदुगिरिशिखाशेखरसखम् ।
यदामर्शादाशु द्रवति भृशमाकाशमवशा-
दपि ग्रावा जीवत्यपि मिषति दग्धामिषमपि ॥ ६५ ॥

सुचरितसुमतिसहितपरचरणप्रणयमननुगुणमिव परिगणयन् ।
यदुगिरिपरिबृढचरणमशरणः शरणमगममिह परिचरणपरः ॥ ६६ ॥

क्ष्मालक्ष्मीकल्पव्रततिविततां नातिशिशिरा-
मनुष्णामभ्यर्णोन्मिषदमृतसौगन्ध्यसुभगाम् ।
भवाध्वभ्रान्तिप्रभवपरितापप्रशमनीं
श्रये पादच्छायां यदुगिरितटीकल्पकतरोः ॥ ६७ ॥

उद्यन्मौलिमुदारफालमुचितश्वेतोर्ध्वपुण्ड्र शुभो-
दञ्चद्भ्रूलतमायतायतदृगम्भोजं सुजातस्मितम् ।
कम्बुग्रीवमुदग्रबाहुविटपं लक्ष्मीलसद्वक्षसं
वन्दे सुन्दरमध्यमोरुचरण श्रीयादवाद्रीश्वरम् ॥ ६८ ॥

उत्फुल्लपद्मपदमुल्लसदूरुकाण्डमुद्दामकाञ्चिमुपवीतसुवर्णचेलम् ।
आजानुबाहुमरुणाधरमायताक्षमाशास्महे सपदि यादवशैलनाथम् ॥ ६९ ॥

शमयति तमः सूते सर्वं धिनोति शुभां धियं
घटयति सतां सक्तिं दत्ते सदार्यसमाश्रयम् ।
भवपथपरिश्रान्तिं रुन्धे व्यनक्ति परं पदं
यदुगिरिशिखारूढं ज्योतिः किमप्यतिमानुषम् ॥ ७० ॥

अव्याजं दयते स्मरत्युपनयत्यालोकतेऽङ्गीकरो-
त्युत्सङ्गे कुरुते प्रसीदति मुहुर्मूर्धानमाजिघ्रति ।
आनन्दाननुभावयत्यभिमतैर्दास्यामृतैः प्लावय-
त्येष श्रीयदुशैलमङ्गलनिधिर्नारायणोऽस्मत्कुलम् ॥ ७१ ॥

प्रेमार्द्रया कमलया क्षमया समेत-
मंसांसघट्टनरसोत्पुलकाङ्गभागम् ।
प्राग्दक्षिणे तदिह संयमिसार्वभौम-
संपत्प्रसूतमपरं वपुराविरस्ति ॥ ७२ ॥

श्रीभूस्तनश्रुतिशिरोयतिशेखराङ्क-
श्रीयादवाचलशिखासुलभोपलम्भम् ।
आपन्नतापहरमाश्रितकामधेनु-
माशास्महे कमपि पूरुषमम्बुजाक्षम् ॥ ७३ ॥

उत्तुङ्गं मकुटे विशालमलिके वक्रं भ्रुवोरायतं
नेत्रान्ते रुचिरं कपोलफलके स्मेरं मुखाम्भोरुहे ।
स्फीतं वक्षसि संस्थुलं भुजवने मृग्यं वलग्ने सुसं-
श्लिष्टं पादयुगे यतीन्द्रहृदयावासं महः संश्रये ॥ ७४ ॥

हस्तारविन्दकलिताभयशङ्खचक्र-
मब्जासनाहितपदाब्जमुदग्रमौलि ।
आविःस्मितं सुवदनं यतिराजसूनोः
संस्थानमेव शरणं शरणार्थिनां नः ॥ ७५ ॥

अञ्चत्किरीटमलकावृतफालमाय-
न्नेत्राब्जमङ्कुरितहासमुदग्रनासम् ।
विष्वग्भुजं विपुलवक्षसमीक्षिषीय
संपत्सुतं तत इतः पुरतोऽभितश्च ॥ ७६ ॥

जनो यत्सीमान्ते यतिनृपतिवार्तामहिमवित्
कुटीं कुर्वन्नीष्टे परमपदवाटीवितरणे ।
तदार्यागारान्तावकरमपनेतुः किल समाः
शतं भोगस्थानं मम भवतु **नारायणपुरम्** ॥ ७७ ॥

अचिन्तयित्वा मद्वृत्तमालोक्याचार्यसंततिम् ।
दयानिधे निधेहि त्वद्दासदास्यश्रियं मयि ॥ ७८ ॥

इति श्रीयदुगिरिनारायणस्तवः संपूर्णः

## ६९. यदुनाथसुप्रभातम्[1]

यामिन्यपैति यदुनाथ विमुञ्च निद्रा-
मुन्मेषमृच्छति तवोन्मिषितेन विश्वम् ।
जातः स्वयं खलु जगद्धितमेव कर्तुं
धर्मप्रवर्तनधिया धरणीतले त्वम् ॥ १ ॥

अश्रान्तसंततिभिराभरणप्रकाशै-
रारात्रिकं प्रमुखयन्त्य इवोपचारम् ।
इच्छन्ति ते प्रथमदृष्टिमनन्यलभ्यां
पद्मानना: पदनिवेशितधन्यहस्ताः ॥ २ ॥

वृद्धाः कथंचिदररं व्यतिभिद्य हैमं
दौवारिकास्तव गृहीतसुजातवेत्राः ।
निर्गच्छतः प्रविशतश्च निशामयन्तो
नाथ त्वदेकहृदया न भजन्ति तन्द्रीम् ॥ ३ ॥

विश्वैकतीर्थभजनेन विशुद्धिमन्तो
निद्रोज्झिता निगमसीम्नि निशात्यये च ।
वैतानिकान् विधिवशेन विहृत्य वह्नीन्
पुण्याशयाः परिचरन्ति पुरोधसस्ते ॥ ४ ॥

निद्रावशेन निभृतेक्षणमुत्थितानां
चित्राणि मन्थरपदान्यपगत्वरीणाम् ।
काले गृहीतमुचिते रशनाः कथंचि-
न्मौनव्रतं जहति मुग्धवधूजनानाम् ॥ ५ ॥

[1] Based on a recent transcript, No. TR 818 (D. C. No. 1814).

संत्यज्यते तरलमौक्तिकजालदृश्यै-
स्तारागणैस्त्रिदशवर्त्म तमालनीलम् ।
पद्मापतेरमृतनिर्मथनावसाने
दुग्धाम्बुराशिपृषतैरिव रूपमग्र्यम् ॥ ६ ॥

नाथ स्फुरन्त्युपयति द्युमणिप्रकाशे
न ज्योतिरिङ्खणगणा न च तारकाद्याः ।
तेजस्विनोऽपि तमसैव समृद्धिमन्त-
स्त्वत्संनिधौ मुषितभास इव त्वदन्ये ॥ ७ ॥

आनर्तितान् सललितं दिवसावसाने
वाचालरत्नवलयैर्निजहस्ततालैः ।
निद्रालसान् मृगदृशो गृहनीलकण्ठा-
नावासयष्टिशिखरादवरोहयन्ति ॥ ८ ॥

नृत्यन्त्युदीरितघनक्रमसामकाण्डे
नेदीयसीं तव निशम्य विभातनान्दीम् ।
चित्रातपत्रपरिमण्डलचारुबर्हाः
शृङ्गारयोनिशरपत्ररुचो मयूराः ॥ ९ ॥

निर्गत्य चित्रगरुतो निलयान्तरेभ्यः
तारस्वनास्तरुणविद्रुमताम्रचूडाः ।
रत्नाङ्गणेषु रमणीभिरवेक्ष्यमाणाः
क्रीडारणं विदधते कृकवाकुवर्याः ॥ १० ॥

प्राप्तास्तुलां हरितकोमलबाह्यपत्रैः
किंचित्परिस्फुरितशोणमुखैः सरोजैः ।

वामभ्रुवां वलयपङ्क्तिषु संचरन्त्यो
मञ्जु क्वणन्ति मणिपञ्जरशारिकास्ते ॥ ११ ॥

प्रत्यक्षिते तमसि यास्यति विप्रकर्षं
संभिन्नभानुमति संप्रति जीवलोके ।
गङ्गायमानसलिलं निजरश्मियोगात्
सिष्णासयेव सितभानुरुपैति सिन्धुम् ॥ १२ ॥

प्रत्यूषघर्मसमयेन समग्रधाम्ना
शोषं व्रजत्यमृतरश्मिमयूखपूरे ।
अह्नाय कैश्चिदभिघातमवाप्नुवन्त्य-
स्तारा: प्रयान्ति विलयं तनुबुद्बुदाभा: ॥ १३ ॥

पत्युस्त्विषां प्रजहत: प्रथमाङ्घितल्पं
संध्यासरोरुहदृश: प्रथमोत्थितायाः ।
सीमन्तिते तिमिरकुन्तलमध्यभागे
सिन्दूरराजिरिव भाति मयूखरेखा ॥ १४ ॥

ज्योत्स्नापदेशमवधूय सितोत्तरीयं
स्तोकावशेषितसदाभरणप्रबन्धा ।
अङ्गीकरोत्यरुणभावितमङ्गरागं
प्राचीदिशा दिनपतिं परिभोक्तुकामा ॥ १५ ॥

निर्णिज्य संप्रति निशाङ्गनिवेशलग्नं
कालेयपङ्कमिव संतमसं कलङ्कम् ।
क्षोणीभृतामरुणदीधितयोऽनुरक्ता:
पादानलक्तकरसैरिव रञ्जयन्ति ॥ १६ ॥

प्रादुर्भविष्यति चराचरजन्तुवर्गे
प्राप्तारुणेन विधुना तमसा च वेला ।
आभाति भावितपरस्परदेशयोगा-
न्मायाविभक्तिरिव लोहितशुक्लकृष्णा ॥ १७ ॥

उन्निद्रपद्मनयनः सुभगोत्पलाभः
संभावितो मुनिगणैरुपपन्नबोधैः ।
रागोत्तरां श्रियमवाप्य रथाङ्गशोभी
जातः स एष समयो जगदेकसेव्यः ॥ १८ ॥

नीतः श्रमं निहतरात्रिवरूथिनीक-
श्चन्द्रातपत्रविनिपातविलुप्तभूमा ।
प्रत्यूषवैरिविभवेन पराहतात्मा
कालप्रतीक्ष इव गच्छति कामवीरः ॥ १९ ॥

योऽसौ जनस्य दिशतीव सुधानिधानं
जातध्वनिः श्रुतिषु जागरदुन्दुभिस्ते ।
मन्ये स एव मदनस्य निशाचरस्य
स्वच्छन्दसौप्तिकनिवृत्तिमभिव्यनक्ति ॥ २० ॥

अन्तर्बहिश्च तमसा परिमुच्यमाने
जागर्यया जगति संप्रति दीप्यमाने ।
पञ्चायुधश्चिरमपि क्रमशान्तिमिच्छन्
निद्रामुपैति हृदयेषु नितम्बिनीनाम् ॥ २१ ॥

अग्रेभवन् गुरुरिव स्वयमानकाना-
मादिष्टसंसदिव कन्थरया तवैषः ।

व्यक्तप्लुतेन निनदेन विशुद्धवर्णः
        प्रस्तौति नाथ निगमान् प्रतिबोधनार्हः ॥ २२ ॥

मुग्धाः स्वमुष्टिपरिमेयमनोज्ञमध्याः
        पर्यायचापलतिका इव पञ्चबाणः ।
प्रास्थानिकप्रणयदुर्विनयोपशान्त्यै
        प्रत्यक्षयन् प्रतिनिवर्तयतीव यूनः ॥ २३ ॥

अन्तश्चकासदसितोत्पलमङ्गयोगाद्
        भासोन्मदेव परिमीलिततारकार्था ।
निष्पीतकान्तिमकरन्दरसं प्रतीच्यां
        नीहारभानुचषकं निदधाति संध्या ॥ २४ ॥

दृष्ट्वा निमीलितवतीं नियतिप्रभावा-
        दात्मप्रियां कुमुदिनीमवधूतधामा ।
च्योतत्तुषारनयनोदकबिन्दुरिन्दुः
        प्रस्थानमिच्छति महत्प्रतिपन्नदैन्यः ॥ २५ ॥

भोक्तुं दिवं निजवियोगविलुप्तदीप्तिं
        प्रागेव तीव्ररुचिना प्रहितेव संध्या ।
मालिन्ययोगमपनीय करावमर्शैः
        प्रायो यथार्हमनुलिम्पति कुङ्कुमेन ॥ २६ ॥

अर्धेन पाटलमनूरुकरानुषङ्गा-
        दर्धान्तरेण मणिमेचकमन्तरिक्षम् ।
अस्पृष्टतापमधिरोहति निस्तमस्कं
        संवीतपीतवसनेन तुलां त्वयैव ॥ २७ ॥

पद्मापदाम्बुरुहयावकपिङ्गधाम्ना
भासा नितान्तमुदयान्तरितस्य भानोः ।
आरज्यते गगनमद्य जगत्प्रसूते-
र्नाभीसरोरुहभुवा रजसेव गात्रम् ॥ २८ ॥

दग्धुं तमो दनुजबृन्दमिवाम्बुराशे-
रुत्तस्थुषो मधुरिपोरिव तिग्मधाम्नः ।
उन्मेषिणी सुमनसामुदिता पुरस्ता-
च्चक्रप्रभामनुकरोति मरीचिमाली ॥ २९ ॥

दृष्टिद्वयं नियतकालमिदं प्रजाना-
मेका निमीलति तयोरितराप्यलक्ष्म्या ।
तत्तादृशोस्तव दृशोर्युगपत्प्रबोधा-
दालोकयोगमनघं भजतां त्रिलोकी ॥ ३० ॥

प्राचीनशैलविषये प्रचुरांशुरेखां
संध्यादशामरुणरागघृतावसिक्ताम् ।
कालो निधाय सृजतीव शनैस्तदन्ते
तिग्मद्युतिं त्रिभुवनैकमहाप्रदीपम् ॥ ३१ ॥

पर्याप्तरश्मिनिकरेण सुवृत्तभूम्ना
सूर्येन्दुबिम्बयुगलेन समस्थितेन ।
आभाति कालवणिजा परिकल्प्यमाना
नक्तंदिवक्षणतुलेव नभःस्थलश्रीः ॥ ३२ ॥

नैशं तमः क्षिपति नन्दितचक्रवाके
पद्मानि बोधयति भावितमित्रभावे ।

दृष्टिं प्रसाधयति दर्शितसत्पथेऽस्मिन्
दोषोल्बणा कुमुदिनी बहुमानशून्या ॥ ३३ ॥

पादस्पृशां दिशति भूमिभृतां प्रकाशं
सत्त्वं समेधयति सद्भिरुदीरितार्घ्यः ।
तेजोगणानपि तिरस्कुरुते स्वदीप्त्या
चक्रप्रियस्त्वमिव संप्रति चण्डभानुः ॥ ३४ ॥

आजानपाण्डरतनुः परभागमृच्छन्
नीलाम्बरद्युतिमुषा निजलाञ्छनेन ।
स्फीताकृतिः परिगतो मदरागलक्ष्म्या
वीर त्वदग्रज इवैष विभाति चन्द्रः ॥ ३५ ॥

संध्योपरागसमयं प्रतिलभ्य पुण्यं
स्नातुं निशा गगनसौधतलावतीर्णा ।
आरक्तरूपमवलम्बयता कराग्रं
पत्या सह प्रविशतीव परं समुद्रम् ॥ ३६ ॥

देव त्वयीव दिवसागमजागरूके
संरक्तविश्वमुदयं सवितर्युपेते ।
अस्तं शनैरभिपतन् भजते मृगाङ्क-
स्त्वद्वैरिवारवनितावदनेन्दुवस्थाम् ॥ ३७ ॥

राजास्तमेति सुहृदा मदनेन सार्धं
दीनाकृतिः कुमुदिनी दृढबद्धकोशा ।
वैरी समेति विषमाश्व इतीव भीता
छायाच्छलेन भजते गगनं त्रियामा ॥ ३८ ॥

आमृश्य रात्रिमरुणोदयजातपुष्पां
प्राप्तानुताप इव सत्पथलङ्घनेन ।
ज्योत्स्नांशुकं द्विजपतिः परिधाय नूनं
व्रीडानतो विशति वारिनिधिं विवर्णः ॥ ३९ ॥

अभ्येति भानुरुदयाद्रिमसह्यतेजाः
स्थातुं स एष समयो न ममेति पश्यन् ।
प्रायः समाश्रयति पाशभृताभिगुप्तं
तारापतिश्चरमसागरतोयदुर्गम् ॥ ४० ॥

मूले मनाग् भवति मुञ्चति पूर्वभागं
शैथिल्यमृच्छति तमालरुचिस्त्रियामा ।
आकृष्यते चरमशैलवने विहर्तुं
सीरायुधेन यमुनेव सुधांशुनेयम् ॥ ४१ ॥

प्रस्थानकालभजनात् परितोषितेन
ज्योत्स्नात्मिकां हरिवधूसहजेन दत्ताम् ।
प्रायेण नाकवनितानखदीप्तिलक्ष्यां
शेषापटीं चमरभूभृदसौ दधार ॥ ४२ ॥

सूक्ष्माभिरामनिजदीधितिसूत्रलम्बी
पर्यन्तलग्नतिमिरालकदर्शनीयः ।
सिन्दूररञ्जित इवैष विभाति लक्ष्म्याः
सीमन्तमौक्तिकमणिः प्रतिभाति चन्द्रः ॥ ४३ ॥

प्रालेयरूषितमिदं प्रथमेतराब्धौ
मग्नैकदेशमनुयाति मृगाङ्कबिम्बम् ।

मानच्छिदां मकरकेतनसायकानां
शाणोपलं चिरनिघर्षणकर्शितार्थम् ॥ ४४ ॥

आदौ वराभमुदितं शरपाण्डुमध्ये
पश्चान्मधूकपरिधूसरमिन्दुबिम्बम् ।
संपद्यते पुनरदृष्टतमामवस्थां
कालार्पितं करजचिह्नमिव क्षपायाः ॥ ४५ ॥

नैशं तमिस्रमरुणेन विलुप्तसारं
निःशेषयन्नयमुदेति मयूखमाली ।
मत्सेवनेन पुरतो मुषितैकदेशं
विद्यावतां वृजिनराशिमिवान्तरात्मा ॥ ४६ ॥

उद्गच्छता पुरुषकेसरिणेव पूष्णा
काले तमो विदलितं करजैः प्रवालैः ।
गाढं हिरण्यकशिपोरिव गात्रमन्यत्
संध्याच्छलेन रुधिरं क्षरतीव सान्द्रम् ॥ ४७ ॥

प्राप्तोदयस्य तपनस्य तवेव धाम्ना
क्षिप्तो गुहान्तरनिरुद्ध इवान्धकारः ।
विश्वावलोकननिरोधवियातवृत्ते-
रत्याहितस्य परिपाकमिवैष भुङ्क्ते ॥ ४८ ॥

मग्ना चिरं महति संतमसाम्बुराशौ
दंष्ट्राभिरामरुचिना दिवसागमेन ।
उत्क्षिप्यते दनुजशोणितलोहितेन
प्रायो वराहवपुषा विभुनेव भूमिः ॥ ४९ ॥

निद्रामपास्य तमसा च दृशो निरोधं
प्रत्यङ्मुखं प्रथमतः प्रथयन् प्रकाशम् ।
निःश्रेयसप्रतिपदेन निजेन धाम्ना
विश्वं समाधिरिव दर्शयते विवस्वान् ॥ ५० ॥

आशापरीतमविवेकमिवान्धकारं
शङ्काशतास्पदमलक्षितसर्वतत्त्वम् ।
निर्धूय संप्रति निशामिव बाह्यविद्यां
तत्त्वावसाय इव भाति विभातकालः ॥ ५१ ॥

निर्विश्य चन्द्रसितपद्मरसं निशात्मा
लोलम्बजातिरभितो लुलितान्यपुष्पा ।
त्वद्वक्त्रचन्द्रनिरपायरसानिदानीं
पद्मानुपैति परितोषितराजहंसान् ॥ ५२ ॥

नात्यन्ततः कुमुदिनी प्रतिपन्ननिद्रा
नातीव बोधमुपयाति सरोजिनी च ।
एतेन नूनमनयोरविशेषदृश्या
नाथानुवृत्तिनियतेव भवत्यवस्था ॥ ५३ ॥

पर्यस्यता सुरभिपद्मपरागजालं
पक्षानिलेन परिभूननसंभवेन ।
संधुक्षयन्ति मकरध्वजहव्यवाहं
शान्तं पुनः पुनरमी सरसीषु हंसाः ॥ ५४ ॥

कालोत्थिताः स्थितिभृतो गुणयन्त्रितत्वाद्
दानोदकार्द्रकरपुष्करदर्शनीयाः ।

संभावयन्त्यभिमुखाः समयोपयातान्
भृङ्गान् वनीपकजनानिव वारणेन्द्राः ॥ ५५ ॥

गङ्गामुपेत्य मदकुञ्जरगण्डपालीं
मत्तान् समीक्ष्य मधुपान् परिघूर्णमानान् ।
शुद्धानि हन्त कुमुदानि तमस्यपेते
भूयस्तदन्वयभयादिव संकुचन्ति ॥ ५६ ॥

सत्त्वक्षमाधिकतया शयिताः पृथिव्यां
निद्रामयीं व्यपगमय्य निजामविद्याम् ।
निःसङ्गवृत्तिनियताः स्थिरसंयमार्हा
मुञ्चन्ति संप्रति मदं मुदिता गजेन्द्राः ॥ ५७ ॥

शैब्यादयस्तव हयाः समयप्रबुद्धा-
श्चत्वार एव निगमा इव मूर्तिमन्तः ।
आवर्तयन्त्यतनुहेषितवीचिभेदै-
र्वैरात्रिकं वटुभिरध्ययनं प्रवृत्तम् ॥ ५८ ॥

आयोधने विहरणे व्यवधानवन्तः
प्राज्यैः परिच्छदपरिष्करणोपचारैः ।
संयोजयन्ति रथयोगविदः शताङ्गं
तार्क्ष्यं द्वितीयमिव सारथयस्त्वदीयाः ॥ ५९ ॥

निद्राविशेषविगमेऽपि मदानुषङ्गा-
न्मन्दं दृशो मुकुलयन्ति मदावलेन्द्राः ।
एषामनूरुकिरणैररुणीकृतानां
सप्तस्रुतां भवति सांध्यपयोदलक्ष्मीः ॥ ६० ॥

आलक्ष्यदूरमवरोधगृहादमुष्मात्
स्वाभाविकं वदनमारुतसौरभं ते ।
अम्भोरुहाङ्कणमपत्रपयन् समीरो
मन्दं परिभ्रमति मन्दिरदीर्घिकासु ॥ ६१ ॥

आघूर्णितानि मृदुना पवनेन पद्मा-
न्यादेशयन्ति मदलेशमयीमवस्थाम् ।
निर्गच्छतां तव च वारवधूजनानां
निद्रावशेषकलुषाणि विलोचनानि ॥ ६२ ॥

रेणूत्कराः सरसिजोत्पलकैरवाणां
कुर्वन्त्यनूरुतिमिरेन्दुरुचिप्रकाशाः ।
प्रायः समुद्गतरुणीपरिकर्मभूतां
चर्चां नवीनघुसृणागरुचन्दनानाम् ॥ ६३ ॥

अध्यासितं कुमुदतल्पमपोह्य काले
पद्मोत्पलानि शनकैः श्रियमाव्रजन्तीम् ।
संजीवयन्त्यलघुचामरदर्शनीयैः
पक्षैः स्वयं परिजना इव राजहंसाः ॥ ६४ ॥

प्रत्यूषलक्षणरसायनसंप्रयोगात्
प्रालेयरश्मिमहसा जरसेव मुक्तः ।
पद्मोत्पलप्रभृतिभिः परिकर्मवत्यो
गृह्णन्ति यौवनदशां गृहदीर्घिकास्ते ॥ ६५ ॥

औद्यानिकीषु सुमनःस्वनवासपूर्वं
नूनं सरोरुहवनेषु च नूतनेषु ।

आदित्सते वदनमारुतसौरभं ते
शय्यानिकायमभितो विहरन् समीरः ॥ ६६ ॥

अर्घ्यस्य संप्रति सतामवगाढतीर्था
मन्ये प्रगृह्य नलिनी मकरन्दमर्घ्यम् ।
व्यक्तद्विरेफनिनदा विहिताभिमुख्या
पत्युस्त्विषां प्रणयतीव करप्रसारम् ॥ ६७ ॥

ज्योत्स्नासखीं कुमुदिनीं भ्रमरः प्रहृष्यन्
निर्विश्य नित्यपरिशुद्धरुचिं निशायाम् ।
रागादुपैति नलिनीं रजसाभिजुष्टां
किं नाम नाचरति मन्मथहस्तवर्ती ॥ ६८ ॥

संध्याच्छलेन पुरुषोत्तम सांप्रतं ते
सैवाधुना भृगुसुता तमसां निहन्त्री ।
भूयः समुत्थितवती धृतपुण्डरीका
भोगाय सागरगृहाद् भुवनैकयूनः ॥ ६९ ॥

चन्द्रातपत्रिदिवशैवलिनीप्रवाहे
मग्नोत्थितां कमलिनीमुपसेवमानाः ।
प्रत्यग्रभिन्नमुकुलप्रसृतैः परागै-
रुत्थापयन्त्यगरुधूपमिवोत्पलिन्यः ॥ ७० ॥

पौरंदरीं दिशमनूरुनिबद्धरागां
दृष्ट्वा तथा परिणमत्यपरा दिशापि ।
स्त्रीणां गतानुगतिकप्रतिमत्तिभाजां
ख्यातं ततो भवति कामितकामिनीत्वम् ॥ ७१ ॥

निद्रायते कुमुदिनी चिरसंप्रबुद्धा
सुप्ता प्रबोधमुपयाति सरोजिनी च ।
यामेषु वृत्तिमनयोरधिगम्य नूनं
शिष्यायितं त्वदवरोधनितम्बिनीभिः ॥ ७२ ॥

मित्रस्य लुप्ततमसोऽप्यतिरागभाजः
संप्रेक्षणं मम न युक्तमितीव मत्वा ।
मीलत्यसौ कुमुदिनी सह तारकाभिः
प्राप्तं व्रतं तदिह राजपरिग्रहाणाम् ॥ ७३ ॥

आमोदयोगमवशात् सहसाश्रयन्ते
पत्युस्त्विषां तव च पादनिषेवणेन ।
क्षिप्तास्त्वया हृदि गृहीतशुचः क्षितीन्द्राः
स्वान्तर्निविष्टमधुपाश्च सरोजकोशाः ॥ ७४ ॥

आविःस्मितैरमरसिन्धुतरङ्गकल्पै-
राकेकरप्रियतमाजनदृष्टिभोग्यैः ।
त्वत्सौखशायनिकसूरिगणेन सार्धं
निर्वेशयोगमुपयाम निरीक्षणैस्ते ॥ ७५ ॥

अधिगतनिलयानामौपवाह्यद्विपानां
मदपयसि वितन्वन् मज्जनोन्मज्जनानि ।
प्रवहति पवमानः स्पन्दयन् मन्दमन्दं
परिणमदरुणिम्नः पङ्कजारण्यकोशान् ॥ ७६ ॥

उपवनमधुपानामुन्मदैः स्वैरगीतै-
स्तनुमरुदुपादिष्टैश्चारुलास्यैर्लतानाम्

दरविलुषितदानैर्दन्तिनां कर्णतालैः
समयसमुचितं ते भाति संगीतकृत्यम् ॥ ७७ ॥

हरति रतिविहारैरर्धविस्रंसितानां
युवजनहृदयानि श्रान्तपञ्चायुधानि ।
उपहितगुणमारादुत्थिताभिर्वधूभिः
कुटिलनियमिताग्रं गुम्फनं चूलिकानाम् ॥ ७८ ॥

क्षितिरियमवधूतध्वान्तनीलोत्तरीया
विकसितमुखपद्मा व्यक्तसंध्याङ्गरागा ।
अभिमतकरदानान्निर्व्यपेक्षा त्वदन्यै-
रनुभवितुमिव त्वां दर्शयन्त्यात्मरूपम् ॥ ७९ ॥

मधुन इव दयायाः सामरस्यं दधानैः
कमलवनमनन्यां कान्तिमध्यापयद्भिः ।
फणिपतिरमणीयं देवपर्यङ्कमुज्झन्
परिणमय शुभं नः पावनैरक्षिपातैः ॥ ८० ॥

दिनमुख इति नाम श्रावितः सूतपुत्रै-
रभजत जितनिद्रो जागरं यादवेन्द्रः ।
सरिदुपगमकाले साधुसंरक्षणार्थी
मुनिभिरिव स एव स्तूयमानो मुकुन्दः ॥ ८१ ॥

धनमिव निगमानां धर्ममुत्तम्भयिष्यन्
त्रिजगदनुविधेयं कर्म निष्पाद्य सांध्यम् ।
सितगुणपरिधानैः सेवितो मन्त्रिमुख्यै-
रलमकुरुत नाथो हैममास्थानपीठम् ॥ ८२ ॥

इति श्रीयदुनाथसुप्रभातं समाप्तम्

## ७०. रघुवीरसुप्रभातम्[1]

कृष्णकविविरचितम्

परिणतिपरिशंसी मन्दमन्दं निशाया
मृदुमधुरनिनादो जृम्भतेऽयं मृदङ्गात् ।
करतलपरिमृष्टाद् बन्दिनामागतानां
रघुकुलजलधीन्दो नाथ ते सुप्रभातम् ॥ १ ॥

मुहुरविकलगीतैर्मोहयन्निन्द्रियौघं
श्रुतिपुटविवराभ्यां मन्दमन्तः प्रविश्य ।
अयमपहरति द्राङ्मानसं वेणुनादो
रघुकुलजलधीन्दो नाथ ते सुप्रभातम् ॥ २ ॥

उदयति निशि यस्मिन् सद्गणो धिक्कृतोऽभूत्
स तु पतनमुपैष्यत्युन्नतिं धिग् धिगिन्दोः ।
प्रभवति हि विभूत्यै सद्गणस्योन्नतिस्ते
रघुकुलजलधीन्दो नाथ ते सुप्रभातम् ॥ ३ ॥

अयमुदयति गूढः किंचिदुच्चैः सरिद्भिः
श्रयति सपदि भास्वानंशुजालैः परीतः ।
हरिहरिदसिताक्ष्याः कङ्कताभां कराब्जे
रघुकुलजलधीन्द्रो नाथ ते सुप्रभातम् ॥ ४ ॥

दशशतकरजालं द्राक् प्रसार्यांशुमालि-
न्यमरदिगसिताक्ष्याश्लेषणायोन्मुखेऽस्मिन् ।

[1] Edited from a recent transcript, No. TR 315 (D. C. No. 1830).

कलमिह रचयन्ते गीतमेता विहङ्गयो
रघुकुलजलधीन्दो नाथ ते सुप्रभातम् ॥ ५ ॥

विकचजलजगन्धानाहरन् मन्दवात-
श्चिरमयमवगाह्य स्रोतसि ह्रादिनीनाम् ।
शमयति तव देव्याः स्वेदबिन्दून् मुखाब्जे
रघुकुलजलधीन्दो नाथ ते सुप्रभातम् ॥ ६ ॥

जनकनृपतिकन्या पूर्वमेव प्रबुद्धा
कथमपि विरचय्याश्लेषभेदं तवैषा ।
रचयति ननु दूरे क्लेशमावीजनात् ते
रघुकुलजलधीन्दो नाथ ते सुप्रभातम् ॥ ७ ॥

तव चरणसरोजद्वन्द्वसंवाहनेन
ह्ययमपि गमयित्वा शर्वरीं निर्निमेषम् ।
अरुणनयनकोणः प्राञ्जलिर्वायुसूनू
रघुकुलजलधीन्दो नाथ ते सुप्रभातम् ॥ ८ ॥

कमपि कुलिशपाणेरायुधेनाप्यभेद्यं
रचयसि यदि सेतुं देव संसारसिन्धोः ।
तरति सुखमिदानीं सर्व एवात्र लोके
रघुकुलजलधीन्दो नाथ ते सुप्रभातम् ॥ ९ ॥

इति श्रीरघुवीरसुप्रभातं समाप्तम्

# ७१. रामचारित्रमञ्जरी[1]

राघवेन्द्रतीर्थयतिकृता

श्रीमान् विष्णुः प्रजातो दशरथनृपते रामनामाथ नीतो
विश्वामित्रेण मन्त्राद्दनुजसहितस्ताटकाघातकोऽस्त्रम् ।
ब्रह्माख्यं प्राप्य हत्वा निशिचरनिकरं यज्ञपालो विमुच्या-
हल्याशापं च भङ्क्त्वा शिवधनुरुपयन् जानकीं नः प्रसीदेत् ॥ १ ॥

आयन् रामः सभार्योऽध्वनि निजसहजैर्भार्गवे जातरोषा-
द्धत्वा तद्गं सुरारिं पुरग उत नुतस्तापसैर्भूपपृष्टैः ।
कल्याणानन्तधर्मोऽगुणलवरहितः प्राणिनामन्तरात्मे-
त्याद्युक्तश्चाभिषेके पुरजनमहितो मह्यतां मे वचोभिः ॥ २ ॥

कैकेयीप्रीतिहेतोः ससहजनृपजो वल्कली यानरण्यं
गङ्गातारी गुहार्च्यः कृतरुचिरजटो गीष्पतेः पुत्रमान्यः ।
तीर्त्वा कृष्णां प्रयातोऽवतु निजममलं चित्रकूटं प्रपन्नं
स्वाम्बाभिर्भ्रातरं तं श्रुतजनकगतिः सान्त्वयन्नुक्ततीर्थः ॥ ३ ॥

दत्त्वास्मै पादुके स्वे क्षितिभरणकृते प्रेष्य तं काकनेत्रं
व्यस्याराध्योऽत्रिनाम्ना वनमथ समितो दण्डकं तापसेष्टम् ।
कुर्वन् हत्वा विराधं खलकुलदमनं, याचितस्तापसाग्र्यै-
स्तेषां दत्त्वाभयं स्वानसिधनुरिषुधीन् यानगस्त्यात् स पातु ॥ ४

[1] Based on the MS. No. PM 2780 (D. C. No. 1860) and is collated with the text printed in Kannada character in the *Stotramañjarī* (Udipi, 1966, pp. 195-7).

आसीनः पञ्चवट्यामकुरुत विकृतां राक्षसीं यो द्विसप्त
क्रव्यादानां सहस्राण्यथ खरमवधीद् दूषणं च त्रिशीर्षम् ।
मारीचं मार्गरूपं दशवदनहृतामाकृतिं भूमिजाया
अन्विष्यन्नार्तगृध्रं स्वगतिमथ नयन् मामवेद् घ्नन् कबन्धम् ॥ ५ ॥

पम्पातीरं स गच्छन्निह कृतवसतिर्भक्तितुष्टः शबर्यै
दत्त्वा मुक्तिं प्रकुर्वन् हनुमत उदितं प्राप्तसुग्रीवसख्यः ।
सप्त च्छित्वाथ सालान् विधिवरबलिनो वालिभित् सूर्यसूनुं
कुर्वाणो राज्यपालं समवतु निवसन् माल्यवत्कन्दरेऽसौ ॥ ६ ॥

नीत्वा मासान् कपीशानिह दश हरितः प्रेष्य सीतां विचित्या-
यातश्रीमद्धनूमद्गिरमथ समनुस्मृत्य गच्छन् कपीन्द्रैः ।
सुग्रीवाद्यैरसंख्यैर्दशमुखसहजं मानयन्नब्धिवाचा
दैत्यघ्नः सेतुकारी रिपुपुररुडवेद् वानरैर्वैरिघाती ॥ ७ ॥

भग्नं कृत्वा दशास्यं गुरुतरवपुषं कुम्भकर्णं निहत्य
प्रध्वस्ताशेषनागं पदकमलनतं तार्क्ष्यमानन्द्य रामः ।
सर्वानुज्जीवयन्तं गिरिधरमनघश्चाञ्जनेयं कपीन् स्वान्
विज्ञानास्त्रेण रक्षन् समवतु दमयँल्लक्ष्मणाच्छक्रशत्रुम् ॥ ८ ॥

क्रव्यादान् घ्नन्नसंख्यानपि दशवदनं ब्रह्मपूर्वैः सुरेशैः
पुष्पैराकीर्यमाणो हुतवहविमलामाप्य सीतां विधाय ।
रक्षोनाथं स्वभक्तं स्वपुरमथ गतः पुष्पकस्थः समस्तैः
साम्राज्ये चाभिषिक्तो निजजनमखिलं मानयन् मे गतिः स्यात् ॥ ९ ॥

रक्षन् क्षोणीं समृद्धां नुत उत मुनिभिर्मानयन् वायुसूनुं
प्रेष्यादित्यात्मजादीन् व्यतनुत भरतं यौवराज्येऽनुमान्य ।

कार्ये सौमित्रिमार्तश्वगदितकृदरिघ्नोऽथ शत्रुघ्नतो यो
हत्वा तं दुष्टशूद्रं द्विजसुतसुखदो कुम्भजान्मालधारी ॥ १० ॥

यज्ञांस्तन्वंस्त्रिकोटीन् व्यतनुत भरताद् यः सुरानीकवाक्याद्
यास्यन् धामात्रिपुत्रं भुजिसमयमयन्नात्मसूनुं स्वराज्ये ।
कृत्वा श्रीमद्धनूमद्धृतविमलचलच्चामरच्छत्रशोभी
ब्रह्माद्यैः स्तूयमानोऽनिलजकरलसत्पादपद्मोऽवतान्नः ॥ ११ ॥

इति **श्रीरामचारित्रमञ्जरी** लेशतः कृता ।
**राघवेन्द्रेण** यतिना भूयाद् रामप्रसाददा ॥ १२ ॥

इति श्रीराघवेन्द्रतीर्थयतिकृता राम[चारित्र]मञ्जरी समाप्ता

## ७२. राममत्तेभस्तोत्रम्[1]

महादेवविरचितम्

श्रीकामुको निखिलनाकालयैर्विपुलशोकाकुलैरभिनतो
रेखारथाङ्गवरशङ्खाञ्चितः कपटशाखामृगैः सह सुरैः ।
यो गामुपेत्य बहुवेगान्वितः कलितयागात् स्वयं दशरथात्
श्लाघाशतैर्दिविषदोघार्पितैः सजलमेघाकृतिः समजनि ॥ १ ॥

वाचा मुनेस्तदनु वाचालितज्यधनुराचाम्यजीवनमिषून्
तुच्छात्मनां स्वतनुदुच्छायसंतमससंछादितान्तरनिशाम् ।

[1] Based on the MS. No. 73243 (D. C. 1889).

आजानपावनसरोजायमानपद्भाजा कणेन रजसः
कष्टं स्त्रिया झटिति निष्टङ्कितं विदधदिष्टं च योऽदित मुनेः ॥ २ ॥

कुण्ठान्यशक्तिशितिकण्ठाशुगासनमरं ठात्कृतं भञ्जयन्
व्रीडास्मरस्फुरणनीडायितां च जनकेडापतेरात्मजाम् ।
रूढानुरागकमुदूढामुपेत्य पथि मूढाशयं प्रतिघया
शोणाक्षमप्यथ भृगूणामधीशमपरीणावलेपमतनोत् ॥ ३ ॥

ताताज्ञया तदनु सीतान्वितो भुवनपाता समेत्य विपिनं
याथार्थ्यवेदिमुनिनाथार्थितो विमतमाधाय पञ्चवटिकाम् ।
गोदावरीविहगनादानुबन्धबहुमोदावहामधिवसन्
क्रोधादरं विपुलयोधाधरं विषममेधाधरं खरमहन् ॥ ४ ॥

नानामुखोक्तिबहुमानागतं झटिति लीनायुषं च हरिणं
आपाद्य यातुहृतभूपात्मजाविरहतापातुरो वनभुवि ।
शेफालिकामिलितरेफाधिकास्यरवरेफायिताधिकधृतिः
क्षीबाशयं तदनु चाबाधितोष्णकरशाबार्थमिन्द्रतनयम् ॥ ५ ॥

. . . . . . . . . .

[1]प्राभातिकार्कफललोभाभियुक्तकपिनाभातदारकुशलः ॥
भीमाशुगैस्त्रसति सामावलम्बिनि विनामाश्रये जलनिधौ ।
आयासलेशमपहायालिकृज्झटिति जायामुषः पुरमगात् ॥ ६ ॥

धीराशयः सकलवीराग्रणीरहितमाराय सैनिकयुतः
कालात्मकः स्वभुजलीलावमुक्तशरजालाहताशरगणः ।

[1] One line is missing in the MS.

दावानलः खलु यथा वा तृणं युधि तथैवातृणोद् दशमुखम्
नैशाचरीं तदनुजे शास्त्रतो विलसदाशावतीं श्रियमधात् ॥ ७ ॥

योषामुपेत्य गतदोषां ततोऽभजत तोषान्वितो निजपुरे
नीहारशीतलविदेहात्मजाङ्गमिलदीहानुरूपविहृति ।
डोलाविहारमथ तालान्विताभिनयमेलाधिको ह्यनुभवन्
साक्षात् पुरोऽस्तु धनुदीक्षागुरुर्मम स रक्षामणिस्त्रिजगताम् ॥ ८ ॥

मत्तेभयूथमिदमुत्तेजिताशुगनिकृत्तेन्द्रवैरिशिरसे
त्रस्तापतज्जनसमस्तावनप्रणयविस्तारितात्मयशसे ।
श्रीजानकीसहितराजाधिराजतनवे जायतां सदुपदा
पादेऽर्पितं ननु **महादेव**नामकविना देवतार्चितपदे ॥ ९ ॥

इति श्रीराममत्तेभं संपूर्णम्

## ७३. लक्ष्मीनृसिंहसुप्रभातविंशतिः[1]

पराङ्कुशमुनिविरचिता

अम्ब प्रसन्नशरदिन्दुमुखि प्रपन्न-
पङ्कच्छटादलनपादसरोजयुग्मे ।
लक्ष्मीनृसिंहपरिरम्भणरम्यगात्रे
लक्ष्मीनृसिंहदयिते तव सुप्रभातम् ॥ १ ॥

[1] Based on a recent transcript, No. TR 808 (D. C. No. 1935).

भानुः स्वभानुपरिरम्भणजृम्भदब्ज-
पालिर्वलारिहरिदङ्गणमेति दीव्यन् ।
शश्वद् विनश्यति च नैशमिदं तमिस्रं
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ २ ॥

यः पद्मिनीं स्वविरहेण कलङ्किसङ्ग-
भीत्येव संकुचितनालकराब्जवक्त्राम् ।
आश्वासयन्नुदयमेति मुहुः कराग्रै-
र्लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ ३ ॥

दोषाकरो निशि पयोजसुहृद्वियोग-
दूरां स्पृशन् निजकरैर्नलिनीं विभाते ।
मित्रेण दृष्ट उपधाव्य निलीयतेऽब्धौ
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ ४ ॥

भावत्कपादनखचन्द्ररुचिद्रवत्स्व-
भावोच्चलन्नयननिःसृतबाष्पपूराः ।
विप्रा हरिर्हरिरिति स्फुटमीरयन्ति
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ ५ ॥

गम्भीरवारिभवपङ्कजपत्रनेत्रं
ध्यात्वा द्विजास्तरणिमण्डलमण्डनं त्वाम् ।
अर्घ्यं भवत्पदसरोजयुगे क्षिपन्ति
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ ६ ॥

आसन्नतिग्मकरगर्भतयेव शक्र-
काष्ठामुखं विलुलितोडुगणाग्र्यजालम् ।

दूरीकृतेन्दुतिलकं प्रविभाति पाण्डु
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ ७ ॥

विप्रास्त्रभिन्नकरकंधरसंधिबन्ध-
मन्देहदेहनिवहैरिव मेघखण्डैः ।
मुक्तः पुरा स्वयमुदेति वियद् दिनेशो
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ ८ ॥

पद्मालयेषु गृहिणो नियताः प्रभाभिः
किञ्जल्ककर्मठगणा मकरन्दभिक्षाम् ।
विश्राणयन्त्यलिवटुभ्य उपागतेभ्यो
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ ९ ॥

दूरं गते कुमुदिनी रमणेऽतिमत्त-
गायन्मधुव्रतहठात्करणातिभीता ।
द्वारं गृहस्य पिदधाति दलाररेण
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ १० ॥

श्रीरङ्गनाथशठजिद्गुरुसार्वभौमाः
कृत्वाह्निकं भुवनमङ्गलमादरात् त्वाम् ।
उद्बोधयन्ति विजयी भव माधवेति
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ ११ ॥

अम्भोजिनी निजकरैः कमने सुदूरा-
दागत्य ताडयति पत्रकवाटमाशु ।
उद्धाट्य पृच्छति सुखागमनं मिलिन्दै-
र्लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ १२ ॥

सन्तस्त्वदीयपदपङ्कजवन्दनाभि-
ध्यानार्चनस्तुतिनमस्कृतिबद्धभावाः ।
त्वां सर्वलोकशरणं प्रणमन्ति भूयो
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ १३ ॥

ध्यायन्ति भान्ति परियन्ति वदन्ति सन्ति
तिष्ठन्ति यान्त्यभिनमन्ति समाह्वयन्ति ।
आकर्णयन्त्यनुवदन्ति नुवन्ति सन्तो
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ १४ ॥

गायन्ति भृङ्गनिवहाः सरसीरुहेषु
भ्राम्यन्ति पान्थनिचयास्तरुणीजनेषु ।
आयान्ति मन्दमरुतस्तटिनीतटेषु
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ १५ ॥

मत्ता गजेन्द्रविसरास्तुरगैर्नदन्त्यु-
न्नृत्तास्तुरङ्गततयः प्रचरन्ति सोक्षाः ।
दृप्ता महोक्षनिकराः प्रभजन्ति धेनू-
र्लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ १६ ॥

काकाः प्रयान्ति कुहराणि पुरीगृहाणां
घूकाः प्रयान्ति कुहराणि महीरुहाणाम् ।
कोकाः प्रयान्ति कुहराणि सरोरुहाणां
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ १७ ॥

डोलोत्सवे सुरगणैरशितेषु तारा-
दुग्धान्नखण्डनिवहेष्वजमुख्यदेयाः ।

भागा इवेन्दुधिषणोशनसः प्रयान्ति
लक्ष्मीनृसिंह भगवन् तव सुप्रभातम् ॥ १८ ॥

विधिशंकरशक्रविभावित भो
विजितामरवैरिकदम्ब विभो ।
विविधागमसारविहार हरे
विजयी भव देव रमानृहरे ॥ १९ ॥

झष कूर्म वराह वटोऽरिपटो
भृगुनन्दन राघव धेनुकहन् ।
वसुदेवसुतानघ कल्कितनो
विजयी भव देव रमानृहरे ॥ २० ॥

रङ्गाधिराजशठजिद्गुरुपादपद्म-
भृङ्गः पराङ्कुशयतीन्द्रतपोधनेशः ।
हृद्यं ततान नतमङ्गलदायि पद्मा-
सद्मायिताङ्कनरकेसरिसुप्रभातम् ॥ २१ ॥

इति श्रीलक्ष्मीनृसिंहसुप्रभातविंशतिः समाप्ता

## ७४. विरक्तिमुक्तावलिः[1]

गोविन्दाचार्यकृता

[यस्येच्छासमकाल एव जगतः सृष्टिस्थितिश्चाप्ययो
यः सच्चित्सुखदेहवांश्च रमते लक्ष्म्या स्वयं लीलया ।

[1] Edited from the MS. No. PM 2835 (D. C. No. 3122).

यश्चान्ते स्मृतमात्र एव हि भवागाधाम्बुधेरुद्धर-
स्त्युद्गीतो निगमागमैरवतु मां श्रीमान् स नारायणः ॥ १ ॥

यस्यापाङ्गनिरीक्षणामृतधुनीपूरेण संवर्धिता
मच्चित्ते कवितालता नवरसाधारैः फलैः शोभते ।
रङ्गाचार्यमहं गुरुं स्वपितरं नत्वा तमम्बां सती-
मार्यां तां च सरस्वतीं भवपरिक्लेशान् निजान् वर्णये ॥ २ ॥

देवं गुरुं च युगपन्नत्वा श्रीवासुदेवपदवाच्यम् ।
ग्रथये **विरक्तिमुक्तावलिं** मुदे सास्तु सुमनसां रुचिरा ॥ ३ ॥

नत्वा शिरसा कौलगिरघुनाथाचार्यदेशिकपदाब्जम् ।
स्वकृतं हि निवेदयतः प्रायश्चित्तं ममास्तु हरिपदयोः ॥ ४ ॥][1]

अज्ञानोग्रनिदाघतप्तहृदयः पातुं सुविद्यापय-
स्तृष्णालोलमना भ्रमन् दिशि दिशि श्रान्तो भृशं संश्रितः ।
गेहारण्यमथ स्ववृक्षगहनं तत्रापि चिन्तादवा-
क्रान्तोऽहं चकितो मृगो घनमिव ध्यायामि कृष्णं हृदि ॥ १ ॥

क्षुत्तृड्जम्बुकमूषकावृततलो मध्ये च कामादिभि-
र्व्याप्तो बभ्रुबिडालकोरगमुखैर्वातादिरोगात्मकैः ।
श्येनोलूकमुखैः श्रितोच्चविटपस्तत्कोटराधिष्ठितः
क्लिश्यत्स्रस्तगरुत्कपोतवदहं खिद्ये हरे पाहि माम् ॥ २ ॥

नानावर्णगरुन्मनोहरतनुः संवर्धितः पञ्जरे
संजल्पन् कलमुद्भ्रमन् सुमधुरं खादन् पिबन् स्वं वयः ।

[1] These four verses are separately numbered in the MS.

नीत्वा विस्मृतसद्द्विजाश्रितगतिः स्वार्थैकलुब्धैर्जनै-
स्त्यक्तो निर्दयमन्धवृद्धशुकवत् खिद्ये हरे पाहि माम् ॥ ३ ॥

मोहादण्डमयान् स्वनीडपतितान् संवर्ध्य कृच्छ्रार्जितै-
र्नानाखाद्यचयैश्चिरोद्गतगरुत्स्वङ्गैर्मनोहारिभिः ।
कूजद्भिः कलपञ्चमस्वरमथोड्डीय प्रयातैः पिकै-
र्नीडे वञ्चितजीर्णकाकवदहं खिद्ये हरे पाहि माम् ॥ ४ ॥

आनीयोषसि नित्यशः सुकलमं दत्त्वा मुखे पोषिता
या प्रेयस्यथ ये च पक्षपुटके संवर्धिताः शावकाः ।
यत्प्रीतिर्मनसो मुदे ह्यजनि तद्बालाबलावञ्चितो
नीडे संभ्रमदन्धवृद्धशुकवत् खिद्ये हरे पाहि माम् ॥ ५ ॥

धृत्वाण्डं स्वमुखेऽक्षतं तत इतो नीत्वा मनोज्ञस्थले
न्यस्यानीय च दूरतः सुमधुरं संवर्ध्य दत्त्वा ततः ।
उन्नम्य स्वशिरो निपात्य च मुहुर्भ्राम्यन् वियुक्तश्च तैः
संचाराक्षमपीनजृम्भवदहं खिद्ये हरे पाहि माम् ॥ ६ ॥

संगृह्याम्बु हि बिन्दुशो विरुवतः संवर्ध्य भेकान् बका-
नन्येषां कलमान् जडाशयतया संतर्प्य वैदेशिकान् ।
ग्रीष्मे क्षीणजलश्च तैर्विरहितो हा गाधकासारवत्
शोच्यां दीनदशां गतोऽस्म्यव कृपासारेण कृष्णाम्बुद ॥ ७ ॥

त्वां विस्मृत्य मदान्धधीर्ममतयैवावर्धयं यान् गता-
स्त्यक्त्वा ते कलभा इवाशु सवशा वात्सल्यनक्रार्दितम् ।
अन्ते कोऽपि न कस्यचित् सुहृदिति ज्ञातं भवन्तं विना
याचे नाथ गजेन्द्रमोचन हरे श्रीकृष्ण मामुद्धर ॥ ८ ॥

आच्छिद्यान्यकरस्थमन्नमुदरे धृत्वा शिशुं तन्मुखे
दत्त्वा संपरिवर्ध्य सन्मुखगतान् वित्रास्य विद्राव्य च ।
उत्प्लुत्याथ गतेऽर्भके ममतया कूजन् क्षुधापीडितो
वाताकूणितजीर्णकीशवदहं खिद्ये हरे पाहि माम् ॥ ९ ॥

धैर्यादेकचरोऽखिलान् वनचरान् वित्रासयन् गर्जितै-
र्दैवाद् विश्लथसक्थिजानुरपरिस्पन्दः शयानः क्षितौ ।
सप्राणोऽतिनिकृष्टजम्बुकवृकाद्याघ्रातमूर्धोदर-
स्ताम्यन् व्याघ्र इवाधितप्तहृदयः खिद्ये हरे पाहि माम् ॥ १० ॥

त्वद्भक्तिं प्रविमुच्य मुक्तिरमणीप्राप्त्यग्र्यदूतीं हरे
मोहात् संसृतितज्जकाममुखदुष्पुत्रानुरक्तश्चिरात् ।
संप्राप्तां कफवातपित्तजननीमाश्लिष्य साध्वीं जरां
सुप्तः श्रान्ततयोत्स्वपाम्यव हरे मामित्यलं तन्न किम् ॥ ११ ॥

पुंनाम्नो नरकात् परत्र भयदात् त्रातेति पुत्राभिधा
ये हिंसन्ति सदेह ते स्युरपि तच्छब्दाभिधेयाः कथम् ।
इत्येतन्न विचार्य दुष्कृतशतं कृत्वापि ते वर्धिताः
प्लुष्टं तद्वृजिनाग्निनाव करुणापीयूषलेपैर्हरे ॥ १२ ॥

भ्रान्त्वा योनिशतं भवत्पदकथालेशावशाकर्णना-
ल्लब्ध्वेमं मनुजोद्भवं च विभवं याचे हरे नाभवम् ।
तत् पृच्छामि भवन्तमेव हि भवं श्रान्तस्तरेयं कथं
त्वत्कारुण्यलवं विना गजपरित्राणापदानाव माम् ॥ १३ ॥

विस्रम्भात् तमजामिलं गजपतिं वेश्यां च तां पिङ्गलां
श्रुत्वा त्रीन् भवतोद्धृतान् समभवं स्वच्छन्दचारी सदा ।

त्यक्तोऽहं तनयैर्गजैरिव भवन्नाम्नाह्वयाम्यन्वहं
निर्विण्णोऽस्म्यधनागमात् तदव मां निर्दोष नारायण ॥ १४ ॥

किं वक्ष्ये तनयाः सदोज्झितनयाः कान्ता कृतान्ताश्रया
चित्तं वित्तरतं मतिस्त्वघवती श्वासाश्च कासावृताः ।
कायश्चामयवान् स्वधर्मचरणे दक्षो न चाक्षैः परं
भीतोऽहं भवतो भवन्तमभयं याचे हरे पाहि माम् ॥ १५ ॥

लब्धैर्हि त्वदनुग्रहेण वसनालंकारवित्तादिभि-
र्भार्यापुत्रसुतास्नुषातदनुगान् संतर्पयित्वा ततः ।
हा त्वद्विस्मृतिदोषतश्च सकलैस्तैरुज्झितो धिक्कृतः
खिद्ये संयमिनीगताधिवदहं श्रीकृष्ण मां पालय ॥ १६ ॥

षष्ठाष्टव्ययदुःस्थितेषु खचरेष्वेको गुरुः कर्कटे-
ऽप्युच्चो रक्षति मेषजं खलु तथा पुत्रेषु मां माधवः ।
अन्यो दुर्ग्रहमन्दवन्ननु मिलन्नेनं यथा दूषयेत्
संरक्ष्याथ तथा मदिष्टद हरे तं श्रेयसा योजय ॥ १७ ॥

भूत्वा ब्रह्मविदात्मजो वृजिनधीर्वृत्तिं च वैश्यां श्रित-
स्तद्वारार्जितवित्तमाश्वपहृतं पुत्राभिधैस्तस्करैः ।
तेनैवागतिकोऽस्मि केवलमिहामुत्रापि दौर्भाग्यवान्
नाथ त्वां शरणं व्रजामि कृपया श्रीकृष्ण मामुद्धर ॥ १८ ॥

त्यक्त्वा त्वद्भजनं द्विजोत्तमसुतो भूत्वापि राजाश्रयं
कृत्वा यद्धनमार्जितं तदखिलं भक्ताभिमानाद्धरे ।
मन्ये तद्वृजिनं धनाश्रयमतः पुत्रैस्त्वया हारितं
त्वं वित्तापगमे प्रसीदसि किल श्रीकृष्ण पाह्याशु माम् ॥ १९ ॥

सत्यं दारसुतादयो मम कथं वा स्युर्यदादौ भव-
द्दासोऽहं न ममास्म्यथोज्झितभवद्दास्येन (ये) रक्षिताः ।
तेऽभिज्ञा हि न नोऽयमित्यथ गता भ्रष्टस्ततोऽतोऽप्यहं
स्वामिन् दासजनार्तिनाशन हरे श्रीकृष्ण मां पालय ॥ २०

भार्या प्राग् विलयं गताथ तनयैर्यत् प्राप्तभार्याधनै-
स्त्यक्तोऽहं धनलोभतस्तदभवं पुत्रैषणावर्जितः ।
निःस्वत्वान्न च बान्धवा न सुहृदो नान्यच्च सांसारिकं
निर्यत्नेन मुमुक्षुधर्मसहितं द्राक् कृष्ण मामुद्धर ॥ २१ ॥

भार्या सा तु मृता प्रयातु सुगतिं पुत्राश्च ये निर्गताः
स्वच्छन्देन कलत्रवित्तसहिता नन्दन्तु दीर्घायुषः ।
किं मे बन्धुजनैः सुहृद्भिरथवा कालानुगैस्तैर्हरे
त्वद्भक्तिः श्रितभुक्तिमुक्तिसुखदा सैकास्तु मे शाश्वती ॥ २२

यद्देहे कलितादरौ हि पितरौ पुत्रास्तु वित्तादरा
भार्या च द्वितयादरा न तदहं तेषां न चैते मम ।
दासोऽहं भवतो भवानथ मम स्वामीति लब्धा स्मृति-
स्तेभ्यो दैववशाद् वियुक्तमधुना श्रीकृष्ण मामुद्धर ॥ २३ ॥

उक्षेवाग्नि हि कुक्षिपोषणपरो विक्षोभ्य विक्षोभ्य स-
द्भक्ष्यान् माक्षिकशर्कराघृतयुतान् क्षीराप्लुतान् मङ्क्ष्वहम् ।
नाद्राक्षं ह्यधिमोक्षदं तव पदं साक्षी भवानक्षयो
भिक्षे क्षीणवयास्तथाक्षिविकलो मां रक्ष पक्षीशग ॥ २४ ॥

बाल्यं क्रीडनकौतुकेन विषयव्यासङ्गतो यौवनं
यातं वार्धकमप्यनेकविधया दुश्चिन्तया नीयते ।

कार्यं त्वद्भजनं कदेति समुपक्रान्ते विचारेऽन्तरा
रोगा व्याकुलयन्ति हन्त भवरुग्वैद्याव नारायण ॥ २५ ॥

ह्यो यातं ह्यथ यातु चाद्य किमतो यच्छ्वः प्रभृत्यन्वहं
कार्यो धर्म इति ब्रुवन् ननु जराजीर्णोऽवशोऽन्धोऽभवम् ।
साधिः साधितवान् न धर्ममथ सत्कर्मापि शर्मास्पदं
जीर्णानाथपिशाचवन्नरहरे क्रोशामि मामुद्धर ॥ २६ ॥

जातोऽस्म्यस्फुटवाक् स्खलद्गतिरतिक्षुत्तृट्परीतोऽवशः
पाल्योऽन्यैरथ शीघ्रमोदशुगहं भीतोऽभितो बालवत् ।
वृद्धत्वं हि नृणामदेहविगमं प्रायेण जन्मान्तरं
भक्तं पापिनमुद्धरस्यथ परे जन्मन्यव श्रीश माम् ॥ २७ ॥

देहो जीर्णगृहोपमो न वशगं चित्तं कपत्यप्रभं
सामर्षा कुटिला स्नुषेव च मतिः कुस्त्रीव दुष्टा च वाक् ।
दुःसाधानि तथेन्द्रियाणि शठदुर्मित्रोपमानान्यतः
पाल्यः कृच्छ्रगतो रमेश भवता दास्यानुबन्धेन हि ॥ २८ ॥

तैः सम्यक्कृतमित्यवैमि तनयैर्यैरस्म्यहं प्रोज्झित-
श्चास्माभिर्गलितैषणैर्हि यदनुष्ठेयं पुरानुष्ठितम् ।
स्वश्रेयः प्रविहाय सत्पुरुषताशास्रोपकर्तृत्वतः
सिद्धं नः सुसमीहितं हि कृपया मामुद्धर श्रीहरे ॥ २९ ॥

वृद्धोऽन्धः सरुगज्वरः परवशः क्षुत्तृट्परीतोऽबलः
शोच्योऽहं न च शोचितास्ति हि मृतिः क्लृप्ता कदा वैतु सा ।
स्त्रीपुत्रैः स्ववशीकृतेन न मया स्वाराधितस्त्वं हरे
त्यक्तस्तैरधुना त्वदेकशरणं मां पाहि नारायण ॥ ३० ॥

दत्तो यो भवता रमेश कृपया कैवल्यसंसाधने
काय: कल्पतमस्त्वनेन रमणीपुत्रादयश्चार्जिताः ।
यातास्तेऽप्यनयार्जिता यदुभयभ्रष्टोऽस्मि तन्निष्कृतिं
देहान्तामिह कारयाशु कृपया कालात्मक श्रीहरे ॥ ३१ ॥

देशा वङ्गकलिङ्गकेरलमहाराष्ट्राङ्गचोलादयो
भ्रान्ताः पुत्रकलत्ररक्षणकृते कार्यार्थमेवात्मनः ।
गन्तुः संयमिनीं न धर्ममयसत्पाथेयमल्पं च मे
याचे नागतपूर्व इत्यव कृपालेशेन लक्ष्मीपते ॥ ३२ ॥

दृष्टाश्च प्रभवः स्तुताश्च वसु चोपात्तं समाराधिताः
स्त्रीपुत्रानुचरास्तदा न च भवान् संतर्पितो हृद्गतः ।
तस्मात् संयमिनीपतिः प्रकुपितो दूतैः स मां क्लेशयेत्
तेभ्यो मोचय साहचर्यजनितप्रेम्णा जगन्नायक ॥ ३३ ॥

यत्प्रातः क्षुधयाथ भोजनपरिश्रान्त्या ततः स्त्रीसुता-
द्यालापेन च निद्रयाथ निशि चाक्रान्तं मदीयं मनः ।
न त्वां स्मर्तुमपीहतेऽहमधुना जीर्णो मुमूर्षुः स्थिता
दूताः संयमिनीपतेश्च निकटे तेभ्यो हरे रक्ष माम् ॥ ३४ ॥

यज्जिह्वा रसलालसाथ नयने ज्योतिर्विहीने श्रुति-
र्दुर्वार्तैकरतिः सुगन्धवशगश्वासा च नासा सदा ।
कायोऽपायनिकाय इत्यपगतं बाह्येन्द्रियोपासनं
विज्ञाप्यं स्वमनोगतं किमिति तद्भृत्यार्तिहन् पाहि माम् ॥ ३५ ॥

पुत्रं प्रेरयति प्रसह्य च शुभोदर्के हि कृत्ये पिता
माता पालयति स्वयं शठमतिं मूर्खं च दुष्टं तथा ।

सृष्टोऽहं भवता द्विजोत्तमकुले जाने न सद्वाप्यस-
द्धर्मे प्रेरय पालयेह पितरौ श्रीश त्वमेकोऽसि यत् ॥ ३६ ॥

यत् पश्यंश्च कुटुम्बिनोऽथ धनिकान् शश्वन्मृतान् कीटवत्
त्वां नाराधयमङ्गनासुतगृहद्रव्यादिलोभान्वितः ।
शृण्वन् नारकियातनामथ निजं खिद्य स्मरन् दुष्कृतं
तन्मां केशव पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ३७ ॥

वृद्धौ यत्पितरौ मृतौ हि वनितापथ्यात् प्रमादात् सुतो
मन्वानस्त्विति चावशिष्टजनसंरक्षाविधौ व्यापृतः ।
पश्चात् तैश्च निराकृतोऽहमधुनानन्याश्रयस्त्वां भजे
मां नारायण पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ३८ ॥

पश्यन्नेव पितृद्रुहः कुतनयान् नागप्रतिष्ठादिकं
पुत्रप्राप्तिसमीहया ह्यकरवं त्यक्तोऽथ जातैः सुतैः ।
तस्येदं किल कर्मणः फलमिति श्रान्तो भवन्तं भजे
तन्मां माधव पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ३९ ॥

वृद्धौ यत् पितराविति प्रियतमा नावाप्तपुत्रेत्यथो
बालास्ते तनया इति स्वभवने स्थित्वा चिरान्निर्गतः ।
मामेषानुगता जरा स्मृतिहरा विस्मारितस्त्वं तया
गोविन्दोत्तम पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ४० ॥

यत् कृत्यं गृहिणः कृतं हि तनयानुत्पाद्य संस्कृत्य तत्-
सद्वृत्तेः परिकल्पनं च न भवानाराधितस्त्वन्तरा ।
सत्यं साप्तपदीनमाहुरिति तत् संसारये प्रेरकं
विष्णो सर्वग पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ४१ ॥

यत् पित्रोः किल जीवतोर्हि वचनं कार्यं सुतैर्नादृतं
तत् तैस्ते त्वथ रक्षिता न च भवानाराधितो यन्मया ।
क्षन्तव्यं भवतोऽभयं करुणया याचेऽनुतप्तोऽधुना
तत् त्वं मां मधुसूदनाव जहि वा त्वत्तो न मेऽन्या गतिः ॥ ४२ ॥

त्यक्तास्ते न मया शठा अपि सुता नीतिं त्विमां शृण्वता
यत् संवर्ध्य विषद्रुमोऽपि न पुनः छेत्तुं स्वयं सांप्रतम् ।
यातास्ते प्रविमुच्य मां सुफलितं दैवेन तत् त्वां भजे
पाहि त्वं जहि वा त्रिविक्रम हरे त्वत्तो न मेऽन्या गतिः ॥ ४३ ॥

कः खेदो ननु निर्गता इति सुता यद् देहलग्नान्यहो
स्वैरं कानिचिदिन्द्रियाणि हि गतान्यन्यानि यास्यन्ति हि ।
कालोऽत्र प्रभुरित्यवाप्तचिदहं कालात्मकं त्वां भजे
त्वं मां वामन पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ४४ ॥

यातौ तौ पितरौ मम प्रियतरौ जातोऽस्मि याभ्यामहं
ते पान्था इव निर्गताश्च तनयाः किं तैः स्थितैर्वा गतैः ।
प्रागूर्ध्वं जननान्मृतेरिव भवांस्त्रातेत्यहं त्वां भजे
तन्मां श्रीधर पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ४५ ॥

बाल्यात् स्त्रीसुतमोहतः कुमतितो लोभाद् भवान् नार्चितो
वृद्धत्वादथ रुक्श्रमान्मृतिभयाद् भार्यासुतानादरात् ।
त्वत्सेवानिरतोऽर्चितुं स्वकरणैः क्षीणो न शक्नोम्यहं
पाहि त्वं जहि वा ममास्ति न हृषीकेश त्वदन्या गतिः ॥ ४६ ॥

स्वाद्वन्नं न निवेदितं न च हुतं संतर्पिता न द्विजाः
स्वादु स्वाद्विति चाशितं स्ववनितापुत्रैः सदा यौवने ।

जीर्णोऽहं त्वधुना स्मरामि तदपि त्वां भोजनाभ्यन्तरे
पाहि त्वं जहि वा ह्यनन्यगतिकं श्रीपद्मनाभ प्रभो ॥ ४७ ॥

चातुर्मास्यमविघ्नतो न रचितं न द्वादशी साधिता
नैवाकारि च विष्णुपञ्चकमपि श्रीकान्ततुष्ट्यै व्रतम् ।
भीतोऽहं ह्यधुना यमाद् भयहरं सर्वात्मना त्वां भजे
तद्दामोदर पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ४८ ॥

क्रीडाभिर्विषयोत्सवैश्च गमितं तद् यौवनान्तं वयः
श्रान्तोऽहं ह्यधुना करोमि सुकरं बाह्येन्द्रियोपासनम् ।
चित्तं चालयतीन्द्रियाणि चपलं तत् तुभ्यमावेदये
मां संकर्षण पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ४९ ॥

यत् कर्तुं किल निश्चिनोमि न च तच्छक्नोमि संसाधितुं
यत् स्वप्नेऽपि न चिन्तितं तदवशात् संपत्स्यते पुष्कलम् ।
इत्थं कृच्छ्रगतोऽपि सद्गुरुकृपावष्टम्भतस्त्वां भजे
पाहि त्वं जहि वा ह्यनन्यगतिकं श्रीवासुदेव प्रभो ॥ ५० ॥

एतत् कार्यमकार्यमेतदिति हि ज्ञात्वान्यथैवावशात्
कुर्वे तन्मम दुर्विधेर्विलसितं कस्याग्रतो रोदिमि ।
हीनः स्वीयजनैर्धनैः सुकरणैस्त्वां चिन्तयाम्यन्वहं
प्रद्युम्नात्मग पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ५१ ॥

पुत्राः पित्तकफज्वरा बहुतरापथ्यस्वरूपाः स्नुषा-
स्तद्दोषोऽजनि संनिपातजनितः क्रोशाम्यहं रोदिमि ।
मुह्यामि प्रलपाम्यतश्च भवरुग्वैद्यं भजे त्वामहं
पाहि त्वं जहि वानिरुद्ध कृपया त्वत्तो न मेऽन्या गतिः ॥ ५२ ॥

न ध्यातं पदमर्चितं न तुलसीपुष्पैर्न मूर्ध्नानतं
नैवाभिष्टुतमीक्षितं न न च तन्माहात्म्यमाकर्णितम् ।
याते सेतुमिवोदके गतवयास्तत्कर्तुमीहेऽधुना
तन्मां श्रीपुरुषोत्तमाव जहि वा त्वत्तो न मेऽन्या गतिः ॥ ५३ ॥

निद्राहारविहारलोलमनसा नीत्वा ह्यलभ्यं वयः
स्वल्पायुर्जरठोऽवशेन्द्रियगणो निःस्वोऽसहायोऽधुना ।
त्वत्सेवाकलितोऽद्य मोहमवनौ जातोऽपहासास्पदं
देवाधोक्षज पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ५४ ॥

कामाद्यैरसुरैर्हि निर्दयमहं बद्धो निरुद्धोऽर्दितो
रुक्सर्पैरथ दंशितो मदगजेनालोलितो मज्जितः ।
क्लेशाब्धौ स्वजनार्तिनाशनमहं तत् त्वां शरण्यं भजे
पाहि त्वं जहि नारसिंह कृपया त्वत्तो न मेऽन्या गतिः ॥ ५५ ॥

कुर्वन्नत्र हि विस्मरामि कृतमप्यावर्तयाम्यन्तरा
मोहात् तच्च समापयामि समुपक्रान्तस्य नान्तं भजे ।
चिन्त्योऽन्ते हि भवान् मम स्थितिरियं जाने न किं स्यात् कदा
तन्मामच्युत पाहि वाथ जहि वा त्वत्तो न मेऽन्या गतिः ॥ ५६ ॥

कामाद्या न वशं प्रयान्त्यनुगता जामातृवद् दुर्भरा
नेमां त्यक्तुमथोत्सहे ननु जरां रामामिवोढां सतीम् ।
सामाद्यैर्न च जेयमेव हि मनो धिङ् मामवश्येन्द्रियं
पाहि त्वं जहि वा जनार्दन परा त्वत्तो न मेऽन्या गतिः ॥ ५७ ॥

पादौ प्रस्खलतः स्थिरौ न च करौ गात्रं सकम्पं शिरो
भ्राम्यद्गद्गदनिस्वनस्त्वथ गलश्चक्षुर्भ्रमत्तारकम् ।

नूनं त्वत्पुरतः प्रनर्तयति मां सेयं जरा नर्तकी
पाहि त्वं जहि वाप्युपेन्द्र कृपया त्वत्तो न मेऽन्या गतिः ॥ ५८ ॥

यद्धर्माधिकृता मयानुसरता भूपान् कृतं पातकं
यद्वा केरलवासिना गणयितुं शक्यं न तत सर्वथा ।
तत् त्वं संहरसि स्मृतोऽपि सकलं तस्मादहं त्वां भजे
पाहि त्वं जहि वा हरे करुणया त्वत्तो न मेऽन्या गतिः ॥ ५९ ॥

त्वन्नामस्मृतिरित्युवाच भगवान् व्यासः परा निष्कृतिः
शक्ता सा मम पातकान् क्षपयितुं मत्वेति जातादरः ।
वच्म्यार्तः स्वकृताघतप्तहृदयः श्रीकृष्ण कृष्णेत्यहं
पाहि त्वं जहि वा ह्यनन्यगतिकं श्रीकृष्ण तुभ्यं नमः ॥ ६० ॥

मात्स्यं कौर्ममहो वपुर्हि विधृतं वाराहमत्युद्धतं
भक्तार्थं त्वथ नारसिंहमचिरात् तद्वामनं चार्षकम् ।
क्षात्रं गोपनिभं च बौद्धमथ तद्धर्तासि कल्क्यात्मकं
तत् त्वां कृष्ण भवाब्धिपोतमनिशं ध्यायामि भक्तेष्टदम् ॥ ६१ ॥

शङ्खः पाणितलेऽथ मन्दरगिरिः पृष्ठे च भूगोलको
दंष्ट्राग्रे विधृतो हिरण्यकशिपुः शस्तो बलिर्निर्जितः ।
दुर्भूपा दशकण्ठकेशिशकटाद्याः पोथिता मोहिता
दैत्या म्लेच्छगणान् हनिष्यसि(इति च) भजे त्वां कृष्ण सर्वोत्तमम् ॥६२॥

मुख्यप्राण नमोऽस्तु ते कुरु कृपां याचे निबद्धाञ्जलि-
र्मामुत्क्रामय रुग्णजीर्णवपुषश्चान्ते हरिं स्मारयन् ।
मत्कर्मानुगुणा गतिर्हि विहिता या कापि वा यामि तां
भक्तिर्मेऽस्तु हरौ गुरौ परमिका तत्राप्यनन्या स्थिरा ॥ ६३ ॥

मातर्यद्विधृतं हि मासनवकं कुक्षौ ततो वर्धितं
वासार्थं मम तद्गतेन हि मया क्लेशाश्च ये वर्णिताः ।
स्वप्रारब्धसमार्जिता हि त इमे तस्मात् त्वया क्षम्यतां
शुष्यज्जीर्णकलेबरं हि तदिदं त्यक्तानुमन्यस्व तत् ॥ ६४ ॥

आगर्भं भृशमम्बया च भवता यत्पालितं लालितं
यस्मिन् संवसता मया ह्यधिगतं सौख्यं परं सद्यशः ।
प्राप्तं दुःखमथापि यत् तदपि मत्प्रारब्धशेषात्मकं
त्यक्ष्ये जीर्णकलेबरं तदधुना तातानुमोदस्व तत् ॥ ६५ ॥

ये ज्ञानामृतसेकपूतहृदयस्वाराधितश्रीधरा-
पादस्त्रग्विलोकनोद्भवपरानन्दैकतृप्ताः स्वयम् ।
शिष्यानुग्रहकारिणः स्वगुरवश्चानेन ये सेविता-
स्त्यक्त्वा जीर्णकलेबरं हि तदिदं मां तेऽनुगृह्णन्त्वलम् ॥ ६६ ॥

मोहाद् दुर्विषयेषु सक्तमनिशं सर्वैः सहैवेन्द्रियैः
स्नेहात् त्वामनुमन्यता हि बहुशो नीतं मयायुः क्षयम् ।
स्वल्पं शिष्टमतोऽत्र वा मम कृते त्यक्त्वा निजं चापलं
साङ्गं सायुधमिन्दिरायुतहरिं चेतः सकृत् संस्मर ॥ ६७ ॥

वैकुण्ठे वरदिव्यरत्नजटिलप्रासादवप्रोज्ज्वले
श्वेतद्वीपवरे हरिप्रियतमावासे च दुग्धाम्बुधौ ।
योगिध्येयमचिन्त्यशक्तिविभवं चानादिमध्यात्ययं
साङ्गं सायुधमिन्दिरायुतहरिं चेतः सकृत् संस्मर ॥ ६८ ॥

नृत्यद्दिव्यवराप्सरोभिरथ सातोद्यैस्तथा किंनरै-
र्ब्रह्माद्यैः समुपास्यमानमुचितस्वस्वाधिकारार्हणैः ।

स्वासीनं नवभक्तिरत्नविलसन्मुक्त्युच्चसिंहासने
साङ्गं सायुधमिन्दिरायुतहरिं चेतः सकृत् संस्मर ॥ ६९ ॥

मेघश्यामलमुच्चलत्क्षणरुचिद्युत्याभहेमाम्बरं
श्रीमत्कौस्तुभकङ्कणादिवरसद्भूषागणालंकृतम् ।
भास्वद्रत्नकिरीटकुण्डललसत्स्मेराननं सुन्दरं
साङ्गं सायुधमिन्दिरायुतहरिं चेतः सकृत् संस्मर ॥ ७० ॥

प्रोद्यच्चन्द्रशताभहीरमणिसुस्तम्भोच्चसन्मण्टपे
क्षीराम्भोनिधिमध्यसंभृतमहामुक्तावितानोज्ज्वले ।
उत्कीर्णोज्ज्वलचन्द्रकान्तमयसद्भद्रासनेऽधिष्ठितं
साङ्गं सायुधमिन्दिरायुतहरिं चेतः सकृत् संस्मर ॥ ७१ ॥

भृग्वाद्यैरभिवन्दितं मुनिवरैर्ब्रह्मादिभिः सेवितं
गीर्वाणैः सनकादिसिद्धनिवहैः संस्तूयमानं मुदा ।
गायन्नारदतुम्बुरुप्रभृतिभिः ख्यातापदानं सदा
साङ्गं सायुधमिन्दिरायुतहरिं चेतः सकृत संस्मर ॥ ७२ ॥

विभ्राजद्गरुडेशमञ्चगमिलादुर्गाकरान्दोलितं
सन्मन्त्रोपनिषद्यपाश्रयमसंख्येयावताराभिधम् ।
विष्वक्सेनमहागताभिनवसन्मुक्तैर्मुहुर्वन्दितं
साङ्गं सायुधमिन्दिरायुतहरिं चेतः सकृत् संस्मर ॥ ७३ ॥

तैर्बद्धाञ्जलिभिः स्वमूर्ध्नि सहितैः भूतादिकालैस्त्रिभिः
स्वाज्ञाभ्रूवलनावलोकनपरैश्चोपास्यमानं सदा ।
मुक्तानेकचतुर्मुखैः स्तुतिपरैर्वेदैश्चतुर्भिर्वृतं
साङ्गं सायुधमिन्दिरायुतहरिं चेतः सकृत् संस्मर ॥ ७४ ॥

चूडारत्नपरंपरोज्ज्वलफणासाहस्रसन्मण्टपे
स्वास्तीर्णामलशेषभोगशयने विध्यास्यदत्तेक्षणम् ।
लक्ष्मीकोमलपाणिलालितपदाम्भोजं शयानं मुदा
संचिन्त्योपरतिं भजान्तसमये मच्चित्त नारायणम् ॥ ७५ ॥

आराध्यौ पितरौ प्रिया त्वथ समाधेयानुनेयाः सुताः
पूज्याश्चातिथयो यथाविधि समभ्यर्च्या निजा देवताः ।
द्रष्टव्याः प्रभवो धनार्जनकृतेऽभ्यस्याः कलाः स्वास्थ्यत-
श्चाह्नः कृत्यमिदं ततः सुगृहिणां दुखात्मिका संसृतिः ॥ ७६ ॥

यद्गर्भे त्वथ शैशवे ह्यविदिताः क्लेशाश्च तिष्ठन्तु ते
व्याध्याधिप्रभवाश्च कीटपशुजाः क्षुत्तृट्प्रवासारिजाः ।
एवं तान् सकलानलोलमनसा शश्वच्च निध्यायतां
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ७७ ॥

यद्बाल्ये पितृनिघ्नता गुरुकुले वासस्ततोऽस्तु द्वयं
कैंकर्यं धनिनामथामृति ततो हा स्त्रीसुताधीनता ।
स्वेच्छाहारविहारसौख्यविधुरं तत्पारतन्त्र्यं विदुः
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ७८ ॥

पित्रोश्चेन्निरतो हिते प्रियतमा कुप्यत्युदास्ते सुत-
स्तत्पथ्ये पितरौ न शर्म लभतः साध्यो न सर्वादरः ।
संत्याज्याः स्वसहोदरा अपि समाराध्याः प्रियाबान्धवाः
किं वात्रात्ममुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ७९ ॥

साध्वी चेद्वनिता सुतो न स च चेन्मूढोऽथवा दुर्जनः
सत्पुत्रो यदि दुर्निवाररुगतिश्रान्तो दृढाङ्गोऽथ चेत् ।

भर्तुश्चाप्यहिता स्नुषा यदि हिता तद्वंशजक्लेशदा
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८० ॥

जाता पुष्पवती प्रियाथ वपुषि व्याप्ता च रुग् दुःसहा
संभूतस्तनयो मृता प्रियतमाथोढापरा कन्यका ।
संप्राप्ता प्रलयान्तसंततिमहाचिन्ताविलासा जरा
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८१ ॥

स्मृत्युक्तानुगुणस्वधर्मचरणे भ्रान्तं तमाचक्षते
तस्मात् तद्विपरीतकार्यकरणे दुर्वृत्तमित्येव तम् ।
तन्मिश्राचरणे तु हन्त मनुजो भ्रष्टस्ततोऽतो भवेत्
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८२ ॥

क्लिश्यत्येव हि निर्धनोऽथ धनिकस्तद्रक्षितुं चान्वहं
चोरेभ्यो निशि निद्रिते निजजने जाग्रत् स्वयं खिद्यते ।
धर्मं नैव च कारयत्यथ गृहे मुष्णन्ति भार्यासुताः
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८३ ॥

दत्तं यद्धनिकैर्धनं किल पितस्तत् त्वं कुटुम्बीति ते
तच्चास्माकमघात् प्रतिग्रहकृताच्छुध्येर्धनानीहया ।
कस्मात् ताम्यसि भुङ्क्ष्व शेष्व च सुखं शंसन्ति वेत्थं सुताः
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८४ ॥

बह्वादाय धनं गृहिण्यथ गृहं प्राप्ते तमावृण्वते
द्राग् भार्यातनयादयः सकुतुकाश्चालोलयित्वार्जितम् ।
एतन्मेऽस्तु ममैतदर्हमिति तद् धृत्वाथ नेक्षन्ति तं
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८५ ॥

हित्वास्मान् वद धर्म इत्यथ वृथा कोऽयं हि वित्तव्ययः
प्रातःस्नानजपानतिस्तुतिभिरेवालं हि धर्मोऽर्जितः ।
वृद्धत्वे तव कोऽवितेति कुपिता निन्दन्ति भार्यासुताः
किं वात्रात्मसुखं ततः सुगृहिणो दुःखात्मिका संसृतिः ॥ ८६ ॥

भार्या नाद्रियते न जल्पति सुतो निन्दत्यभीतिः स्नुषा
पौत्राश्चापहसन्त्यथोक्तसमये भृत्या न चोपासते ।
वृद्धस्ताम्यति घस्मरान् निजगृहे दृष्ट्वा स्नुषाबान्धवान्
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८७ ॥

सर्वस्वं सुतसात्कृतं हि भवता क्लिश्यन्ति मे कन्यकाः
खिद्येऽहं कृपणाप्सरा इव मुदा दीव्यन्ति गेहे स्नुषाः ।
इत्थं व्याकुलयत्यलं कुवनिता निर्विद्यमानं पतिं
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८८ ॥

धर्मोऽधर्म इति ह्यवाप्तमचिराद् दारिद्र्यमव्याहतं
पश्येमां प्रतिवेशिनीं सुवसनां सद्भूषणालंकृताम् ।
धर्मो ह्येष कुरु प्रतिग्रहमिति व्यालोलयन्त्यां स्त्रियां
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ८९ ॥

यातं बाल्यमशेषलाल्यमथ तन्नष्टं क्षणाद् यौवनं
वृद्धत्वं समुपागतं त्वथ लयः संभावितोऽस्य क्रमात् ।
कालाधीनवपुष्मतोऽन्यगृहवत् कोऽयं ममत्वभ्रमः
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ९० ॥

संप्राप्नोति यथालयान् हि विचरंश्चारो हि राजाज्ञया
देही देहशतं स्वकर्मजनितं तद्वद्धरेराज्ञया ।

दुःखव्याधिजराविपत्तिमरणोद्भूतं हि निध्यायतः
किं वात्रात्मसुखं ततः सुगृहिणां दुःखात्मिका संसृतिः ॥ ९१ ॥

भ्राम्यत्येव मनोऽर्पितं त्वयि मुहुर्न स्थैर्यमालम्बते
वैराग्यं न दृढीभवत्यवगते क्लेशेऽपि सांसारिके ।
त्वां ध्यायामि कथं स्मरामि च कथं लीलामघघ्नीं तव
त्वद्भक्तिं सुदृढां विरक्तिसहितां देह्याशु नारायण ॥ ९२ ॥

नष्टांस्तान् पितृमातृसोदरसुताभार्यादिकान् संस्मरन्
नैराश्यं निजजीवितेऽपि कलयन् प्रारब्धनिघ्नोऽन्वहम् ।
श्रान्तस्त्वां भृशमानमन् हि शिरसा याचे प्रपन्नार्तिहं-
स्त्वद्भक्तिं सुदृढां विरक्तिसहितां देह्याशु नारायण ॥ ९३ ॥

स्वामिन् श्रीपरवासुदेवगुरुणा यत् त्वत्सनाम्ना भव-
न्माहात्म्यं कथितं हि तत्रभवता तत्रेदमत्यद्भुतम् ।
अस्यन्तर्बहिरित्यचिन्त्यमहिमंस्तद्भन्निदिध्यासत-
स्तत् प्रत्यायय चित्सुखाङ्गविलसच्छ्रन्ममान्तर्बहिः ॥ ९४ ॥

निर्वक्तुं न हि शक्नुवन्ति निगमास्त्वां त्वं न दृग्गोचरो-
ऽस्यण्वन्तर्जगतो बहिश्च भगवन् जाने विभुं त्वां ततः ।
ध्येयस्त्वं हि कथं यतोऽस्यनुपमस्तस्मात् त्वमेव स्वयं
मच्चित्तेऽद्भुतरूपशक्तिमहिमन् नारायणाविर्भव ॥ ९५ ॥

संसृष्टे हृदयस्थले मम परं श्वासानिलैः संततं
त्वद्भक्त्या वरुणेन नित्यममृतासारेण चाप्लाविते ।
अम्लानस्फुटपुण्डरीकविलसत्सत्कर्णिकायां सदा
प्रोद्यत्कोटिरविप्रकाशविलसन्मां पाहि नारायण ॥ ९६ ॥

चाञ्चल्यान्मनसो न भक्तिरचलाशक्त्या न कर्मादर-
स्तत्पर्याप्तसहायवित्तविरहान्न स्त्रोक्तधर्मोद्यमः ।
आत्मत्राणकृते प्रसीद भगवन् याचेऽन्तकाले मम
श्रीनारायण निःसरन्तु मुखतस्त्वन्नामवर्णाः क्रमात् ॥ ९७ ॥

यज्ञाद्याः सकलाः क्रियाश्च कृतिनां सप्रत्यवायाः सदा
ज्ञानं ते बहुजन्मसाध्यमथ च ध्यानं मनस्थैर्यजम् ।
सौलभ्याद् द्रुतसिद्धितोऽपि च कलौ याचेऽन्तकाले मम
श्रीनारायण निःसरन्तु मुखतस्त्वन्नामवर्णाः क्रमात् ॥ ९८ ॥

आराध्यात्मगुरून् चिरं गुरुकुले स्थित्वात्तविद्यैः परं
प्राप्यं यत् तदजामिलेन सहसा त्वन्नामसंकीर्तनात् ।
प्राप्यं कर्तुमलं न चाहमितरद् याचेऽन्तकाले मम
श्रीनारायण निःसरन्तु मुखतस्त्वन्नामवर्णाः क्रमात् ॥ ९९ ॥

प्राग्जन्मस्वथ चेह जन्मनि मया ये चापराधाः कृताः
क्षन्तव्या भवता हि तेऽहमभवं त्वद्भक्तवंशे यतः ।
त्वद्भक्ता गुरवश्च मे ह्युभयथानुग्राह्य भक्ते मयि
श्रीनारायण भक्तवत्सल कृपासिन्धो प्रसीदाधुना ॥ १०० ॥

ब्रह्माद्यान् विबुधानृषीन् भृगुमुखान् पूज्यान् पितॄन् मद्गुरून्
मान्यान् बन्धुजनान् द्विजानपि तथा स्तौम्यन्वहं नौमि च ।
कृत्वानुग्रहमत्र ये सकरुणा मां श्रेयसायोजय-
न्नन्तेऽमुत्र च तेऽर्थयन्त्वथ हरिं निःश्रेयसायापि मे ॥ १०१ ॥

रङ्गाचार्यतनूभवेषु गणने यो जन्मतो मध्यमः
सा प्रासूत सरस्वती **यमुटके गोविन्दनामा** च यः ।

श्रीमत्कौलगिवासुदेवचरणा यस्मिन् कृतानुग्रहा-
स्तेनेयं रचितार्पिता हरिपदे वैराग्यमुक्तावलिः ॥ १०२ ॥

न सुवर्णग्रथितेयं न महार्हपदार्थसुचिरनिर्वर्ण्या ।
तदपि च मुक्तावलिरिति हरिपदभागिति भवेत् सुजनमान्या ॥ १०३ ॥

चोले तञ्जपुरस्थेन सेयं मुक्तावलिः शुभा ।
ग्रथिता दुन्दुभौ ग्रीष्मे कलिमाने गतेधवे (४९६३) ॥ १०४ ॥

इति श्री-उटके-रङ्गाचार्यसुतगोविन्दाचार्यविरचिता
विरक्तिमुक्तावलिः संपूर्णा [1]

## ७५. वीरराघवस्तोत्रम्[2]

### वीरराघववेदान्तदेशिककृतम्

. . . [3]नित्यं यतिनृपतिरुदारो मामपायात् स पायात् ॥ ३ ॥

[1] The following verse is written after the colopon:

रुधिरोद्गारिण्यधिसृतिविमनोयोगेन निजसुखं प्राप्ताः ।
चैत्रे सितसप्तम्यां गोविन्दार्या हरेः पदं याताः ॥

[2] Based on the single incomplete MS. No. 67765 (D. C. No 1975; the beginning given in the Appendix therein is of the previous folio and does not belong to this Stotra). The author is identical with that of *Hastigirīśastava* (see below) as he himself has stated in the verse 60 of this Stotra. Both the MSS. available in the Library are written by the same hand.

[3] The MS. begins from here ; the previous portion is lost.

जयति गलदविद्या न्यासविद्या सुहृद्या
विधुतनमदवद्या मुक्तिसंपन्निषद्या ।
यदनघसुवचोभिः ख्यापिता ख्यातभूमा
श्रुतिमकुटगुरुर्मे मानसे सोऽस्तु नित्यम् ॥ ४ ॥

सोऽयं श्रीवण्छठारिर्जयति यतिपतिः सर्वविज्ञानसीमा
श्रीमान् रामानुजार्योऽपर इति विबुधैः साधु संतर्क्यमाणः ।
नाथः श्रीवैष्णवानां प्रगुणगुणभृतां प्राप्तसिंहासनानां
यस्य प्रेषोपदेशं नरहरिरकरोत् स्वस्य संराधनार्थम् ॥ ५ ॥

दुस्तर्काध्वगतागतश्रमलसद्दुर्वादिगर्वापह-
स्वैरोदारगभीरसारमधुरव्याहारधारान्वितः ।
मूर्तिः श्रीनृहरेः परेति जगति ख्यातो दिशेदञ्जसा
श्रीमाञ्छ्ीनिधिसंयमीन्द्रगुरुराट्छ्रेयांसि भूयांसि नः ॥ ६

दान्तं शान्तमनन्तचिन्तनपरिश्रान्तं महान्तं शुभ-
स्वान्तं कान्तगुणं तमन्तकभयध्वान्तं हरन्तं नृणाम् ।
सन्तं संतमसं ततं तनुभृतां निन्दन्तमन्तःस्थितं
भान्तं रङ्गधुरीणसंयमिवराधौरेयमीडीमहि ॥ ७ ॥

श्रीमान् वीररघूद्वहश्रुतिशिरोयोगीश्वरोऽहोबिला-
भिख्यश्रीनृहरेः पदे सुमहितोऽसौ सप्तविंशोऽधुना ।
तर्कव्याकृतितन्त्रशिक्षितमतिस्त्रय्यन्तपारीणधी-
र्वीक्षारण्यधुरीणवीररघुराट्स्तोत्रं विधत्ते कृती ॥ ८ ॥

श्रीमन् वीररघूद्वहाद्य भवतः स्तुत्यां प्रवर्तामहे
त्वन्माहात्म्यमवेक्ष्य मन्दमतयो लज्जामहे सांप्रतम् ।

स्तोतुं त्वां प्रभवन्ति नो पटुधियः प्राञ्चो विरिञ्चादयो
लज्जां निह्नुमहेतरां तत इह त्वस्मत्प्रयत्नः फली ॥ ९ ॥

वाल्मीकिर्भगवान् वरेण महता सार्वज्ञ्यमध्यञ्चितः
स्तुत्यां तेऽधिकृतो भवद्गुणनुतौ कार्त्स्न्येन नेष्टे स्म सः ।
क्वाहं मन्दमतिः क्व ते गुणगणा वेधोमुखैर्दुःशका
मातुं वीररघूद्वहाद्य भवतः स्तुत्यां यते साहसात् ॥ १० ॥

त्वद्भक्तिः सुदृढा सुमन्दधिषणं मां प्रेरयत्यञ्जसा
त्वत्स्तुत्यां किल वीरराघव ततः किं दुष्करं मेऽधुना ।
सुग्रीवः सुचिरं विनष्टनगरः शोचन् दवीयाञ्श्रिय-
स्त्रामञ्चन् परिधूय वालिनमसौ साम्राज्यमासेदिवान् ॥ ११ ॥

मत्स्तुत्या विषयीकृतोऽप्यगुणया त्वं राजसे ज्योतिषां
ज्योतिर्वीररघूद्वह श्रुतिशिरःसिद्धान्तसिद्धालय ।
धन्योऽहं त्वधुना भवत्स्तुतिकृतेः संतापभूम्ना शुना
लीढा किं न विराजते सुरसरित् तापात् स मुक्तो न किम् ॥ १२ ॥

तरुणतुलसीमालं मालम्बनीयनिजोरसं
रिपुजनततीकालं कालङ्घनीयनिजाङ्कम् ।
धरणितनयालोलं लोलम्बडिम्भसमच्छविं
विमलविलसच्छीलं श्रीलं भजेमहि राघवम् ॥ १३ ॥

निजपदनमत्सोमं सोमं मुखेन पराकृतं
सततविलसद्भूमं भूमण्डनं रघुपुंगवम् ।
मुनिजनदृशोऽभीमं भीमं दशास्यदृशां भृशं
विहितविनमत्कामं कामं सदेहमिवाश्रये ॥ १४ ॥

निरुपमतनुश्रीकं श्रीकंजभूप्रमुखाञ्चितं
निजधृतिलसद्भूकं भूकण्टकव्रजसूदनम् ।
विधुतदिविषद्भीकं भीकन्दलद्रिपुसैन्यकं
स्मर रुचिरभासाकं साकं श्रिया रघुपुंगवम् ॥ १५ ॥

नतजनमहोदारं दारं विपद्विततेः सतां
विनतदिविषद्वारं वारं प्रशस्तमहांहसाम् ।
रणभुवि महाधीरं धीरम्यमार्तजनावनं
रघुपतिममुं स्मारंस्मारं वसेयमहं सदा ॥ १६ ॥

निजपदभवद्गङ्गा गङ्गात्मजप्रमुखेडिता
कृतदुरितकृद्भङ्गाभङ्गात्मशक्तिरकुण्ठिता ।
धरणितनयासङ्गासङ्गा रघूद्वहदेवता
जयति हसितानङ्गानङ्गान्तकद्रुहिणाञ्चिता ॥ १७ ॥

निरुपधिदयासारं सारङ्गमुख्यवरप्रदं
परिधुतमहीभारं भारम्यकं रघुपुंगवम् ।
नतजनमनोऽदूरं दूरं कुदृष्टिमतां मृडे
प्रकटितमहातारं तारं श्रये भववारिधेः ॥ १८ ॥

वीक्षारण्यपतिर्विराजतितरां साक्षाच्छ्रियः श्रीः सदा
धीक्षान्त्यादिगुणोज्ज्वलैः सुमहितैः साक्षात्कृतो योगिभिः ।
द्राक्षासारसदृक्षनैजफणितिर्दाक्षायणीशादिभिः
स्वेक्षाकाङ्क्षिभिरञ्चितः प्रणमतां काङ्क्षाधिकार्थप्रदः ॥ १९ ॥

श्रीमान् वीररघूद्वहः श्रुतिशिरःसीमा पुमानेधते
कामाहंकृतिधिक्कृतिक्षमवपुर्भूमाभिरामाननः ।

कामासक्तनृणां सुदुर्ग्रहगतिर्वैमानिकेन्द्राश्चितः
श्यामात्मा नवनीरदप्रकरवद्धामाभिभूतारुणः ॥ २० ॥

पायाद् वीररघूद्वहोऽखिलगुरुः कायाधवाद्यैः सदा
मायासंवृतिदूरकैरभिनुतो मायाविनामग्रणीः ।
छायानाथविलोचनोऽखिलसुधीगेयानुभावः स्वयं
हेयातीतगुणोज्ज्वलो विनमतामायासहारी हरिः ॥ २१ ॥

नाराचप्रवरप्रधूतदिविषद्द्वाराभियातिव्रजः
सारात्यद्भुतशक्तिदुग्धजलधिः स्मेराब्जतुल्याननः ।
धीरात्मा सनकादिभिर्मुनिजनैराराध्यमानः स सं-
साराम्भोनिधिमज्जनप्रणतसंताराङ्घ्रिको दीव्यति ॥ २२ ॥

दीनानाथदुरन्तशोकशमनो नानाविकारोज्झितो
मानातीतनिजप्रभावलसितोऽहीनाल्पतल्पोज्ज्वलः ।
ध्यानारूढमहर्षिसंचयमनःसूनाश्रयो भूसुता-
धीनात्मा रघुपुंगवो विजयते दानार्द्रहस्ताम्बुजः ॥ २३ ॥

हुंकारेण विधूतनिर्जरगणोऽहंकारपाथोनिधिः
कङ्कालोपममुष्टिको निजधनुष्टंकारवाचालितः ।
पङ्काविष्टमना मनाग् विनिहतो लङ्काधिनाथो यतो
ऽहं कामप्रतिमं श्रये रघुपतिं तं कामितार्थप्रदम् ॥ २४ ॥

नेतुं पातकमण्डलं भुवि लयं सेतुं वितेनेऽम्बुधौ
भेत्तुं राक्षससंचयं वनचरं केतुं व्यधाद् यः स्वयम् ।
पातुं सर्वजनान् नरत्वमवहन्मातुं त्रिलोकीं बलिं
जेतुं वामनतां च तं रघुपतिं ध्यातुं यतध्वं जनाः ॥ २५ ॥

ध्यातं योगिजनैर्विधूतकलुषैः शीतं दयास्रोतसा
क्रीतं भ . . . . . . . . . .[1]
. . . . . . . श्रीललितं संश्रये ॥ ३२ ॥

आहुः श्रीरघुपुंगव श्रुतिशिरःसिद्धान्तबद्धादराः
प्राज्ञास्त्वां शरणागतप्रियतमं त्वागः कृपाकारणम् ।
प्राणेभ्योऽपि गरीयसीं जनकजां व्याकोपयन् वायसो
व्याजं कंचिदुपेत्य तावकदयागुम्फेन विस्रम्भितः ॥ ३३ ॥

अब्धिं वानरपुंगवं च शरणं यातस्त्वमद्धा रघु-
क्ष्माभृद्वर्य महर्षिसंघमहितां श्रीन्यासविद्यामिमाम् ।
लोकानुग्रहकारणेन जगति प्रख्यापयन् मादृशां
मन्दानां विधुनोषि संशयमहो किं ब्रूमहे त्वां विभो ॥ ३४ ॥

श्रीमन् वीररघूद्वह श्रुतिशिरःसिद्धान्तनिर्धारितं
न्यासं त्वं प्रकटीकरोषि न यदि प्रायेण नो सेत्स्यति ।
जन्तुर्दन्तुरधीः समन्तुरिह संगन्तुं त्वदीयं पदं
नो शक्नोति चतुर्मुखप्रभृतयो नालं हि तत् प्रार्थये ॥ ३५ ॥

श्रीमन् किंगृहरत्नदीप भवता प्रख्यापिता धीमता
शङ्काकूटमसौ धुनाति हि फले श्रीन्यासविद्या नृणाम् ।
नो चेद्धैतुकदुर्वचःशतमहाकान्तारतान्तात्मनां
विस्रम्भो न हि बोभवीति भगवन् तस्मान्नमस्याम्यहम् ॥ ३६ ॥

भक्तिर्मुक्तिकरी विरक्तिजननी संसारकुक्षिंभरी
त्रय्यन्तैः प्रथिता प्रपत्तिरपि सा संसिद्धिसंपादिनी ।

[1] One folio is missing.

स्वातन्त्र्येण न मुक्तिहेतुरखिलैः शास्त्रैर्निषेधादिति
प्राप्ते कोसलराज कः प्रतिवदेत् त्वत्तः समर्थः परः ॥ ३७ ॥

शङ्कापङ्किलमाविरञ्चमखिलं तापत्रयोत्क्रीडितं
भ्रान्तं हन्त जगत् कथं तरति तं संसारपाथोनिधिम् ।
धीर श्रीरघुपुंगव प्रणतसंरक्षैकदीक्षोऽवनौ
नो जायेत भवान् यदि ध्रुवमहो मुक्तेश्च मुक्तिर्भवेत् ॥ ३८ ॥

भक्तिः प्रपत्तिरिति मुक्तिपथस्य हेतू
द्वावामनन्ति रघुपुंगव साधु सन्तः ।
आद्या पराशरमुखाधिकृतिः परा तु
मादृग्जनाधिकृतिरित्यपि संगिरन्ते ॥ ३९ ॥

काले कलौ कलुषधीः कलितापराधः
कामार्दितो नरपशुः कथमुत्सहेत ।
भक्तिं महर्षिमहितां भगवंस्त्वदङ्घ्रि-
पङ्केरुहद्वयभरन्यसनं विनाहो ॥ ४० ॥

अत्यल्पबुद्धिरमितोत्कटदुःखमग्नः
स्वल्पायुरल्पशकुनश्चलचित्तवृत्तिः ।
त्वत्संनिधौ रघुपते शरणोक्तिमात्र-
मुक्त्वा कथं तरति संसृतिवारिराशिम् ॥ ४१ ॥

भक्तिः प्रपत्तिरपि संजनयेद् विमुक्तिं
स्वस्वाधिकारमनुरुध्य कृता यदि स्यात् ।
स्नानं हि सप्तविधमप्यधिकारक्लृप्त्या
सूते फलं रघुधुरीण समं जनानाम् ॥ ४२ ॥

गौणेऽप्यवान्तरभिदा प्रतिपादिता श्री-
रक्षादिषु श्रुतिकिरीटगुरूत्तमेन ।
आतो रघूद्वह यथाधिकृति प्रसूते
गौणो विधिः फलमिति प्रवदन्ति सन्तः ॥ ४३ ॥

भक्तिः प्रपत्तिरथवा भगवंस्त्वदुक्ति-
स्तन्निष्ठसंश्रय इतीह विकल्प्यमानम् ।
इत्येवमाह निगमान्तगुरुः किमत्र
वक्तव्यमस्ति रघुपुंगव मादृशानाम् ॥ ४४ ॥

शरणमिति वदन्तो नाथ भट्टारकाद्या-
स्तव चरणसरोजाभ्यन्तिके सत्त्वनिष्ठाः ।
परिमितधिषणानां मादृशानां जनानां
विदधति धियमर्थ्यां मुक्तिनिष्ठानुरक्ताम् ॥ ४५ ॥

शरणवरणविद्याङ्गोपसंहारशक्ति-
स्तदुपकरणभूतं त्वद्गुणाम्रेडनं च ।
रघुवर रसिकानां सूक्ष्मबुद्ध्यान्वितानां
प्रभवति मितधीः स्यात् किं स्वनिष्ठाधिकारी ॥ ४६ ॥

द्वयवचनमुदारं मुक्तिघण्टापथस्य
प्रघटकमिति बुद्धिं प्राप्य पूर्वेभ्य एषः ।
अनुवचनपटुस्तामुक्तिनिष्ठां गरिष्ठा-
मभिमृशति न चान्योऽकल्प्यवाक् कोसलेन्द्र ॥ ४७ ॥

रघुवर बधिरादिर्मूकभावं गतो वा
परिमृशति विमुक्त्यै जन्तुराचार्यनिष्ठाम् ।

अधिकृतिनियतैषाप्युक्तिराचार्यनिष्ठा
जनयति फलमद्धा तुल्यमेव प्रजानाम् ॥ ४८ ॥

न च जनयितुमीष्टे वैपरीत्येन क्लृप्ता
कलुषमतिभिरेषा ह्युक्तिनिष्ठार्यनिष्ठा ।
फलमिति निगमान्ताचार्यवर्यैरभाणि
ध्रुवमिह रघुवर्य क्वास्ति शङ्कावकाशः ॥ ४९ ॥

तव चरणसरोजाभ्यन्तिके कोसलेन्दो
शरणमिति वदन्तस्तावदुन्मीलयन्ति ।
निरवधिकरुणाब्धिं निस्तुलानन्दकन्दं
श्रयति यदि मुकुन्दं त्वां फलं किं न विन्देत् ॥ ५० ॥

निगममकुटविद्यादेशिकेन्द्रेण सम्यक्
प्रकटितमिदमद्धा संशये नास्तिकानाम् ।
कुकथककुहनोक्त्या मोहितानां जनानां
भवति रघुकुलेन्दो भेषजं त्वच्चरित्रम् ॥ ५१ ॥

मन्ये वीररघूद्वहावतरणं भावत्कमुर्व्यां नृणां
संसाराम्बुधिमग्नमानसजुषां दुर्वादतान्तात्मनाम् ।
मुक्त्यर्थं शरणागतिं घटयितुं केचित् समाचक्षते
पङ्क्तिग्रीवमुखप्रभञ्जनकृते युक्तं न मन्ये हि तत् ॥ ५२ ॥

मायामोहितबुद्धयो विधिशिवेन्द्राद्याः स्वयं देवता
दातुं न प्रभवन्ति मुक्तिमनघां दीनाः किमन्ये पुनः ।
त्वत्पादाम्बुजचञ्चरीकचरितास्त्वन्नामपाठोद्यताः
श्रीमद्वीररघूद्वह प्रजनयन्त्यद्धा विमुक्तिं नृणाम् ॥ ५३ ॥

द्वैतं केचिदुदीरयन्ति हि विशिष्टाद्वैतमाहुः परे
शुद्धाद्वैतमुदाहरन्ति कतिचित् तत्त्वं ततो दुर्ग्रहम् ।
वीक्षारण्यपते कृतेऽखिलपते न्यासे तवाङ्घ्र्यम्बुजे
तत्त्वार्थः सुगमः प्रणश्यति नृणामन्तर्दुरन्तं तमः ॥ ५४ ॥

ज्ञाज्ञावित्यसकौ श्रुति[र्विजयते] जीवेशयोर्भेदिका
सर्वं खल्विदमित्यपि श्रुतिरसौ जागर्त्यभेदग्रहे ।
श्रीमत्तिंगृहनाथ निस्तुलमिति श्रीलक्ष्मणार्यो मुनि-
स्त्वन्न्यस्तात्मभरो विरोधमनयोर्धूत्वा बभाषेऽद्भुतम् ॥ ५५ ॥

मायाकल्पितमेव हन्त जगदित्याहुः परे तद् वयं
नो युक्तं किल मन्महे रघुपते त्वच्छेषभावोज्ज्वलाः ।
शेषित्वं तव शेषवस्तुविरहे दुःसाधमापद्यते
शेषापह्नवकारिणां किमु भवेच्छेषप्रसिद्धिः क्वचित् ॥ ५६ ॥

त्वद्दास्यं निरुपाधिकं भुवि नृणां ब्रह्मादिभिः प्रार्थितं
मुक्तैश्वर्यनिशावसानसमयासक्तिं विधत्तेऽञ्जसा ।
मिथ्यावादिमते विमुक्तिरसकौ भूयात् तपस्विन्यहो
शेषाख्यां फणिपुंगवो न सहते बिभ्रन्मृषाकल्पनाम् ॥ ५७ ॥

श्रीमन् वण्शठवैरिसंयमिधराधौरेयमुख्यैर्यति-
क्षोणीशैरनघैः समर्चितपदाम्भोजो भृशं राजसि ।
वीक्षारण्यपदे हरे नरहरेरास्थानलक्ष्मीं स्थिरां
पुष्णासि प्रणमद्भयप्रशमनप्रागल्भ्यविभ्राजितः ॥ ५८ ॥

संसारसागरसमज्जनमानसोऽहं
संतारितः करुणया कथमप्यरीश ।

संयोजितोऽस्मि रघुपुंगव योगिमुख्ये-
ष्वाहोबिलेषु निगमान्तनिरूढधीषु ॥ ५९ ॥

वयं समकरिष्महि स्फुटतरं रघुक्ष्मापते
करिक्षितिपतिस्तवे नियतदेवसंप्रीणनम् ।
त्रयीशिखरदेशिकप्रभृतिभिर्विनिर्धारितं
तदेतदिति हैतुकप्रशिथिलप्रलापो वृथा ॥ ६० ॥

श्रीमन् हृत्तापनाशिन्यभिधकमलिनीनीरकल्लोलमाला-
लोलत्पाथोजजालप्रसृतमधुझरीशीकरामोदयुक्ते ।
रोधस्याजीव्यसि त्वं प्रदिशसि सकलं वाञ्छितं किंगृहेश
त्वत्तोऽप्येषाब्जिनी संदिशति किल फलानीप्सितान्यञ्जसाहो ॥

मूको जल्पाकति त्वच्चरणनलिनसंसेवनात् कोसलेन्दो
काणोऽप्यक्षणाभिपश्यत्यखिलमपि जगत्यञ्ज . . .[1] ॥ ६२ ॥

## ७६. सारनाथस्तोत्रम्[2]

सारक्षेत्रपतिं सरोजजपतिं सारातिदूरं सदा
सारं सारविमानगं सुरवरं सारेश्वरीनायकम् ।
नित्यं सारसरोवरे विरचितस्नानद्विजाराधितं
संसाराब्धितरिं सरोजनयनं तं सारनाथं भजे ॥ १ ॥

[1] Further portion is lost.

[2] Edited from the single MS. No. 71274 (D. C. No. 3136). It is on the God at Tirucherai near Kumbakonam.

सर्वतत्त्वालय श्रीमन् व्याकृताघशिरो हरे ।
परमात्मन् सारनाथ रक्ष मां शरणागतम् ॥ २ ॥

समस्तजगदाधार शङ्खचक्रगदाधर ।
सारनाथ ममानुज्ञां देहि त्वत्तीर्थसेवने ॥ ३ ॥

सारक्षेत्रे सारनाथः सारपुष्करिणीतटे ।
रमया सारनायवया विमाने सारसंज्ञके ॥ ४ ॥

अव्याजकृपया नित्यं तत्र संनिहितो हरिः ।
श्रिताभीष्टं ददन्नित्यं मोदते सूरिभिः सह ॥ ५ ॥

पञ्चसारमिदं नित्यं यः स्मरेत् प्रयतः पुमान् ।
स सर्वानर्थितानर्थान् ध्रुवमाप्नोति पूरुषः ॥ ६ ॥

नाच्यारुचारुवदनाम्बुजराजहंसं
सत्सारवच्चरितपूर्णमुदारहासम् ।
संसारसागरतरिं हृदयाब्जवासं
तं श्रीनिवासमभजं स्वरमावतंसम् ॥ ७ ॥

नमस्ते सारनाथाय कावेरीवरदायिने ।
सर्वपापविनाशाय सर्वाभीष्टप्रदायिने ॥ ८ ॥

सारक्षेत्रनिवासाय सारपुष्करिणीतटे ।
यस्य प्रसादात् कावेरी गङ्गाधिक्यं पुरा गता ॥ ९ ॥

भक्ताभीष्टफलप्रदाङ्घ्रियुगलं कौशेयराजत्कटिं
लक्ष्मीमङ्गलमन्दिरोरसि लसन्मुक्तावलीकौस्तुभम् ।

हस्तैः शङ्खरथाङ्गपङ्कजगदा बिभ्राणमभ्राकृतिं
राकाचन्द्रमुखं सुजातमकुटं श्रीसारनाथं भजे ॥ १० ॥

सारक्षेत्रे पवित्रे सुजनसुखकरे सारकासारतीरे
साराख्यव्योमयाने विरचितनिलयः सारनेत्र्या समेतः ।
साराम्भोधानकंजायितनयनयुगः फालसौन्दर्यसारः
संसाराब्धेरसारात् स हरिरवतु मां सारनाथो रमेशः ॥ ११ ॥

आलोड्य चिन्तितपदा श्रुतिराह यस्मा-
दास्तम्बमाम्बुजभवेन्दुशिरोमणिभ्याम् ।
उत्पत्तिजीवनलयानुदितान्ययोग-
हानं श्रियःपतिममुं हृदि चिन्तयामः ॥ १२ ॥

यस्मादथर्वशिखया द्रुहिणस्वमूर्ति-
रुद्रेन्द्रमूलजगतोऽभिहिता प्रसूतिः ।
पैङ्ग्यश्रुतिस्फुटगतिप्रतिपन्नरूपा
पद्मासनं तमनिशं प्रणमामि देवम् ॥ १३ ॥

यत्पत्नीदृष्टिलेशाद् द्रुहिणहरमुखा लब्धसत्ताः सुरेन्द्रा
यद्भक्तानां नियम्याः सकलसुरगणा ब्रह्मरुद्रेन्द्रमुख्याः ।
यत्पादक्षालनाम्बु प्रथयति शुचितां चन्द्रमौलेश्च लोके
तस्मै नारायणाय प्रवितनुत नुतिं सर्वभूतान्तराय ॥ १४ ॥

ब्रह्मेशादेर्नियन्ता परमपुरुष इत्याह नित्या हि वाणी
पुंवाक्यैस्तस्य बाधः कथमिव भविता प्राप्तदोषप्रभेदैः ।
दूरापास्तं च गौरीमधुमथनभिदाबाधकं वाक्यजालं
लक्ष्मीशं तं प्रपद्ये प्रतिभटरहितप्राभवोद्भूतिभव्यम् ॥ १५ ॥

वेदान्तेषु प्रतीतात् तदितरभजनाद् यस्य भक्तिः प्रकृष्टा
तत्रैव स्थानमग्र्यं स्फुरति विधिशिवस्थानतोऽप्यूर्ध्वदेशे ।
लक्ष्म्या सार्धं तमेकं हृदयसरसिजे ब्रह्मविद्याप्रदात्र्या
देवं नारायणाख्यं भवजलधिसमुत्तारणं संश्रयामः ॥ १६ ॥

[इति श्रीसारनाथस्तोत्रं संपूर्णम्]

## ७७. हयग्रीवदण्डकम्[1]

जय जय तुरङ्गास्य नस्तो मुखान्निःसृतानन्तवेदादिविद्याप्रबोधीकृताम्भोजसंभूत हेषारवोन्निर्जिताशेषदैतेय लक्ष्म्यामृतेनानिशं सिच्यमानाङ्ग राकेन्दुकोटिप्रतीकाशदेहप्रभाभासिताब्जातगर्भाण्डवाह्यान्तरानम्रधात्रीररुद्रेन्द्रमुख्यामरव्रातकोटीरमाणिक्यकान्तिच्छटारञ्जिताङ्घ्रे शरच्चन्द्रहृन्मन्दिरध्वान्तराशे प्रपन्नामरानोकहस्त्वं पुरा देव नारायणाख्येन रूपेण लोकं स्वगर्भे निधाय श्रियो बाहुयुग्मान्तरे संस्थितः सन् सिसृक्षुस्त्वमादौ विधातारमासृज्य तत्सत्रयागे हयग्रीवरूपं समास्थाय दैत्याधमौ लोकशत्रू मधूकैटभाख्यौ च चक्रेण हत्वा पुनर्लोकसंरक्षणार्थं झषाद्यावतारैर्महादैत्यसंघान् विनिर्मथ्य लोकान् सदा पासि भो देव यस्त्वां मनुष्योत्तमो दुग्धपाथोधिमध्यस्थसुश्वेतनामोल्लसद्द्वीपमध्ये सुसंतानवृक्षावलीवेष्टिते सन्मणिस्तम्भयुक्ते महामण्डपे तत्र पङ्केरुहे कर्णिकायां सुधासूतिबिम्बे महायोगपीठे निषण्णं नमद्देवतामौलिमन्दारमालास्रवन्माकरन्दद्रवक्षालितेनाङ्कुशच्छत्रपाठीन-

[1] Edited from the MS. No. PM 2934 (D. C. No. 2109) and collated with the text printed in Kannada character in the *Stotramañjarī* (Udipi, 1966, pp. 375-80).

वज्राम्बुजातोर्ध्वरेखाङ्कितेनाङ्घ्रियुग्मेन संराजितं श्वेतकर्माभगुल्फं लसज्जानुयुग्मं दिशादन्तिशुण्डोपमोरुद्वयं दुग्धसिन्ध्वन्तरीयोपमेनाच्छकौशेयवस्त्राभिरामेण भास्वन्नितम्बेन युक्तं वियद्वाहिनीवर्तुलावृत्तगम्भीरनाभीसरस्तीरसंजातरोमावलीमण्डितेनोदरेणाञ्चितं श्रीनिवासायितोरस्तलं शेषभोगाभहस्तैश्चतुर्भिः सदा शङ्खमुक्ताक्षमालालसत्पुस्तकोद्बोधयुक्तारविन्दानि सम्यग्दधानं रणद्भृङ्गसंसक्तसंफुल्लमन्दारमालावलीलग्नसत्कण्ठशोभाभिरामं शशाङ्कांशुसंकाशसत्केशरव्रातकेशावलीमण्डितं दन्तकान्तिच्छटाभासिताशावकाशं दलत्पद्मपत्रायताक्षं स्फुरद्दक्षिणावर्तशङ्खप्रतीकाशकर्णं लसन्मस्तकं दिव्यमुक्तामयोदारकोटीरकेयूरहारावलीमेखलाद्याखिलैर्भूषणैर्भूषितं चन्दनाचर्चिताशेषगात्रं सदा मूर्तिमद्वेदशास्त्रेतिहासादिविद्यावलीसेवितं श्रीसतीचञ्चलापाङ्गनीराजितब्रह्मरुद्रादिवन्द्यं सन्मनःपङ्कजे चिन्तयन् देव बाह्ये हरिद्रोमयालिप्तके रङ्गवल्लीसुशोभाञ्चिते स्थण्डिले श्वेतकौशेयवस्त्रावृते मालतीमल्लिकादिप्रसूनावलीमण्डिते चक्रपद्मादिसन्मण्डलोपेतपीठे यथा याज्ञिका बाह्यवह्नौ निजान्तःस्थमग्निं समाकृष्य मन्त्राक्षतैः स्थापयित्वार्चयन्ति स्म तद्वद्बहिर्योगमार्गेण हृत्पद्ममध्यस्थमीशं स्वबिम्बे प्रतिष्ठाप्य नित्यं त्वदष्टाक्षरेणोक्तमार्गेण संपूजयन् वर्तते देव यद्वा सुवर्णादिसँलोहपत्रेषु वा भूर्जपत्रेषु वा पट्टवस्त्रेऽथवा वह्निपूर्वाणदिग्राजदन्तारकेषु क्रमादेकवर्णं त्वदीयं लिखित्वाथ पञ्चाक्षरं गारुडं चाष्टवर्णं स्वरानुष्टुभं सम्यगालिख्य तद्वद्बहिर्बीजमार्गेष्वनङ्गाक्षरैः कादिसान्तैः क्रमाद्वेष्टयित्वा ततो व्योमयुग्मं धरामण्डले दिक्पतीनां च बीजानि संलिख्य त्वद्बिम्बवद्गन्धपुष्पोपहारादिभिर्भक्तिभावेन संपूज्य सन्मन्त्रसिद्धो भवेत् तस्य वक्त्रे स्थिरा शारदा तस्य गेहे ध्रुवा श्रीः स्वयं तस्य दासा नृपालादयस्तस्य भक्तिर्भवेच्छाश्वती तस्य विद्या स्फुरत्यश्रुतप्रज्ञया तस्य पुत्राभिवृद्धिर्भवेत् तस्य वाञ्छा लभन्तेऽखिला देव यद्वा मनोजेज्ञपूर्को भ्रुवोरन्तरे त्वां समस्तागमानुद्गिरन्तं समाचिन्त्य तत्रैव दीर्घान्वितं बिन्दुयुक्तं चतुर्थोप्मरूपं मनुं स्वान्वितं सम्यगुच्चार्य सायंमुखे मुक्तनामासने संनिवेश्यानिलं चेडया पूरयन् केवले कुम्भके संस्थितः सन् ततोर्ध्वीकृतेन स्वजिह्वाग्रभागेन रन्ध्रं निरुध्योद्गतं सोमनीरं पिबेत् प्रत्यहं

तस्य गीर्वाणवाणी वशा तस्य पातञ्जलं स्याज्जलं तस्य भाट्टं घरट्टोत्थपिष्टोपमं तस्य तर्कस्तु पाणिस्थकर्कन्धुका तस्य वैयासिकी गीर्मरुन्मेचिका सैष वादेषु पञ्चाननो देव यो वा घृतं ब्राह्मिकापाचितं वाथ वा कङ्गुलीबीजजालानि वाचाभिमन्त्र्य त्वदीयेन मन्त्रेण नित्यं पिबेत् खादयेत् तस्य वक्त्रे कवित्वं सुधासंमितं संभवेत् तस्य बुद्धिर्बहुग्रन्थसंधारिणी स्यात् प्रभो देव यत्ते पदाम्भोजशौचोदकं शूलपाणेः शिरोभूषणं यस्य नाभ्युद्भवो लोकनिर्माणकृत् पद्मभूर्यस्य पौत्रो हरः सर्वसंहारकृद् यस्य निःश्वासरूपाः समस्तागमा यस्य पत्नीकटाक्षस्य लेशो विधीशेन्द्रमुख्यामरस्थानदो यस्य तल्पं सशैलाटवीसिन्धुविश्वंभराधारकः शेषभोगीश्वरो यस्य वाहोत्तमः सर्ववेदाभिमानी खगाधीश्वरो यस्य वक्त्राग्निमध्ये सुराराातिसंघाः पतङ्गा बभूवुः स्वयं यस्य दिव्यो हयो भक्तिभाजां नृणां तीर्थकोट्युत्थपुण्याधिको यस्य विज्ञानभक्त्याख्यसद्द्रव्यसंपादकानां भवेदक्षयानन्दभोगः प्रभो देव तं त्वामहं सच्चिदानन्दमूर्तिं जगज्जन्मसंरक्षणज्ञानसंहारबन्धादिहेतुं निरस्ताधिकं निःसमं सद्गुणाम्भोनिधिं नित्यमुक्तं निजानन्दतृप्तं विभुं निर्गताशेषदोषं निरीशं स्वरोमावलीकूपसंस्थाब्जगर्भाण्डकोटिव्रजं मुक्तवागीशभोगीशपक्षीशदेवेशकन्दर्पसूर्यादिमुख्यामरैः सेवितं श्रीकराम्भोजरत्नोर्मिकादीधितिस्तोमशोणीकृताङ्घ्रिद्वयं भक्तलोकार्जितानेकजन्माघशुष्काटवीपावकं सर्ववेदैकवेद्यं सर्वदेवैकवन्द्यं महायोगिहृन्मन्दिरं संततानन्तभोगासनं देवदेवं प्रणम्य प्रभो याचये साधुनिन्दात्मशंसाश्रुतग्रन्थवेत्तृत्वदुःशास्त्रवेत्तृत्वदुष्टान्नभोक्तृत्वदुष्टात्मसेवाद्यनन्तापराधालयं नित्यकर्माद्यनुष्ठानदूरं दुराचारिणं ज्ञानहीनं सदा क्रोधलोभाद्यमित्रान्वितं स्वोत्तमाचार्यसेवानभिज्ञं कृतघ्नं नृशंसं महाघौघसिन्धौ निमग्नं कृपाम्भोनिधे पाहि निश्चञ्चलां ते पदाम्भोजयुग्मे च भक्तिं प्रभो देहि सुज्ञानवन्तं कुरुष्वाशु यत्ते मनोज्ञं लसत्पुण्डरीकायताक्षं प्रसन्नाननं चारुमन्दस्मितं शोभनाङ्गं शशाङ्कप्रभं दिव्यसद्गन्धभूषाम्बरालंकृतं श्रीसखं सच्चिदानन्दरूपं सदा मन्मनःपङ्कजे ते स्थिरं स्थापयानन्तशक्ते ।

जय वाजिवक्त्र प्रभो जय सिन्धुकन्यापते जय देवचूडामणे जयानन्तमूर्ते जयानन्दसिन्धो जयागाधबोध प्रभो श्रीरमानाथ लोकैकनाथाप्रमेयाच्युतानन्त गोविन्द तुभ्यं नमस्ते नमस्ते नमः पाहि मां पाहि ।

इति श्रीहयग्रीवदण्डकं समाप्तम्

## ७८. हरिस्तुतिः[1]

### श्रीनिवासविरचिता

यमकं वा प्रासं वा विदुषां दृष्टिर्न गोचरीकुरुते ।
रसविमुखस्तद्द्रष्टा जनः कलौ मान्यतां मुधा कुशलः ॥ १ ॥

यमकप्रासन्यसनं स्वप्ने चाहं न किंचिदपि गणये ।
यद्यपि हरिहरविनुतौ परिहृतमेतत् सुखं सतां दिशताम् ॥ २ ॥[2]

यदि वाक् सामग्री वस्तथापि दिशतां मतिं हयग्रीवः ।
मोहलतामूलहरी यदीयहेषारवोत्थिता लहरी ॥ १ ॥

सुखमनुसंधातारं नाभौ दधतं सुमेधसं धातारम् ।
खगतुरगं गायामो यस्य पदतलाद् बभूव गङ्गायामः ॥ २ ॥

[1] Based on the MS. No. PM 2906 (D. C. No. 2145) and it is collated with the *Śaṃkaragurukulapatrikā* (vol. I, no. 1, 1939, pp. 6-7). See *Harastuti* in vol. I of *Stotrasamuccaya*, pp. 291-2.

[2] These two verses are separately numbered in the MS.

रचिता हि दशावतारमायाः प्रभुणा येन दशावता रमायाः
तममुं कलयामहे शरण्यं निजयावत्कलया महेशरण्यम् ॥ ३ ॥

पदपङ्करुहो मरन्दधारा भुवनं यस्य समस्तमुद्दधार ।
न किमृच्छति तत्कटाक्षमाला कलनीया स्मरणार्थमक्षमाला ॥ ४ ॥

अपि सन्ति विरिञ्चनादिदेवा महिमैषां नहि किंचनादिदेव ।
अयमेव हि भक्तकार्यरक्षी भुवनं येन समन्वकार्यरक्षि ॥ ५ ॥

मूर्तिर्नीपश्यामा यस्य रमा हृदि निवासमाप श्यामा ।
देवं तमपश्यामास्माकमतः श्रमकरी बहुतपस्या मा ॥ ६ ॥

त्यक्त्वा दुष्कृतमायां हरिपदभक्तिं यदा नियतमायाम् ।
संपदि पुण्यतमायां स्थितोऽस्मि साक्षादकामयत मा याम् ॥ ७ ॥

यः सर्वदाप्यवनतः परस्तवनतोषसंविभावनतः ।
तस्य ज्ञानमुदयते हरिश्च दयते रमापि मोदयते ॥ ८ ॥

शेषाद्रिं प्रविशेयं देवं द्रक्ष्यामि पीतकौशेयम् ।
मम सुचिरादाशेयं तत्र च कवितां सदा प्रतिदिशेयम् ॥ ९ ॥

यस्तु हरिं पूजयति स्वमहिम्ना तं हरिर्नियोजयति ।
इह च सुखं योजयति स्वर्गे यद्वत् सुरर्षभो जयति ॥ १० ॥

इति श्रीनिवासविरचिता हरिस्तुतिः संपूर्णा

## ७९. हर्यष्टप्रासपञ्चकम्[1]

आदावेव सुनिर्विकारवपुषे वेदादिसद्योनये
भेदाभेदविवर्जितात्मगतये वेदान्तवेद्यात्मने ।
पादाम्भोरुहदाससंसृतिभयच्छेदाय लक्ष्मीपते
कादाचित्कतयात्मकल्पितजगद्भेदाय तुभ्यं नमः ॥ १ ॥

बालार्कद्युतिकौस्तुभाङ्कितगले नीलाम्बुजाभे जग-
ज्जालोत्पादकनाभिपङ्कजभवत्कीलालजन्मासने ।
फालाक्षप्रमुखस्वभक्तकरुणावालाक्षिपद्मे मनो-
लीला मेऽस्तु हरौ सदापि तुलसीमालादिभिर्भूषिते ॥ २ ॥

हैमातुल्यमणिप्रभामकुटिनं सोमार्ककोटिद्युतिं
भीमाकारमहासुरप्रशमनोद्दामायुधालंकृतम् ।
रोमाञ्चाङ्कितयोगिपुंगवरहोधीमाननीयाकृतिं
भूमालालितपादपद्मयुगलं क्षेमाय सेवेऽच्युतम् ॥ ३ ॥

संसारार्णवमज्जतामुरुभयध्वंसात्मनामावलिः
कंसारातिदशाननान्तकमुखोल्लासावतारांशकैः ।
हंसारूढविधातृपूर्वकसुरान् हिंसाविहीनान् मुहुः
पुंसामाकलयन् जघन्यमिह मां निःसारमव्याद्धरिः ॥ ४ ॥

पायाच्छेषफणासहस्रमणिभासायाहृकोटद्युम्णरुक्-
छायाभासि तदीयभोगशयने जायाष्टकेनावृते ।
मायावर्जितयोगमुद्रितमुनिध्येयात्मनिद्रां भजन्
कायात् कायमुपेत्य दुःखितमितोऽपायान्मुकुन्दोऽद्य माम् ॥ ५ ॥

[1] Edited from the MS. No. 6716) (D. C. No. 2152).

हठात्कारेण संसारदुःखानि निखिलान्यपि ।
हरत्येव न संदेहो हयंष्टप्रासपञ्चकम् ॥ ६ ॥

इति श्रीहयंष्टप्रासपञ्चकस्तोत्रं संपूर्णम्

## ८०. हस्तिगिरीशस्तवः[1]

वीरराघववेदान्तदेशिककृतः

श्रीमच्छ्रीनिधियोगीन्द्रश्रीरङ्गशयतीश्वरौ ।
प्रणम्य सादरं कुर्वे हस्तीशस्तवमद्भुतम् ॥ १ ॥

प्रह्लादजनकोद्दामदानवैभवशालिनौ ।
करिक्ष्माभृदधीशानौ कलयेमहि कावपि ॥ २ ॥

कनत्परममायिने करिगिरेरधः स्थायिने
चराचरविधायिने चतुरभीष्टसंदायिने ।
नमः परमयोगिने नतजनावनोद्योगिने
नृशंसहतिकायिने नृहरये जगत्कायिने ॥ ३ ॥

श्रिया सह विहारिणे श्रुतिशिरःसु संचारिणे
प्रभूतभयहारिणे प्रबलदैत्यसंहारिणे ।

[1] Edited from a single MS. No. 66592 (D. C. No. 2153). The author is the same as that of the *Vīrarāghavastotra* above, pp. 206-16.

शुकादिहितकारिणे शुभगुणैरलंकारिणे
नतत्रिपुरवैरिणे नम इदं मघोर्वैरिणे ॥ ४ ॥

सटापटलभीषणं सरलकेसरोद्भूषणं
समस्तगदशोषणं सरससाधुसंभाषणम् ।
विशिष्टजनतोषणं विधिशिवेन्द्रसंपोषणं
नमामि भवपेषणं नरहरिं महीभूषणम् ॥ ५ ॥

करिगिरितटाधारा धाराधरप्रकरोपमा
निरुपमगुणोदारा दारार्धदेहमुखेडिता ।
वभयसमुत्तारा ताराधिपप्रतिमानना
निरवधिदयासारा सा राजते परदेवता ॥ ६ ॥

करिगिरितटोत्तंसं तं संप्रवृद्धबलोदयं
निजबलगलत्कंसं कं संश्रयन्तममुं सदा ।
मुनिजनकृताशंसं शं संदधानमहं भजे
रुचिरसमसाध्वंसं ध्वंसं विपद्गितते: सताम् ॥ ७ ॥

करिगिरिपतिं श्रीशं श्रीशंकरप्रमुखार्चितं
सकलभुवनाधीशं धीशं बलर्द्धिविशोभितम् ।
नवजलदसंकाशं काशंसनीयगुणोत्करं
जगति दहराकाशं का शंसतीह न देवता ॥ ८ ॥

प्रत्यूषस्मयमानपङ्कजसदृग्दृग्दर्शनीयाननः
प्रत्यादिष्टसुराभियातिनृपतिप्रोद्दामभूमाङ्कुरः ।

अस्मादृग्जन – ⏑ – ⏑ ⏑ ⏑ – – सावतारः क्षिता-
वस्मान् रक्षतु हस्तिशैलशिखरस्थेमा पुमान् [केसरी] ॥ ९ ॥

हस्त्यद्रिनाथ वरदत्वमनन्यलभ्य-
मुच्चैस्तरां प्रकटयन्निव शृङ्गदेशे ।
तिष्ठस्यहो वरदमूर्तिरिति प्रतीमो
नो चेच्छरीरयुगलाश्रयणं किमर्थम् ॥ १० ॥

पायान्नः पातकेभ्यः करिशिखरिपतिः कालमेघाभिरामः
कन्दर्पोद्दामदर्पप्रशमननिपुणस्वीयलावण्यभूमा ।
त्र्यन्तश्रान्तचिन्तानघतरविबुधव्राततोष्टूयमानः
श्रीमान् श्रेयोविधाता निजपदनलिनद्वन्द्वसेवापराणाम् ॥ ११ ॥

भूमा भूमावुमापत्यभिनुतमहिमा सर्वकल्याणसीमा
भूमाभूमावहश्रीकरिगिरिनिलयो योगिभिर्गेयनामा ।
कामाद् वैमानिकाद्यैर्दुरवगमगतिर्वैरिभीमात्मशक्तिः
श्रीमान् पुष्णातु धामान्यजनदृगपदं तिग्मधामत्रिधामा ॥ १२ ॥

इन्द्राद्या देववर्गाः परिचरणपराः स्वाधिकारे नियुक्ता
नित्यैर्नैमित्तिकैर्वा श्रुतिशतविहितैः कर्मभिः पूजिताश्चेत् ।
तृप्ताश्चैव प्रसन्नाः करिशिखरिपते त्वत्प्रसादाय भूयः
कल्पान्ते हीति गीतं विशदमभिहितं सूत्रभाष्यादिके च ॥१३॥

आतस्तान् पूजयामः प्रसदनमिह ते प्रार्थयन्तः प्रकामं
राज्ञः काङ्क्षन् प्रसादं ह्युपचरति यथा भृत्यवर्गं तदीयम् ।

स्वाभीष्टावेदनं तन्मुखत उरुगुणं नीतिवित्सार्वभौमा
मन्यन्ते सांप्रतं श्रीकरिशिखरिपदे पूजनं युक्तमेषाम् ॥ १४ ॥

धार्यत्वाच्छेषभावान्नियमनविषयत्वाद् विधेयत्वतश्च
श्रीमन् हस्तिक्ष्माभृन्निलय तव तनुर्देवता इन्द्रमुख्याः ।
तद्याजी त्वत्प्रसादं प्रसभमभिलषंस्त्वत्तनुत्वेन जानन्
किं न्वैकान्त्यं न विन्देद् वरद कथय मे दासदासानुसेवी ॥१५॥

यः प्राधान्येन देवं ⏑ ⏑ ⏑ जडमतिर्वाञ्छिताप्त्यै स न स्या-
देकान्ती देवराज त्वदुपममिह नो व ⏑ – – – ⏑ – – ।
चत्वारो वै पुमर्थाः परमपुरुषतो नान्यतो लब्धुमर्हा
इत्येवं संगिरन्ते किल फलचरणे भाष्यकारादयोऽमी ॥ १६ ॥

चर्मप्राया हि देवा इति कथनमपि प्रायशः प्रौढिवादः
स्वातन्त्र्यं नैव तेषां क्वचिदपि विषये पारतन्त्र्यं तु काष्ठा ।
इत्येवं हस्तिनाथ स्फुटयितुमपि वा तादृशोक्तिर्विभाव्या
नो चेद् देवाधिकृत्यां कथमिह घटते देवतैश्वर्यवादः ॥ १७ ॥

स्वप्रीतिद्वारकं यत् परमपुरुषसंप्रीतिनिष्पादनं त-
द्ध्यैश्वर्यं देवताया इति तदधिकृतौ भाति सौदर्शनोक्तिः ।
चर्मप्रायत्ववादे कथमिव घटते हस्तिशैलेश सैषा
दोषाशेषाभिनन्द्या तदिह बुधजनैर्देवतैश्वर्यमर्थ्यम् ॥ १८ ॥

पाराशर्यः प्रमाणं पटुतरधिषणो देवतैश्वर्यसिद्धौ
कल्प्या पूर्वादिपक्षं निरसितुमकरोद् यच्छ्रुतत्वाच्च सूत्रम् ।

रक्षायां साचरिभ्यां श्रुतिशिखरगुरुर्दर्शयित्वा प्रमाणं
ह्यूचे हस्तीश देवान्तरयजनमपि ब्रह्ममीमांसकानाम् ॥ १९ ॥

साक्षाच्चतुर्मुखमखे हविरन्वभूस्त्वं
शक्रादयः किल न तत्र तदन्वभूवन् ।
हस्त्यद्रिनाथ वरमेवमदाः सुरेभ्यो
नो मानुषेभ्य इह हेतुमुदारसत्त्वम् ॥ २० ॥

यद्देवता त्वमधुना यदि संब्रवीषि
तद्वा कुतः सुरगणे भगवन् दयेथाः ।
आज्ञैव हेतुरिह देवगणस्य तत्त्वे
नो चोदनार्ह इति चेत किमहं ब्रवीमि ॥ २१ ॥

वेदान्तदेशिकवरैः क्वचन प्रबन्धे
देवा हि कञ्चुकसमा इति तावदुक्तम् ।
यष्टव्यता प्रपदनान्वयिनापि तेषा-
मुक्ता क्वचित कथमिदं घटते करीश ॥ २२ ॥

जैमिन्यनीश्वरवचोनिचयोपपत्ति-
न्यायेन देशिकवचोऽपि विभावनीयम् ।
सर्वैश्च पण्डितजनैरिति संप्रतीमो
हस्तीश्वरैवमुपपादयसि त्वमेव ॥ २३ ॥

भाष्ये हि ब्रह्मशब्दः क्वचिदधिकरणे भाति सामान्यवाची
तस्मिन्नेवावभाति क्वचिदधिकरणेऽसावसाधारणोऽपि ।

अत्र श्रीतत्त्वटीकाप्रकटितनयतः कञ्चुकप्रायतोक्ते-
देवानां मान्यवर्यं करिशिखरिपते बोधयस्यञ्जसा त्वम् ॥ २४ ॥

यस्मिन् पक्षोऽस्ति भाष्यप्रमुखबहुतरग्रन्थसंवादभूमा
तस्मिंस्तात्पर्यमेवाकलयितुमुचितं वेदचूडागुरूणाम् ।
श्रीशे ब्रह्मण्यनीशे त्वयि विधिमुखसाधर्म्यबुद्धिं निरोद्धुं
मन्दानां मन्वहे श्रीकरिशिखरिपते कञ्चुकप्रायतोक्तिम् ॥ २५ ॥

सकृद्दृष्टस्त्वं मे क्षिपसि सहसा सर्वदुरिता-
न्यनन्तान्यच्छेद्यान्यनुपमगुण श्रीकरिपते ।
कथंकारं कारागृहनिगलयोग्या विधिमुखाः
सुराः शक्तास्तादृग्दुरितलवनिर्धूननविधौ ॥ २६ ॥

सकृत् त्वां पश्यन्तः समदगजगण्डस्थलगल-
न्मदस्रोतःक्रीडद्भ्रमरपटलीविभ्रमभृतः ।
नरीनृत्यन्नारीरुचिरकबरीकान्तिलहरी-
परीतान् गाहन्ते सपदि हि गृहान् हस्तिरमण ॥ २७ ॥

सकृत् त्वां संपश्यन् सकृदवनताभीष्टवरदं
समस्तैस्त्रय्यन्तैः समधिगतपारम्यमनघम् ।
शुनासीरस्तम्बेरममुखमखाभ्यर्थनकला-
नभिज्ञः श्रीहस्तिक्षितिरमण धीरश्च भविता ॥ २८ ॥

सकृत् त्वां दृष्ट्वा यः सजलजलदच्छायममलं
समस्तैर्योगीन्द्रैरभिनुतमिह श्रीकरिपते ।

स मृत्योः संभूतां भियमथ विनिर्धूय सहसा
महानन्दब्रह्मानुभवसुपरीवाहमयते ॥ २९ ॥

विधातारं केचिच्छरणमभिगच्छन्ति निपुणाः
सुधाशानामीशं कतिचन परे त्वन्यमपि वा ।
वृथामीषां यत्नः करिगिरिपते त्वद्गुणकथा-
सुधास्वादाभिज्ञाः किमपि गणयन्त्यल्पशकरान् ॥ ३० ॥

त्वदायत्तामीषां स्थितिरधिकृतिर्वा दिविषदां
दिगीशानादीनामिति खलु न जानन्ति हि जडाः ।
अतस्तान् सेवन्ते परिमितफलप्राप्तिचपलाः
करीश त्वन्मायापरवशमशेषं जगदिदम् ॥ ३१ ॥

सृजस्यादौ विश्वं समवसि ततः संहरसि च
त्वमेव श्रीहस्तिक्षितिरमण नान्यः प्रभवति ।
त्वया दत्तां शक्तिं विधिशिवशचीशप्रभृतयो
दधाना लोकानामधिकृतिममी बिभ्रतितराम् ॥ ३२ ॥

न जाने श्रीजाने नलिननयने नागशयने
प्रधाने देवानां त्रिजगदवने दत्तनयने ।
त्वयि श्रीहस्तिक्ष्मारमण भगवन् भक्तिमतुलां
विना मुक्तेरन्यत् किमपि निगमान्तैरवधृतम् ॥ ३३ ॥

त्वमेव ब्रह्माद्यं परमपुरुष श्रीकरिपते
त्वमेवं त्रय्यन्तैरभिनुतपदो योगिभिरपि ।

त्वमेव श्रीकान्तो निखिलजगदन्तर्यमयिता
त्वमेव त्वामातः किल शरणमव्याजमभजम् ॥ ३४ ॥

जगत्सृष्टिस्थेमप्रलयरचनाकेलिविवशं
जनिक्लेशत्रस्तप्रचुरजनतात्राणनिपुणम् ।
दयादुग्धाम्भोधिं दनुजमथनं दिव्यचरितं
करीश त्वां दृष्ट्वा शरणमिति वाचं समफणम् ॥ ३५ ॥

पुंसूक्तं सकलं करीश भवदेकान्तं वरीवृत्यते
सर्वाम्नायगणप्रधानतमतामस्य स्मरन्ति स्फुटम् ।
गीता त्वन्मुखनिर्गता सुमहिताधीता विमुक्त्यर्थिभि-
स्त्वत्पारम्यपरा विराजतितरां को वा समः कथ्यताम् ॥ ३६ ॥

ईशानश्रुतिवैभवेन गिरिशे नेतुं न युक्तं हि तत्
षष्ठ्या अन्वयदुस्थताप्रसजनात् तत्पूर्ववृत्तेः स्फुटम् ।
किं तु त्वत्परमेव सर्वविबुधैरभ्यर्थनीयं बला-
देवं विष्णुपुराणमुख्यवचनैर्हस्तीश निर्धारितम् ॥ ३७ ॥

सत्यं ज्ञानमनन्तमाद्यममलं नित्यं स्वयंज्योतिषं
सर्वव्यापि सुसूक्ष्मभूतमभयं त्वामाहुराद्या गिरः ।
त्वामन्तर्विनिवेशयन्ति महता यत्नेन योगीश्वराः
किं ब्रूमो महिमानमद्भुततमं हस्तिक्ष्माभृत्पते ॥ ३८ ॥

किं त्वां जानन्ति मूढाः कलुषितहृदया हस्तिशैलेश्वर त्वत्-
सांनिध्येऽवस्थिता अप्यधिनिधि चरतां किं नु तज्ज्ञानमस्ति ।
क्षुद्रान् निद्रानुसक्तानपि पशुसदृशान् ब्रह्मविन्निन्दनैका-
नन्दान् मन्दानहंताप्रथमजनिगृहांस्त्वं कथं तान् सहेथाः ॥ ३९ ॥

चातुर्मास्यं समग्रं व्रतमिह चरितं त्वत्कृपावैभवेन
श्रीमन् हस्तीश्वराद्यं व्रतमनुचरितं निस्तुले रङ्गधाम्नि ।
अध्याप्य ब्रह्मविद्यामनुपमधिषणानाश्रिताञ्छात्रवर्गान्
निःसीमानन्दमाप्तः प्रचुरबहुमतिस्त्वच्चरित्रेषु वर्ते ॥ ४० ॥

भूयो भूयो नमामि त्वदनघचरणाम्भोरुहद्वन्द्वमेव
श्रीमन् हस्तीश निस्तीर्य च भवसरणौ जाङ्घिकत्वं प्रहृष्टः ।
वाचां प्राचां प्रवाचामपि खलु विषयस्त्वं कथं मादृशानां
प्रज्ञादौर्लभ्यभाजामहह कुवचसां गोचरत्वं प्रयासि ॥ ४१ ॥

श्रीमाञ्छ्रीमच्छठारित्रितिकलितशतस्तम्भवन्मण्टपान्ते
डोलाडोलायितात्मा मणिमयमकुटज्योतिरुद्भासिताशः ।
राजा राजाधिराजप्रमुखदिविषदां हस्तिशैलेश्वराख्यो
देवो देवो मुदे वो भवतु मम जनाः स्मेरवक्त्रारविन्दः ॥ ४२ ॥

मुक्तैश्वर्यं जगद्व्यापरणविरहितं सूत्रितं सूत्रकारै-
स्तस्येत्थं भावमाहुः किल गुरुचरणा भाष्यकारादयोऽमी ।
राज्ञां छत्रादिवत् ते करिरमण जगत्कारणत्वं विमुक्ति-
हेतुत्वं लक्षणे द्वे तदुभयवशतो लक्ष्यसेऽन्यादृशस्त्वम् ॥ ४३ ॥

मुक्तैश्वर्यं जगद्व्यापरणमपि यदि ब्रह्मणो लक्षणं तत्
भज्येतातिप्रसङ्गात् कथमिव परमं ब्रह्म जिज्ञासितुं स्यात् ।
जिज्ञास्यत्वं जगत्कारणगतमिति च स्पष्टमाम्नायमौला-
वातो मुक्तेषु हस्तिक्षितिरमण जगद्व्यापृतिर्नोचितेति ॥ ४४ ॥

युक्तं तन्मन्महे श्रीकरिरमण वयं त्वत्कटाक्षाद् विमुक्ता
ब्रह्मानन्दानुभूतिप्रकलनविषये साम्यमेते वहेयुः ।

जिज्ञास्यत्वं मुमुक्षोः कथमिव घटतां त्वं हि जिज्ञासनीयः
सर्वैस्तापत्रयार्तैस्त्वदुपजनितधीशक्तिमान् नोऽपरः स्यात् ॥ ४५ ॥

अपारे कूपारे तृणमिव तटं केनचिदितं
त्वसारे संसारे स्थिरतररुचिर्दुस्तरतरे ।
मुरारे कंसारे करिगिरिपतेऽहोबिलमुनि-
प्वहं तत्कारुण्यात् समगणिषि धन्योऽहमधुना ॥ ४६ ॥

अस्मान् रक्षतु हस्तिशैलशिखरेत्येवं तुरीयं पुनः
पादं कंचन हस्तिराडुपदिशन् स्वप्नेऽवबोध्यैव माम् ।
दीक्षां संश्रितरक्षणे प्रकटयस्युच्चैस्तरां श्रीपते
वात्सल्यैकवशंवदस्त्वमविभो नानावतारान् क्षितौ ॥ ४७ ॥

वेगातुङ्गतरङ्गसंगमदशाव्यालोलदम्भोरुह-
च्योतत्स्फीतमरन्दवृन्दलहरीपारंपरीमेदुरे ।
रोधस्युत्तरतोऽवभासि भगवन् हस्तिक्षमाभृत्पते
त्वत्सेवारसिका भवन्ति मनुजा धन्याः क्षितौ संततम् ॥ ४८ ॥

जन्तुं कृतमन्तुं भुवि नन्तुं यतमानं
रक्षस्यरिपक्षच्युतिदक्ष स्वयमीश ।
धाराधरदोराहवधीरानघमूर्ते
हस्तीश सुविस्तीर्णगुणास्तीह समः कः ॥ ४९ ॥

हस्तीश निस्तुलतरस्तुतिरत्नजाल-
मस्तीति मत्स्तुतिरियं परमास्तिकेड्य ।
नोपेक्षितुं त्वलमहो शुकभाषितादौ
संतोषमाकलयते हि महान् नृसंज्ञः ॥ ५० ॥

इत्थं सवीररघुराट्छ्रुतिमौलियोगि-
क्ष्माभृत् करिक्षितिपतेः स्तवमद्भुतार्थम् ।
प्रीत्यै हरेर्व्यतनुत प्रणिशम्य संतः
संतोषमत्र कलयन्तु गताभ्यसूयाः ॥ ५१ ॥

श्रीमद्वीररघूद्वहश्रुतिशिरोयोगिक्षमाभृत्कृतं
हस्तीशस्तवमादरात् पठति यः शुद्धो विशुद्धाशयः ।
जिह्वायामिह नानटीति सततं वाग्देवता तस्य सं-
सिध्यन्ति ह्यचिरेण किं च महिताः सर्वे पुमर्था भुवि ॥ ५२ ॥

[इति श्रीहस्तिगिरीशस्तवः समाप्तः][1]

[1] This colophon is not in the MS. but it has the salutation as: श्रीमते श्रीवीरराघववेदान्तमहादेशिकाय नमः । The following extra verses are added at the end:

अहोबिलगुहामहर्निशमुदञ्चयन्तं च ता-
मभीष्टफलमञ्जसा प्रतिदिशन् नृकण्ठीरवः ।
ददातु मलयानिलस्फुटितमल्लिकामञ्जरी-
निरर्गलविनिर्गलन्मधुझरीधुरीणं वचः ॥ १ ॥
श्रुतिशिखरनिगूढं तत्त्वमत्यद्भुताभिः
फणितिभिरनघाभिः सर्ववर्णोचिताभिः ।
सकलसुगममध्याख्यापयन् सत्त्वनिष्ठः
शठमथनमुनिर्मे भूयसे श्रेयसेऽस्तु ॥ २ ॥
कुमतिकलितमायावर्तबम्भ्रम्यमाणा
श्रुतिविततिरयासीद् यस्य भाष्येण पारम् ।
शुभगणरमणीयं ब्रह्म बाभा . . . . . . . . .

# ८१. अष्टमहिषीप्रार्थनाशतकम्[1]

## रामानुजार्यकृतम्

श्रीवेङ्कटेशदारा धीरा क्षेमस्य मे सदाधारा ।
करुणावनसंचारा तारासंकाशरत्नमयहारा ॥ १ ॥

नारायणवनजनिता नारी नारायणस्य मे माता ।
पारायणार्हचरिता त्राता पीताम्बरेण चायाता ॥ २ ॥

मातर्भूमेर्यातः प्रातः सायं नमामि तव पोतः ।
निहितं तव पदि चेतः कातः परमवितुमस्ति मां मातः ॥ ३ ॥

[1] Based on a recent transcript, No. TR 805 (D.C. No. 2418). There are some lacunas in the MS. and some of the verses are unintelligible. This Stotra is on the consorts of Lord Viṣṇu worshipped in different sacred places. The eight Devīs referred to in the Stotra are:

(1) The consorts of Lord Veṅkaṭeśvara at Tirupati (vv. 1-4, 28-91). Padmāvatī (vv. 28-91) and the Devī at Narayanavanam (v. 2) are separately mentioned.

(2) Mahādevī or Perundevī, the consort of Śri Varadarāja in Kanchipuram (vv. 5-10).

(3) Ambujavallī, the consort of Śrī Varāhamūrti at Srimushnam in South Arcot Dist. (v. 11).

(4) Amṛtavallī, the consort of Lord Nṛsiṃha of Ghaṭikācala (Sholinghur) in North Arcot Dist. (vv. 16-18).

(5) Nāmagirilakṣmī, the consort of Lord Lakṣmīnṛsiṃha at Namakkal in Salem Dist. (vv. 19-27).

(6) Rukmiṇī, the consort of Śrī Pārthasārathi in Triplicane, Madras (v. 92).

(7) Āṇḍāl or Godā, the consort of Vaṭapatraśāyin at Srivilliputtur in Ramanathapuram Dist. (v. 94).

(8) Komalavallī, the consort of Śrī Śārṅgapāṇi at Kumbhakonam (v. 95).

लसनप्रसूनवेषे प्रसु मे वसु मेऽद्य देहि हरियोषे ।
कुसुमैराभ्यां भाषे प्रासूयामां मनः स्वसंतोषे ॥ ४ ॥

काञ्चीलाञ्छितदेवीं काञ्चनदेवीं च वरदवशनीवीम् ।
वन्दे महतीं देवीं चन्द्रां दन्तावलाद्रिसुखपृथिवीम् ॥ ५ ॥

माधवसाप्तपदीने मामव गतिनिर्जितेभवति यूने ।
नवनवभवनविधाने भव भव नित्यं मदीयहृत्स्थाने ॥ ६ ॥

सज्जनरक्षणधन्यां मान्यां मन्ये सरित्पतेः कन्याम् ।
मेदिन्यां कामिन्यां गुण्यां गणयेय भूरि सुधरिण्याम् ॥ ७ ॥

करुणामधुमयचरणामरुणामरुणान्ववायपरिचरणाम् ।
करुणाविवृताभरणां सुगुणाभरणां भजामि हरिशरणाम् ॥ ८ ॥

मज्जनयित्रीं धात्रीं सज्जनपात्रीं सुदीर्घझषनेत्रीम् ।
भेजे प्रसूनगात्रीं दात्रीं पात्रीं नतस्य हरिमैत्रीम् ॥ ९ ॥

लक्ष्मीमक्षयसदयां सार्द्रसुहृदयां समुद्रहिततनयाम् ।
आश्रितरक्षणविजयामाजानीयास्यहृदयशुभनिलयाम् ॥ १० ॥

अम्बां कचलोलम्बां कम्बुग्रीवां प्रसन्नमुखबिम्बाम् ।
पदगतिजितकादम्बामम्बुजवल्लीं नमामि लोकाम्बाम् ॥ ११ ॥

सीतास्माकं माता साकेताधीश्वरीष्टिभूजाता ।
पीताम्बरपरिणीता त्राता पूताखिलेभ्य इति गीता ॥ १२ ॥

हरिपरिचर्याप्रीता भूतत्रातार्चितेति कविगीता ।
तातोपमिता माता त्राता शाताङ्गिनीह मां सीता ॥ १३ ॥

सेवितदनुजत्रिजटा पालितनिश्रीकगर्गरत्रिजटा ।
स्ववशीकृतपीतपटा प्रतिभटहरिणाय चास्तु हरिवेला ॥ १४ ॥

भाषाविनुतविशेषा भाषापतिशेषविनुतपरिभाषा ।
भूषाभिलषितभूषा भूषा भूषायमानवपुषास्तु ॥ १५ ॥

घटिकाद्रिकुशलपेटी सज्जनसंत्राणसक्तपरिपाटी ।
विलसितकाञ्चनशाटी पातु रतिभीष्टिदीनजनकोटीः ॥ १६ ॥

वैदेहि देहि वित्तं श्रीदे पादे ह लग्नमथ चित्तम् ।
कुर्यामार्यावृत्तं धार्यं नित्यं करोमि तव वृत्तम् ॥ १७ ॥

करललितकमलयुगला करिकरचामरसुजातमृद्वनिला ।
त्वरमभयं मे कमला कुरुताज्जननी करेण हरिमहिला ॥ १८ ॥

नामाचललक्ष्मि रमे मायैवाचल . . . स्वर्लोभमये ।
आश्रितरक्षाकामे स्वात्मजयुगलं च देहि हरिभामे ॥ १९ ॥

उपमानामुपमैषा भूषा भूषासु भासु मञ्जूषा ।
स्ववशीकृतादिपुरुषा सविशेषा पातुमस्तु हरियोषा ॥ २० ॥

अबलानां प्रबलासौ स्त्रीषु श्रीरुत्तमा च वामानाम् ।
रामाभिरामरामा शान्ता कान्तासु कोपनास्वेषा ॥ २१ ॥

सर्वेदसर्वेद . . . श्रीः श्रीदा श्रीदार्चिताब्जमयपादा ।
कृतजीवेश्वरभेदा निर्भेदानन्दबोधनानन्दा ॥ २२ ॥

आत्मोपमानरहिता सहिता श्रीवत्सकौस्तुभाभरणैः ।
हरिमध्या हरिवत्सा हरिपीठालंकृतास्तु हरिवाणी ॥ २३ ॥

अस्माकं या माता सा भवति पितामहस्य चित्रं तत् ।
गङ्गातनयोपास्या गङ्गाजननी हि गीतगाङ्गेया ॥ २४ ॥

हरिवत्सप्रासादा हरिवत्सप्रसादबहुलसंमोदा ।
करिवत्साञ्चितगमना करिवत्साञ्चितपदास्तु मे वरदा ॥ २५ ॥

शिरसादृतनारतता चरणादृतनारदादिमुनिजनता ।
वचसादृतशुककलिता पदपालित . . . शुकास्तु मे माता ॥ २६ ॥

गन्धर्वपूर्वललिता गन्धर्वैः किंनरैश्च बहुविनुता ।
गन्धर्ववक्त्रविनुता गन्धद्वारा च पातु मां माता ॥ २७ ॥

श्रीशुकनगरविशेषे नाशितदारिद्र्यदुःखबहुदोषे ।
श्रीश्रीनिवासभूषे स्वाशां मे पूरयस्व हरियोषे ॥ २८ ॥

दशशतकमलविकासे दिशि दिशि मातर्धनानि दातासे ।
मम हृदयगृहनिवासे शिथिला भूय . . . मद्वासे ॥ २९ ॥

विज्ञानाख्यो मनुते पूर्वो हरिरेव चेति भूदेवी ।
श्रियमथ विद्वानार्यः सादरमार्यां प्रवक्ति पूर्वे त्वाम् ॥ ३० ॥

पूर्णिमया चामायाः भासश्चित्रं तिथिद्वयं त्वयि वै ।
शिरसः परतो दर्शः तत्परतस्ते सुपूर्णिमेन्द्वास्ये ॥ ३१ ॥

चन्द्रादमृतं पिप्सुः राहुस्तं चाक्रमच्च चाहस्ये ।
मुखदृग्भूषाचन्द्रः बद्धा तं चापहन्ति गिरिमध्ये ॥ ३२ ॥

नयनं सुदर्शनं ते शाङ्गः कण्ठः फणी च तव वेणी ।
परमं पदयुगलं ते याने चरणे च पक्षिराजोऽस्ति ॥ ३३ ॥

नयनं सुभरद्वाजो धम्मिल्लो नारदश्च तव मातः ।
शुकवदमोदाशीते नानारत्ने मरीचिरपि देवी ॥ ३४ ॥

अवने शक्तिश्चास्ते वक्षोजो कुम्भसंभवो मातः ।
वल्मीकिनिभो नाभिः व्यासोऽर्भक एव नित्यमास्थाने ॥ ३५ ॥

तदिदं चित्रं मातः काञ्च्यान्तस्तेत्यहो बिलं चेति ।
नेदं पुत्रकचित्रं हरिरुभयत्रापि तत्र सर्वं स्यात् ॥ ३६ ॥

काञ्चीकुचकैलासो मातः शून्यं तवान्तरतिहासः ।
कैलासावपि काञ्चीं न विशति चेत्तं च तेऽन्तरधिकोऽयम् ॥ ३७ ॥

हरिकरकमलविलासे तव कुचसूर्यो हि देवि सुचकासे ।
हरिनयनपद्मभासे तव मुखचन्द्रं प्रकाशयत्यासे ॥ ३८ ॥

डोलीकृतवनमाला मालीकृतविधिवशाण्डमणियुगला ।
युगलीकृतहरिलीला बाला सिन्धोः प्रभातु करकमला ॥ ३९ ॥

पादग्रहणात् तातोऽमोदत चास्माकमम्ब बहुधाप्तः ।
गृह्णाम्यङ्घ्री पूर्णं तूर्णं मां मोदयस्व हरिगृहिणि ॥ ४० ॥

कृष्णः कचभारोऽधान्नयते मीनौ तवाद्य भासेते ।
हरिरम्ब मध्यमस्ते देवोऽङ्गी संबभूव चाङ्गानि ॥ ४१ ॥

तव चरणमीक्ष्य तारा अवदधुरनिशं सरोरुहाकारे ।
अवलोक्य नयनमिन्दुः तरणिं पर्यभवच्च कुमुदाक्षि ॥ ४२ ॥

नीचैर्वासविनिन्दां मोक्तुं दिङ्नागनागकावद्य ।
नाभेरुच्चैर्मातः भातः कुचयोश्च रोमराज्यां ते ॥ ४३ ॥

त्वामाश्रित्य विशेषः रोम्णा राज्यां विभाति सविशेषः ।
इति वासुकिरपि चान्यो वेणीं शिश्राय नान्यवर्धिष्णुः ॥ ४४ ॥

आकाशे काञ्च्यैका तस्यां हरिरम्ब योगिसंदृश्यः ।
मातर्धत्ते स हरिः गिरिमहिमिभमिन्दुमर्कमभ्रादीन् ॥ ४५ ॥

कुचयुगमस्तकमञ्चे दृष्ट्वा रोषातुरोऽपि हर्यक्षः ।
निजगणनामतिहीनो संनिधिमाहात्म्यतो हितेऽभूत् सः ॥ ४६ ॥

एकत्र च तरणीन्दू भूते नामा तथापि हरिगृहिणि ।
एकत्र राहुचन्द्रावुपरागो नैव चानुरागोऽभूत् ॥ ४७ ॥

कमले चन्द्रोत्पत्तिः चन्द्रादुच्चैश्च भाति चन्द्रोऽन्यः ।
चन्द्रद्वयभीतः सन् राहुर्नीचैः प्रयाति पश्चान्मे ॥ ४८ ॥

तव भुजगविहगराजौ शयने याने सदा प्रथाभाजौ ।
भवतां स तयोर्मातः शेषो वेषे विशेषभाषासीत् ॥ ४९ ॥

धन्यं कुरु मां मान्ये धन्येवासे समुद्रहितकन्ये ।
मान्ये लोकवरेण्ये धन्याय त्वां धिनायकां मन्ये ॥ ५० ॥

हरिनखभीतौ करिणावन्तर्ध्यायेव कञ्चुके त्रासि ।
जननीवैरिरिरक्षा पत्या घृणया बभूव किं पद्मे ॥ ५१ ॥

शिवपदयुगलाच्छ्रेष्ठं विधिपददशकं च मातरालेषु ।
बहुधनदपुराण्यन्ये विष्णोः पदमेकमेव पतिवत्ते ॥ ५२ ॥

उपनयनं तव भक्तिः उपदेष्टा तव पतिश्च मे मातः ।
उपदिष्टं नाम च ते भवति सुभिक्षां प्रदेहि वैदेहि ॥ ५३ ॥

तव भक्त्या मन्तूक्तिः भवतु च मातस्त्वयैव किल भुक्तिः ।
गेहे मुख्या गृहिणी विख्यातिश्चास्य एव गृहमुख्यः ॥ ५४ ॥

मातः सागरकन्ये तव ननु वक्त्रं सुधांशुरिति मन्ये ।
सत्यस्त्वेषस्तर्कः नो चेत् का स्यात् विधावलोकेच्छा ॥ ५५ ॥

तव संनिधिमाहात्म्याद्वेष्यो न त्विष्ट एव ते देवि ।
नयनाब्जे मुखचन्द्रे सिंहादुच्चैः प्रभात इव मस्तौ ॥ ५६ ॥

मातस्तव माहात्म्यादुच्चैर्नीचैश्च भासमानेभौ ।
विक्रान्तौ तौ दृष्ट्वा मृगपतिमृग्यः स एव मूढोऽभूत् ॥ ५७ ॥

कान्तस्ते परमात्मानन्तस्तल्पस्त्रयीमयो यानम् ।
अमरा नित्या भृत्याः सत्यं पुत्रोऽस्मि यवनिका माया ॥ ५८ ॥

जक्षत् क्रीडन् श्रुत्या रक्षितुमेवाम्ब रहसि कान्तेन ।
जित्वा पुरुषं स्ववशं कृत्वा नस्तेन पालयसि चाम्ब ॥ ५९ ॥

सपदि जटायोर्मोक्षः त्वत्तः पत्युः सुकन्धरे पक्षः ।
सा मापितरि कटाक्षः त्वत्तो भर्ता बभूव बहुदक्षः ॥ ६० ॥

वीरः किल तव भर्ता विश्वस्मिन् यत्र यत्र यातासे ।
वारः किल तव पाता चिन्ता नारायणे हि किमु न स्यात् ॥ ६१ ॥

श्यामा वा हरिणी त्वं ह्यचलातनयापि चञ्चलासि त्वम् ।
जननी मारस्य स्याः सुकुमारेभ्यश्च नौमि मातस्त्वाम् ॥ ६२ ॥

कविजननुतचरणा वा गुरुजननुतपादुकैव मे मातः ।
पुण्यजनैर्नुतचरिता पुण्यजनध्वंसिनीह भूर्मातः ॥ ६३ ॥

अलकालंकृतवदना ह्यलकेशालंकृताब्जमृदुचरणा ।
पुलकाङ्कितसंहनना फलकालं नित्यमेव कुरुतां मे ॥ ६४ ॥

शतधृतिशतमतिविनुते शतमखमुखविनुतललितबहुवसते ।
अतुलितशतक्रतिफलिते गतिरिह भवतीति मे मनो मनुते ॥ ६५ ॥

श्रीशैलजघनभागा श्रीरेफालंकृतोत्तमाङ्गा हि ।
अस्ताचलमध्यस्था चक्षोः सौदर्शनास्तु मां पातुम् ॥ ६६ ॥

हरिवत्सेच्छा वा स्यात् करिवत्सेच्छेति देवि कविगीते ।
हरिवत्सेच्छा वा स्यात् मां करिवरदो यथा तथा पाहि ॥ ६७ ॥

रिपुशरपीडां भर्तुः वारितुमेवास उरसि तत्पूर्वा ।
मम पुत्रस्य हि महिते पूर्वस्था वारयाम्ब वर . . . ॥ ६८ ॥

एकस्यां व्यक्तौ ते बहुवचनं नित्यपुंस्त्वमासाते ।
स्वातन्त्र्यं बहुतत्त्वे किं न स्यान्ननु न युज्यते हरिदाराः ॥ ६९ ॥

को वा का वा पुरतः न वदति तव नाम न स्मरत्यम्ब ।
सर्वत्र च भवदीयं शिरसा नतिरस्ति कुत्र वा देवि ॥ ७० ॥

इभ्यं सभ्यं कुरु मामद्भिः प्रक्षालयामि तव पादौ ।
लभ्यं कुरु मे सौख्यं विख्याते दीनपोषणे देवि ॥ ७१ ॥

पूर्वं वित्तं दत्त्वा पूजां तेनैव कारयस्वाम्ब ।
धनसुतहितभूलाभं दत्त्वैवाग्रे विधेहि तव भक्तम् ॥ ७२ ॥

तव चरितं मम विहितं सुकृताल्लब्धं हि मातराढ्यासि ।
मूढं श्रीदं कुरु मां बाढं करवाणि तेऽद्य परिचर्याम् ॥ ७३ ॥

विधिना ममैव सिद्धिः यदि ते कृपया किमस्ति मे मातः ।
तव वा तव पत्युर्वा स्वातन्त्र्येणैकमेकमैश्वर्यात् ॥ ७४ ॥

पृथुका दत्तकुचेलाः रुच्याः के ते च पत्युरपि चास्याः ।
तस्मादिव मत्तस्त्वं किं वा नाभ्यवजहश्च मातस्त्वम् ॥ ७५ ॥

आराद्धासि च येन प्रथमः पैतामहश्च मुनिराट् सः ।
तं भारद्वाजं वा बहुमानेनावलोक्य मां पाहि ॥ ७६ ॥

पापादिवध्यविषये करुणा कार्या नु तेऽतिमृदुवचनम् ।
ऊचिथ मारुतये त्वं व्यस्मार्षीः किं तदुक्तमधिकं मे ॥ ७७ ॥

प्रत्यक्षं कार्यं मे दातुं शक्नोषि न यदि मे मातः ।
मोक्षं वा दाता चेत् करुणाजनिता तवेति मन्वीय ॥ ७८ ॥

नार्थितुमपि शक्नोमि स्मर्तुं स्तोतुं च नार्हं इह भवतीम् ।
पूर्णां भुक्तिं शक्तिं दत्त्वासक्तिं च देहि पदभक्तिम् ॥ ७९ ॥

निद्रालुर्जनको मे ग्रहयालुर्मयि सदा स्वपतयालुः ।
स्पृहयालुः श्रद्धालुः मद्रक्षायै सदापि भव मातः ॥ ८० ॥

ध्यायेमहि महियातः यातः पूर्वं परं च जननीं त्वाम् ।
पूयेमहि वयमधुना गेयेऽमेये त्वदीयभजनेन ॥ ८१ ॥

दित्सादित्साकुत्सैः कुत्सितवैरैः कुमारजननीभिः ।
उत्सवहीनैः किं वा चोत्साहय मेऽद्य किं चान्यैः ॥ ८२ ॥

प्रत्यक्षमात्रवार्ते चार्वाके मध्यगोद्यदास्तिक्यम् ।
त्वमपि च न प्रत्यक्षः वक्ति हरिस्त्वयि तथा हि सिद्धान्ते ॥ ८३ ॥

अद्वैतान्वारम्भौ ववृधाते तव कुचौ च हे मातः ।
सिद्धान्ते द्वैतविधौ सूत्राण्यवलोक्य तत् तथाभूताम् ॥ ८४ ॥

कमलं विकासयेद्यो ह्यर्कं तं तर्कयन्ति तर्कज्ञाः ।
गुरुकुचकमलेन च ते हरिनेत्रार्कें विकास ऊहैः किम् ॥ ८५ ॥

पादस्त्रयीमयस्ते वेदाः कामाश्रयन्ति मे मातः ।
भर्ता त्रिविक्रमस्ते स जटी वा स्याद्धनाश्च ते केशाः ॥ ८६ ॥

कति कवयः कति गुरवः कति मन्दाः कति बुधाश्च राजानः ।
कति भीमा अदितिसुताः शिश्रूयूरङ्घ्रि . . गणकैः का ॥ ८७ ॥

सगुणं निर्गुणमिति वा तव वाचा निश्चिनोमि भो मातः ।
वाग्भिः किं पुत्रक मे जनकं कान्तं च पश्य सुगुणं मे ॥ ८८ ॥

आरोग्यकारिणि . . . स्त्रोषधिनाथाः कटाक्षकामास्ते ।
अमृताब्धेस्त्वां तनयां लब्ध्वा किं . . . जाता ॥ ८९ ॥

अनिलजनुतपदकमलां सलिलधि . . . हर्यबलाम् ।
करुणातरङ्गशालां काञ्चनमहिलां कटाक्षसुविशालाम् ॥ ९० ॥

गजराजराजिललितामजशतसुतहेमपादुकाम्भोजाम् ।
सज्जनकृतबहुपूजां वाजिग्रीवप्रभातमुखभाजाम् ॥ ९१ ॥

अर्जुनसारथिमहिषी दुर्जननिर्मूलनेऽस्तु विदितकृषिः ।
सज्जनपालनविदुषी निर्जरदेवी च निगममञ्जूषा ॥ ९२ ॥

आकाशराजतनये चाकाशाकारमध्यमप्रलये ।
पाकारीडितनिलये मातस्त्वां नौमि देहि संततये ॥ ९३ ॥

अनुभुक्तमालिकादौ श्रीदा मातावनेऽस्तु मे गोदा ।
धनुनगरसुप्रसादा हेमन्तव्रततिशेषसंमोदा ॥ ९४ ॥

शार्ङ्गकरकल्पवल्लीं कोमलवल्लीं भजे सुधावल्लीम् ।
शार्ङ्गश्रीभ्रूवल्लीं स्तौमि च नित्यं प्रमाणपदवल्लीम् ॥ ९५ ॥

आश्रिततापद्रवितां राघववनितां नमामि मृदुकलताम् ।
आश्रितशीर्षाभरणां नायकमणिभामतुल्यदिव्याङ्गीम् ॥ ९६ ॥

अरणीतटिनीतोषा धरणीदेवी कुमारिकावेषा ।
करिणी पुष्करिणीशा जननी मां पातु भूरिहरियोषा ॥ ९७ ॥

मामपि कुरु तव तनयं त्वामथ तत्त्वेन नौम्यहं सनयम् ।
यामि च कृपया विजयं भूमिसुते देहि भद्रसमुदायम् ॥ ९८ ॥

पवनजपूजालोलामवनिजनत्राणविहितहरिलीलाम् ।
दुर्भूतदमनकालाममृतां वल्लीं भजामि मणिमालाम् ॥ ९९ ॥

प्रणमति कस्तव पादं धनपतिरपि भवति देवि निष्खेदम् ।
प्रपठति कस्तव वेदं स भवति भुवि याति मातरामोदम् ॥ १०० ॥

आत्रेयगोत्रजनिना कथितं रामानुजार्यविदुषेदम् ।
अङ्गीकुर्वन्त्वार्याः कृपया श्रीवेङ्कटेशदाराश्च ॥ १०१ ॥

इति श्री-अष्टमहिषीप्रार्थनाशतकं समाप्तम्

## ८२. इन्दिराशतकम्[1]

### (निरोष्ठ्यम्)

कृष्णकविप्रणीतम

[2]अथ निरोष्ठ्यपदैर्ललितामिमां कलशसिन्धुसुताविभवोदयाम् ।
कलयितुं कविकृष्ण इह स्तुतिं कलयते हृदि तां हरिनायिकाम् ॥

[3]जयति सा जलधेस्तनया दयाकलितनित्यचराचररक्षणा ।
सहचरी च हरेर्ललितक्रिया लसितदैत्यनिहन्तृहृदन्तरा ॥ १ ॥

जयति निखिलनाकित्राणदत्तैकदृष्टि-
हृतनतजनदैन्या कीर्तिता जानकीति ।
सरसिजनिलया सा सादरा सारसाक्षी
त्रिजगदहितहारिध्यानधाराग्र्यहारा ॥ २ ॥

दिनेशसंतत्यधिनेतृकृत्तनिशाचरेशाननशिरा धरण्याः ।
आखण्डलाद्यैरखिलैश्च कल्या कन्यार्यगण्या रथहस्तिधन्या ॥ ३ ॥

नाकालयाहारकृते नदीशे धराधराधःस्थलसंनिकृष्टे ।
जातास्ततस्तत्र रसार्द्रचेताः सा श्रीर्जगत्त्राणकृतात्तनाथा ॥ ४ ॥

[1] Edited from the single MS. TR 808 (D. C. No. 2419). The scribe has it both on the title page and first page: कुट्टिकविनाम्ना प्रसिद्धेन कृष्णकविना प्रणीतं निरोष्ठ्यम् इन्दिराशतकम ।

[2] The following lines are added before the first verse: उकारौकारादिभिरप्यक्षरैरगुम्भितम् । अत एव नितरां दुर्घटम् । तत्र इष्टदेवतास्तुतिः निरोष्ठ्यश्लोकेतरा—

[3] The MS. adds before this: अथ निरोष्ठ्यं श्लोकशतकं प्रारभ्यते—

सारासारकलादेर्जनयित्री सरसगाधया कीर्त्या ।
धीराग्रगण्यदशरथतनयेनैषा कृताखिलश्रेयः ॥ ५ ॥

सहृदयहृद्याराध्या सा यस्या नायकः ख्यातः ।
नेतार्कसंततेर्यस्त्राता जगतश्चराचरेशश्च ॥ ६ ॥

करकलितसरसिजश्रीः सरसिजनिलया च सारसाक्षी या ।
करदानकृतश्रेयःसंततिरेषा चकास्ति सद्धृदये ॥ ७ ॥

नागेशयस्य सा कान्ता नाकिनाथार्चनादृता ।
दासहृत्सरसीजातनिलया रक्षणार्थिनी ॥ ८ ॥

सरसा दयया हि सारसाक्षी कृतसंतानकलार्तिहारिणी या ।
निजनाथकरस्थसायकालीहतनाकारिरिहार्यधारणार्हा ॥ ९ ॥

तरङ्गिणीनायककन्यकायाः कटाक्षधाट्या कलितश्रियस्ते ।
हरेश्च कैंकर्यनिरन्तराशा राजन्ति काले निहतारिसंघाः ॥ १० ॥

रणजितरजनीचरेशसेना निखिलजगज्जननी तथा हि जज्ञे ।
सरसिजनिल्या धरार्यकन्या दिनकरसंततिनेतृनित्यदाराः ॥ ११ ॥

निजकटाक्षझरीकलिताखिलक्षयजरादिररातिकृतान्तका ।
त्रिदशनाथकृतार्चनया जगज्जयकरी किल सा हरिनायिका ॥ १२ ॥

साकेतनेतृदयिता सैषा सीतेति कीर्तिता ।
किरीटादिलसद्देहा जगदार्तिहरी किल ॥ १३ ॥

नीलनीरदसंकाशकेशा दाशरथेर्हरेः ।
कर्णान्तायतनेत्रान्ता कान्तार्तजनरक्षिणी ॥ १४ ॥

काङ्क्षिताधिकदानेन ख्याता सा धरणीतले ।
अनादिनिधिरेषा नः श्रेयःसंतानदायिनी ॥ १५ ॥

दिनेशतनयागङ्गासह्यजादितटीतले ।
सा श्रीः कलितसांनिध्या जयदा राजते किल ॥ १६ ॥

काङ्क्षिताधिकदायिन्या सीतया हितया तया ।
कृतार्थानीह कार्याणि सनाथाश्च कृता नराः ॥ १७ ॥

शरणागतार्तिहरणा येषा जननीह सह्यजातीरे ।
सहृदयहृदयाराध्या जयति खगेशानधार्यनिजचरणा ॥ १८ ॥

कलिन्दनन्दिनीतीरे नन्दनन्दनलीलया ।
ननन्द येन्दिरानन्दकलिन्दश्रीरिहैधते ॥ १९ ॥

गीताचार्यस्य दयिता या गीता किंनरीगणैः ।
सा हि श्रीरिन्दिरा दास्यश्रीकरी हरिनन्दिनी ॥ २० ॥

हरेः सा नित्यकल्याणदायिनी जननी च नः ।
तरङ्गयति या श्रेयश्चराचरहितैषिणी ॥ २१ ॥

नारायणस्य कान्ता सारार्द्रहृदन्तरे कलितकेलिः ।
हरिणनयना च काले करिणार्चितनैजचरणनलिना च ॥ २२ ॥

निरीक्षिता तया काले हरिणाक्ष्या धरा हि या ।
निधयस्तत्र नाकेशलाल्या राजन्ति तत्क्षणात् ॥ २३ ॥

शारदसरसिजनयना नारदकलगीतिगेयचरिता च ।
सारदधरणेस्तनया सारदधीस्तारकारिनतिकल्या ॥ २४ ॥

शिथिलितकलिहानिः सागरेन्द्रस्य कन्या
दशशतनयनाद्यैरादरादर्चनीया ।
जनयति तनयादीनादरेणार्यहृद्या-
नखिलचिदचिदादित्राणनादत्तदीक्षा ॥ २५ ॥

सा सागरेन्द्रतनया दाशार्हहृदि स्थिरासना जननी ।
नासारत्नघृणीडितकासारजसदृशनेत्रा या ॥ २६ ॥

नारायणस्य गृहिणी तारासंकाशहारललितगला ।
आराधनार्हचरणा सारार्थज्ञानदायिनी जननी ॥ २७ ॥

सज्जनरक्षणधन्या कन्या सा सागरस्य कृतधन्या ।
तन्यादनितरकन्यादानादिश्रेय आदरादिह नः ॥ २८ ॥

हरिहृदयान्तःशरणा शरणागतसज्जनालिनतचरणा ।
सति कलितादरणा सा जयतीह तले सदादृताचरणा ॥ २९ ॥

सज्जनैरादृतानीह धनानि नयते क्षणात् ।
धरणीतनया सैषा नानादेशगतार्थिनः ॥ ३० ॥

सदादृता सदाराध्या सदानन्दासनस्थिता ।
कदा हि कलयेन्नैजकटाक्षलहरीरिह ॥ ३१ ॥

तिलकालंकृता ह्येषानिलजातकृतादरा ।
धरायास्तनया ख्याता जानकीति धरातले ॥ ३२ ॥

दद्यादद्य श्रेयः किरीटहारादिलसितनिजदेहा ।
जलनिधिकन्या धन्या यत्स्थाननतिक्षतारिकलिकाश्यर्याः ॥ ३३ ॥

आख्याता दिशि सैषा श्रेयःसंतानशाखिलतिकेति ।
नतनाकिशीर्षरत्नाहृतनिजनीराजनक्रिया जयति ॥ ३४ ॥

हासश्रिया लसितनैजशरीरयष्टिरिन्द्रादिनाकिगणदत्तसदादरादिः ।
कीलालराशितनया जयतीह दत्तदानादिरार्यगणगेयनिजार्ययात्रा ॥ ३५ ॥

यातायातादिखेदादिशान्तिदाराधिता सती ।
त्रिजगज्जननी जीयादिहाचार्यगणेडिता ॥ ३६ ॥

ययाराधितयानाथाः नाथकार्याश्च निश्चिताः ।
जननी सा जनत्राणयागदीक्षादिरेधते ॥ ३७ ॥

कृतकृष्णकेलिरेषा सृजति कटाक्षान् हि यत्र धरणितले ।
गजगण्डनिर्यदलिगणगाना तस्य स्थलीगृहस्यारात् ॥ ३८ ॥

अगतीन् सहसा निरीक्ष्य काले जननी सा हि कटाक्षकान्तिसारैः ।
हसितत्रिदशेन्द्रकीर्तिखण्डान्निजनाथाङ्घ्रिशरण्यकानतानीत् ॥ ३९ ॥

नारायणस्य कान्ता नाकालयलाल्यचरणनलिना सा ।
सद्धृदयकलितनिलया निरसितकलिकालजातकार्श्यादिः ॥ ४० ॥

कृशकरणादरणाङ्का हरिणाङ्काहृतनिजास्यधृणिनिचया ।
सरसा दयया सैषा चाह्लादकरी च सति नते नित्या ॥ ४१ ॥

सरसिजासनशंकरशारदाधरणिधृत्तनयादिनतीडिता ।
कलितनित्यगृहस्थितिरेधते धृतदया च हरेर्हृदयान्तरे ॥ ४२ ॥

सा राजति हरेः कान्ता या राजादिकृतादरा ।
धीराराध्या च सरसा धीरादिहितदायिनी ॥ ४३ ॥

रतिनायकदायादा गतिरेषा सनातनी ।
यतिध्यानार्हचरिता नतिकृत्कलिनाशिनी ॥ ४४ ॥

धाराधरसट्टङ्नैजकचकान्तिझरी हरेः ।
कान्ता जयति कल्याणी श्रेयःसंततिदायिनी ॥ ४५ ॥

तनया जलधेः कलाधिनेतृग्रथितानेककलादिहृष्टचेताः ।
सनयान् तनयादिना सनाथानिह कालेन नतान् हि साधयन्ती ॥ ४६ ॥

अनन्तशक्तेर्लीलादिसाक्षिणी जयदायिनी ।
जज्ञे धरणिकन्या सा दीनत्राणकृतादरा ॥ ४७ ॥

आञ्जनेयादरानीतनाथरत्ननिरीक्षणात् ।
सा सीता कलितानन्दारातिसंघाहितैषिणी ॥ ४८ ॥

निरसितनिष्किंचनजनदैन्या कन्या हि सागरेन्द्रस्य ।
तन्यादद्य श्रेयः संन्यासादृतकटाक्षकञ्जश्रीः ॥ ४९ ॥

शेषशायिदयिते दयानिधे श्रीरशेषजनरक्षणादरे ।
राजसे जगति रङ्गनायिका सह्यजासलिलशीतले स्थले ॥ ५० ॥

साङ्गशरणागतालेस्त्रायिणि रङ्गेशनायिके जननि ।
दैन्यादिरत्र न हि न तत्र निदाने हि ते दयासारः ॥ ५१ ॥

आदृतकाञ्चनशाटी कृतनतिजनगेयनैजगीर्धाटी ।
आनन्दादृतचेटी राजति हरिनायिका . . टी ॥ ५२ ॥

कृष्णेन येन दयिताकाङ्क्षितदानादरेण नाकितलात् ।
शाखी संन्यस्तः किल धरातले स श्रिया लसति रङ्गे ॥ ५३ ॥

कालियनागनियन्ता कलशनदीशानकन्यकानेता ।
काले काले जनयति नः श्रीरखिलार्थिदैन्यहारिदृशा ॥ ५४ ॥

आश्रितरक्षणधीरा धीराराध्या च सद्गुणाधारा ।
धाराकलितश्रेयः सा राजति सागरेन्द्रतनया नः ॥ ५५ ॥

धीराग्रगण्यदशरथतनयेरितशतसहस्रशरनिकरैः ।
दलिता राक्षससेनासंख्येया जननि सा हि लङ्का च ॥ ५६ ॥

चैद्याद्या दैतेया निहताः कालेन तेन कृष्णेन ।
तेन जगत्या जननि श्रेयःसन्तानलतिकया हि तया ॥ ५७ ॥

हरिणा तेन नृहरिणा कालेन तथा हिरण्यकस्तेन ।
कान्तेनाकलि कलिताह्लादः स च तनयदैन्यहारिदृशा ॥ ५८ ॥

श्रियः श्रियाराधितया सकलाश्च कलास्तथा ।
रसा च सारसासारा ललना ललितक्रियाः ॥ ५९ ॥

शर्कराक्षीरादिसदृग्रसा च सरला च गीः ।
तनयाद्याश्च येऽनिन्द्यास्तन्यन्ते धरणीतले ॥ ६० ॥

तया हि हितदायिन्या सीतयादृतजातया ।
ध्यानार्हया सनाथास्ते दयाहृदयया जनाः ॥ ६१ ॥

धराधरधरः कृष्णः कालिन्दीतटकेलिकः ।
नाकिनाथनताङ्घ्रिश्च यस्या नेता च गीयते ॥ ६२ ॥

अष्टदिङ्नायकाराध्या नष्टराज्यादिदायिनी ।
सृष्टिस्थित्यधिनेत्री सा साष्टाङ्गनतिरक्षिणी ॥ ६३ ॥

सदर्हणादिलसिता सान्नदानादिदायिनी ।
सत्संघत्राणजनिता सा सीता सारसासना ॥ ६४ ॥

शान्ताराधितया काले तान्तयारण्यचारतः ।
कान्तया हि हरेः काले सान्तका न नराः कृताः ॥ ६५ ॥

आदरेण कलितार्चनश्च यस्तस्य तस्य नगरी गरीयसी ।
सागरेन्द्रतनयादृशा श्रियः सादरेण कलिदृष्टिहारिणी ॥ ६६ ॥

सृष्टिस्थितिलयादेर्यः कर्ता नाथ इतीरितः ।
सा श्रीः सहचरी तस्य ख्याता सीतादिना सदा ॥ ६७ ॥

सा धारणीयचरिता ताथागतनिरासिना ।
नाथार्हकेलिर्जयति गाधा श्रेणीकृदीडिता ॥ ६८ ॥

जरादिहानिदा सेन्धे धराधरगणेडिता ।
निराकृतार्तिर्जननी कराकलितसारसा ॥ ६९ ॥

सीराकृष्टस्थले जाता धीराराध्यस्य नायिका ।
सारार्थकृद्दयासारा नारायणसहासना ॥ ७० ॥

तारनाथादृतास्यैषा सारधीसद्गुणार्चिता ।
या रक्षणे धृतदया सारक्षेत्रादिदायिनी ॥ ७१ ॥

निजनाथशस्त्रदलितारिचया जनकाधिराजतनया जननी ।
कलितश्रिया हि निजया हि दृशा जनताहिताय किल रङ्गतले ॥ ७२

रङ्गतलकलितकेलिः सज्जनरक्षादरेण कल्याणी ।
निजकरकिसलयकलितानन्तशयाङ्घ्रिश्च राजते जननी ॥ ७३ ॥

कलशसागरकन्यकया तया जगति सज्जनरक्षणदीक्षितः ।
कलितरङ्गगृहे हरिरेधते करकृतादरशङ्खरथाङ्गकः ॥ ७४ ॥

दिशि दिशि धनधारा दैत्यजिन्नित्यदाराः
कृतनतिजनधीराराधिता जातसारा ।
कलितगगनचारा काशते रत्नहारा
निरसितजनिनारा सत्कृतानन्दसारा ॥ ७५ ॥

धनतरशशिहारा श्रेयसः सा हि धारा
दिनकरशशिनेत्रा रक्षितानेकयात्रा ।
निरसितकलिकाला नाथकृष्णार्हलीला
कनति कनकचेला दीनरक्षैकशीला ॥ ७६ ॥

अनादिनिधिरेषा नः श्रेयसे जयशालिनी ।
कंजालया कृष्णदारा जननी कलिहारिणी ॥ ७७ ॥

चिरकालार्चिता धन्यैर्धरणीतनया हि नः ।
काङ्क्षितानि ददात्येषा कंजायतदृशः श्रिया ॥ ७८ ॥

नालीकिनीनाथजनायकेन यदर्थिना किंनरगेयकीर्त्या ।
लङ्का हता सा शरराशिदग्धा सा जानकी रक्षितसद्गणा हि ॥ ७९ ॥

सारङ्गाक्षी सरसिजकरा सागरेन्द्रस्य कन्या
सारासाराधिगतधिषणैः सन्नता संनताङ्गी ।
सीता ख्याता सदयहृदया सादरा साधयन्ती
सैषा श्रेयः सकलजगतीसद्गतीर्दर्शयन्ती ॥ ८० ॥

कल्याणी सा कलशजलधेः कन्यका क्लेशहन्त्री
काले काले कृतनतिहिता काङ्क्षिताधिक्यदात्री ।

कान्तारान्तः कलितचरणा किंनरीगीतकीर्तिः
कृष्णाकृष्टा कनकसरितः सैकते कान्तकेलिः ॥ ८१ ॥

रासक्रीडारसिकदयिता रङ्गगेहान्तरस्था
राजश्रेणीललितशिरसां रत्नीराजिताङ्घ्रिः ।
राजत्येषा ललितनगरीराजधान्यादिदात्री
राकाचन्द्रादृतजलधिजा राजते राजतेजाः ॥ ८२ ॥

जननीनिरीक्षिता ये ते सरसिजनेत्ररक्षिताः कलिताः ।
तन्नः श्रेयःश्रेणीजयादिततये सदा लसति ॥ ८३ ॥

कलितागःशतनिचये जने नते ते दयासारः ।
कृतरक्षणधाटी स्यादिति निश्चित्यादरेण जननि जनाः ॥ ८४ ॥

या शीतकिरणसहजा सा नस्त्राणाय कलितदीक्षा हि ।
निरसितकृतान्तकिंकरदृष्टय एते जनाः काले ॥ ८५ ॥

कलयति जलनिधिकन्या गङ्गासह्याद्रिजादितटसङ्गा ।
श्रेयःसकलार्थिहिता यस्याश्चरणस्थलानि कलितानि ॥ ८६ ॥

ज्ञानघना सा जननी कन्दलयति सारसारसश्रेयः ।
चन्दनलतया कनकजलतयारादादरात् कृतिके ॥ ८७ ॥

दयया शीतलहृदया सारसहस्ता च लसति जननी नः ।
रक्षितसत्संघारान्नाकिगणार्च्याङ्घ्रिसरसिजा काले ॥ ८८ ॥

रक्षितरसिकगणैषा किसलयचरणा हि जयति जननी नः ।
कीरगणकश्यगीरिह सकले शास्त्रार्थसंचये लसिता ॥ ८९ ॥

आदृतसत्सत्कारा नाथहितानाथरक्षणैकदृशा ।
कलयति नैजदृशा किल नः श्रेयः कलिनिरासकृतधाटी ॥ ९० ॥

जननी कलङ्करहितानना घनश्रीः सदा लसति रङ्गे ।
रसघननिजास्यसरसिजगीरेषा सत्यसंधाना ॥ ९१ ॥

केकानादे कनककदलीकाण्डनीलान्तराले
कंजाक्षी सा कनकसरितः केलिगेहान्तरस्था ।
कान्तक्रीडाकलितहृदया रक्षणे दत्तकेलिः
कल्हारश्रीकरकिसलया कज्जलाक्तायताक्षी ॥ ९२ ॥

चन्द्रकलाचन्दनरसघनसाराद्यैः सदृग्गिरा जननी ।
जनयति रक्षादायिन्येषा कंजाक्षहृद्यनिजकलनाः ॥ ९३ ॥

जितसारङ्गाक्षी सा या रङ्गाक्षीडिता च रङ्गतले ।
कलयति दानानि हि नः काले काले च कृष्णजलदेन ॥ ९४ ॥

अञ्जनाद्रीशकेल्या यादृतचित्ता सनातनी ।
निरञ्जनजनैरेषाराधिता हि चिराय सा ॥ ९५ ॥

नाकेशनगरीकान्तालाल्यनैजाङ्घ्रिसारसा ।
जननी चन्द्रसहजा सा रङ्गादितटे स्थिरा ॥ ९६ ॥

राजति हरिहृदये सा कलितत्राणा कृतागसि जने हि ।
यल्लीलारसधाट्याकृष्टकृदिन्धे स रङ्गेशः ॥ ९७ ॥

अतिशयितनैजदाना सा श्रीरानन्दकन्दलश्रीर्हि ।
जननी रक्षितधरणी निरसितदेहीति गीरिहार्येड्या ॥ ९८ ॥

नतकाङ्क्षितदानकलाकलिताद्दृतगेयकीर्तिकलिका सा ।
राजति रङ्गेशगृहे सनातनी संनिधिः श्रीर्हि ॥ ९९ ॥

निरसिताधरसङ्गनिजाक्षरग्रथितया ह्यनया हरिनायिका ।
जयति सा धृतहर्षणसंततिः कृतधनादिरिहाद्दृतसद्गुणा ॥ १०० ॥

इति निरोष्ठ्यपदैर्ललितामिमां स्तुतिमुदारमतिः कृतकौतुकः ।
जयति कृष्णकविः कमलापदाम्बुजयुगे कलयन् सफलक्रियः ॥ १०१

इति निरोष्ठ्यमिन्दिराशतकं समाप्तम्

## ८३. कमलात्रिशती[1]

गङ्गाधरमखिविरचिता ।

परमाभरणं विष्णोर्वक्षसि सा सागरेन्द्रवरपुत्री ।
या मूर्तिमती काले क्षमा जनानां कृतापराधानाम् ॥ १ ॥

सा नः श्रेयो दद्यात् कमला कमलासनादिजननीं याम् ।
संप्राप्य सहचरीं किल हरिरवति जगन्त्यनाकुलं सततम् ॥ २ ॥

[1] Based on a modern transcript, TR 803 (D. C. No. 2424), made in 1932. Two more Stotra-s of this author are found in the same MS.; the *Ambikātriśatī* is published in the first volume of the *Stotrasamuccaya*, pp. 31-61 and for the other, i.e. *Śāradātriśatī*, see below.

नित्यश्रेयोदाने ख्याता या हरिगृहस्य सर्वस्वम् ।
श्रुतिमौलिस्तुतविभवा सा भातु पुरः सदास्माकम् ॥ ३ ॥

विष्णुक्रीडालोला विख्याता दीनरक्षणे लक्ष्मीः ।
जननी नः स्फुरतु सदा तेन वयं किल कृतार्थाः स्मः ॥ ४ ॥

निर्वाणाङ्कुरजननी काले सा सार्वभौमपददोग्ध्री ।
निरसितमोहसमूहा मम दैवतमादृतं गुरुभिः ॥ ५ ॥

विष्णोर्वक्षसि लसिता शीतमयूखस्य सोदरी कमला ।
कमलायतनयना नः पातु सदा पापराशिभ्यः ॥ ६ ॥

कविपरिषदा च वेदैः नित्यं स्तुतनिजमहोदया कमला ।
मनसि मम संनिधत्तां त्वमितानन्दाय लोकनाथेन ॥ ७ ॥

दुग्धोदधितनया सा दुरितनिहन्त्री कृतप्रणामानाम् ।
आनन्दपदविधात्री पत्या साकं पदे पदे लोके ॥ ८ ॥

मन्मथजननी सा मामवतु सरोजा(क्ष)गेहिनी कमला ।
यामाराध्य बुधेन्द्रा विशन्ति परमं तु तत् पदं विष्णोः ॥ ९ ॥

सत्सूक्तिकृतिविधात्री नमतामम्बा त्रिलोक्यास्तु ।
नित्यप्रसादभूम्ना रक्षति मामादरात् कमला ॥ १० ॥

मम सूक्तिरञ्जलिपुटः प्रणतिश्चानेकसंख्याका ।
कुतुकात् क्षीरोदसुताममितानन्दाय गाहते कमलाम् ॥ ११ ॥

या पारमार्थ्यसरणिः सा कमला निश्चिता वेदैः ।
सैषा हि जगन्माता संसृतितापापहन्त्री च ॥ १२ ॥

मन्दस्मितमधुराननममन्दसंतोषदायि भजतां तत् ।
कमलारूपं तेजो विभातु नित्यं मदीयहृत्कमले ॥ १३ ॥

काले क्षपयति कमला कटाक्षधाराख्या हि मामकं दुरितम् ।
अत एवाश्रितरक्षणदीक्षेत्येवं जनो वदति ॥ १४ ॥

नवनवहर्म्यविधात्री नाकिकिरीटार्चिता च सा देवी ।
ज्योतिर्मण्डललसिता मुनिहृदयाब्जासना च सद्गतिदा ॥ १५ ॥

संवीक्ष्य जलधितनयां भूयो भूयः प्रणम्य भक्तगणः ।
निरसितदुरितौघः सन् स्तौति मुदा मोक्षसिद्धये कमलाम् ॥ १६ ॥

राकानिशीव देव्यां दृष्टायां भक्तगणवाणी ।
भजते जलनिधिशैलीं साङ्गोपाङ्गं कृतानन्दा ॥ १७ ॥

दुर्गतिभीत्या खिन्नः सोऽहं शरणं भजामि तां कमलाम् ।
शरणार्थिनां हि रक्षाकृदिति ख्याता हि या लोके ॥ १८ ॥

न हि कलयते हृदन्ते मन्दारं कामधेनुं वा ।
यः सेवते मुकुन्दप्रियां श्रियं नित्यभावेन ॥ १९ ॥

कैटभमर्दनमहिषीं ममाञ्जलिर्गाहतां काले ।
न हि नाथनीयमत्र क्षमातले सा प्रसन्नास्तु ॥ २० ॥

संतापपीडितं मामवतु सदा श्रीर्हरिप्रिया माता ।
रक्षितवायसमुख्या कृपानिधिः पुण्यकृद्दृश्या ॥ २१ ॥

न हि केवलं प्रणामैः स्तुत्या भक्त्या समाराध्या ।
सत्येन धर्मनिवहैर्भावेन च कमलगेहिनी कमला ॥ २२ ॥

कादाचित्कविलोकेऽप्यक्षीणानन्ददायिनी कमला ।
रक्षतु कटाक्षकलिकाङ्कुरैर्भक्तानिहादरतः ॥ २३ ॥

कलिपापग्लपितानां मुरमर्दनदिव्यगेहिनी लक्ष्मीः ।
राजति शरणं परमं वशीकृतेशा च विबुधगणसेव्या ॥ २४ ॥

नित्योल्लसदुरुमाला वक्षसि कमला हरेर्भाति ।
निजतनुभासा द्योतितकौस्तुभमणिरम्बुधेस्तनया ॥ २५ ॥

मातर्मङ्गलदायिन्यमरेन्द्रवधूसमर्चिताङ्घ्रियुगे ।
मां पाह्यपायनिवहात् संततमकलक्षमामूर्ते ॥ २६ ॥

यदि कलिता चोपेक्षा नश्येत् किल तावकी महती ।
कीर्तिरतोऽम्ब कटाक्षैः परिषिञ्च मुदा मुहुः शीतैः ॥ २७ ॥

धनधान्यसुतादिरुचिग्रस्तं मां पाहि कमले त्वम् ।
तेनोर्जितकीर्तिः स्या मातस्त्वं सर्वरक्षिणी ख्याता ॥ २८ ॥

तव पादाम्बुजयुगलध्यानं मातर्मदीयमघमाशु ।
कबलीकरोति काले तेनाहं सिद्धसंकल्पः ॥ २९ ॥

अञ्जलिकलिका हि कृता यदि तस्यै मुरनिहन्तृदयितायै ।
रसनाग्रे खेलनभाक् तस्य तु पुंसो गिरां देवी ॥ ३० ॥

मातस्तव मूर्तिरियं सुधामयी निश्चिता निपुणैः ।
यत् तद्दर्शनभूम्ना निरस्ततापा बुधा भवन्त्यचिरात् ॥ ३१ ॥

कलितजगत्त्रयरक्षाभराणि मयि देवि संविधेहि मुदा ।
त्वद्वीक्षणानि कमले तेनाहं सिद्धसंकल्पः ॥ ३२ ॥

वरदे मुरारिदयिते जयन्ति ते वीक्षणानि यानि दिवि ।
संप्राप्य तानि मघवा विजितारिर्देवसंघवन्द्यश्च ॥ ३३ ॥

मोहान्धकारभास्करमम्ब कटाक्षं विधेहि मयि कमले ।
येनाप्तज्ञानकलाः स्तुवन्ति विबुधास्त्वदीयसदसि कलम् ॥ ३४ ॥

कामक्रोधादिमहासत्त्वनिरासं कृपासारात् ।
कुरु मातर्मम संसृतिभीतिं च निराकुरु त्वमेवारात् ॥ ३५ ॥

मूढानामपि हृद्यां कवितां दातुं यदीयपरिचर्या ।
प्रभवति काले सा हि श्रीरम्बा नः प्रसन्नास्तु ॥ ३६ ॥

दिव्यक्षेत्रेषु बुधा दिनकरमध्ये च वेदमौलौ च ।
यत्स्थानमिति वदन्ति श्रीरेषा भाति संश्रितहरिर्हि ॥ ३७ ॥

निजलीलाक्रान्तहरी रक्षति कमला कटाक्षधाट्या नः ।
शरणार्थिनश्च काले विहगोरगपशुमुखानुर्व्याम् ॥ ३८ ॥

समराङ्गणेषु जयदा त्रिदशानां मौलिभिर्मान्या ।
आपदि रक्षणदक्षा सा कमला नः प्रसन्नास्तु ॥ ३९ ॥

नित्यानन्दासनभाङ् नवनिधिवन्द्या च सागरेन्द्रसुता ।
विलसति माधववक्षसि पालितलोकत्रया च जननी नः ॥ ४० ॥

मुनिनुतनिजपरिपाटी वाग्धाटी दानलोलुपा भजताम् ।
शिक्षितरिपुजनकोटी विलसति धृतशातकुम्भमयशाटी ॥ ४१ ॥

निखिलागमवेद्यपदा नित्यं सद्भिः समाराध्या ।
संसृतिपाशनिहन्त्री या तस्यै चाञ्जलिः क्रियते ॥ ४२ ॥

भूयांसि नमांसि मया भक्तेन कृतानि कमलजाङ्घ्रियुगे ।
नित्यं लगन्तु तेन हि सर्वा राजन्ति संपदो मान्याः ॥ ४३ ॥

नित्यं निर्मलरूपे बरदे वाराशिकन्यके मातः ।
सद्गुणरक्षणदीक्षे पाहीति वदन्तमाशु मां पाहि ॥ ४४ ॥

भुवनजननि त्वमारात् कृतरक्षणसंततिः क्षमामूर्ते ।
प्रतिवस्तु रमे कलितस्वरूपशक्त्या हि राजसे जगति ॥ ४५ ॥

जय जय कलशाब्धिसुते जय जय हरिवल्लभे रमे मातः ।
प्रातरिति विबुधवर्याः पठन्ति नामानि ते हि मे गुरवः ॥ ४६ ॥

नेत्ररुचिविजितशारदपद्मे पद्मे नमस्तुभ्यम् ।
तेन वयं गतविपदः सा मुक्तिः करगता कलिता ॥ ४७ ॥

सततं बद्धाञ्जलिपुटमुपास्महे तच्छुभप्रदं तेजः ।
यत् कमलोदरनिलयं कमलाक्षप्रीतिवीचिकापूरम् ॥ ४८ ॥

स्फुरतु मम वचसि कमले त्वदीयवैभवसुधाधारा ।
नित्यं व्यक्तिं प्राप्ता धुतनुतजनखेदजालका महती ॥ ४९ ॥

कमले तव नुतिविषये बुद्धिर्जाता हि मे सहसा ।
तेन मम भागधेयं परिणतमित्येव नित्यसंतुष्टः ॥ ५० ॥

कवितारसपरिमिलितं करोति वदनं नतानां या ।
स्तोतुं तां मे ह्यारात् सा देवी सुप्रसन्नास्तु ॥ ५१ ॥

हरिगृहिणि तावकं नुतरूपं ये भुवि निजे हृदम्भोजे ।
ध्यायन्ति तेषु विबुधा अपि कल्पककुसुममर्पयन्ति मुदा ॥ ५२ ॥

नानावरदानकलालोलुपहृदये हृदम्भुजस्थे माम् ।
रक्षापायात् सहसा कुरु भक्तं दोषहीनं च ॥ ५३ ॥

निजघनकेशरुचा जितनीलाम्बुधरे शशाङ्कसहजन्मन् ।
पद्मे त्वदीयरूपं मनोहरं भातु मे हृदये ॥ ५४ ॥

घनकुङ्कुमलसिताङ्गं मुक्ताहारादिभूषितं मधुरम् ।
मन्दस्मितमधुरास्यं सूर्येन्दुविलोचनं च बुधमान्यम् ॥ ५५ ॥

निबिडकुचकुम्भयुगलं निजदृग्जितहरिणशावकाक्षियुगम् ।
लीलागतिजितकलभं मधुवैरिमनोहरं च सुरमान्यम् ॥ ५६

दिशि दिशि विस्तृतसंपद्विलासमधुरं च कुन्ददन्तालि ।
मदनजनकं च विष्णोः सर्वस्वं सर्वदानचणम् ॥ ५७ ॥

कुलदैवतमस्माकं संविद्रूपं नतार्तिहररूपम् ।
नानादुर्गतिहरणक्षमममरीसेवितं सकलम् ॥ ५८ ॥

पञ्चदशवर्णमानं पयोजवक्त्रं पितामहसमर्च्यम् ।
जगदवनजागरूकं हरिहरसंमान्यवैभवं किमपि ॥ ५९ ॥

करुणापूरितनयनं परमानन्दप्रदं च परिशुद्धम् ।
आगमगणसंवेद्यं कोशगृहं सर्वसंपदां नित्यम् ॥ ६० ॥

मातस्तावकपादाम्बुजयुगलं संततं स्फुरतु ।
तेनाहं तव रूपं द्रक्ष्याम्यानन्दसिद्धये सकलम् ॥ ६१ ॥

देव्या कटाक्षिताः किल पुरुषा वा योषितः पशवः ।
मान्यन्ते सुरसंसदि कल्पककुसुमैः कृतार्हणाः काले ॥ ६२

सुमनोवाञ्छादाने कृतावधानं धनं विष्णोः ।
धिषणाजाड्यादिहरं यद्वीक्षणमामनन्ति जगति बुधाः ॥ ६३ ॥

अन्तरपि बहिरुदारं तव रूपं मन्त्रदेवतोपास्यम् ।
जननि स्फुरतु सदा नः संमान्यं श्रेयसे काले ॥ ६४ ॥

मुररिपुपुण्यश्रेणीपरिपाकं तावकं रूपम् ।
कमले जननि विशुद्धं दद्याच्छ्रेयो मुहुर्भजताम् ॥ ६५ ॥

पुण्यश्रेणी कमला सा जननी भक्तमानसे स्थितिभाक् ।
तेजस्ततिभिर्मोहितभुवना भुवनाधिनाथगृहिणीयम् ॥ ६६ ॥

जलनिधिकन्यारूपं हरिमान्यं सर्वसंपदां हेतुः ।
चिरकृतसुकृतविशेषान्नयनयुगे भाति सर्वस्य ॥ ६७ ॥

जलनिधितपःफलं यन्मुनिजनहृदयाब्जनित्यकृतनृत्तम् ।
करुणालोलापाङ्गं तत् तेजो भातु निःसमं वदने ॥ ६८ ॥

शमितनतदुरितसंघा हरये निजनेत्रकल्पितानङ्गा ।
कृतसुरशात्रवभङ्गा सा देवी मङ्गलैस्तुङ्गा ॥ ६९ ॥

निखिलागमसिद्धान्तं हरिशुद्धान्तं सदा नौमि ।
तेनैव सर्वसिद्धिः शास्त्रेषु विनिश्चिता विबुधैः ॥ ७० ॥

कृष्णकृतविविधलीलं तव रूपं मातरादरान्मान्यम् ।
स्फुरतु विलोचनयुगले नित्यं संपत्समृद्ध्यै नः ॥ ७१ ॥

करुणाकटाक्षलहरी कामायास्तु प्रकामकृतरक्षा ।
लक्ष्म्या माधवमान्या सत्सुखदाने दिशि ख्याता ॥ ७२ ॥

अपवर्गसिद्धये त्वामम्बामम्भोजलोचनां लक्ष्मीम् ।
अवलम्बे हरिदयिते पद्मासनमुखसुरेन्द्रकृतपूजाम् ॥ ७३ ॥

तावककटाक्षलहरीं निधेहि मयि देवि कमले त्वम् ।
तेन मनोरथसिद्धिर्भुवि परमे धामनि प्रचुरा ॥ ७४ ॥

त्वामादरेण सततं वीक्षेमहि मातरब्जकृतवासाम् ।
विष्णोर्वक्षोनिलयामक्षयसुखसिद्धये लोके ॥ ७५ ॥

सा नः सिध्यतु सिद्धयै देवानां वाङ्मनोऽतीता ।
हरिगृहिणी हरिणाक्षी पालितलोकत्रया च जननीयम् ॥ ७६ ॥

सकलचराचरचिन्मयरूपं यस्या हि देवतोपास्यम् ।
सा ददतु मङ्गलं मे नित्योज्ज्वलमादराज्जननी ॥ ७७ ॥

शीतमयूखसहोदरि तां त्वामम्बां हि शीलये नित्यम् ।
निरसितवैरिगणोऽहं हरिचरणन्यस्तरक्षश्च ॥ ७८ ॥

दिक्षु विदिक्षु कृतश्रीः सा मे जननी नदीशतनयेयम् ।
हरिणा साकं भजतु प्राकाश्यं हृदि सतां समृद्धयै नः ॥ ७९ ॥

वारिनिधिवंशसंपद् दिव्या काचिद्धरेर्मान्या ।
अर्चन्ति यां तु मुनयो योगारम्भे तथान्ते च ॥ ८० ॥

धृतसुममधुपक्रीडास्थानायितकेशभारायै ।
नम उक्तिरस्तु मात्रे वाग्जितपीयूषधारायै ॥ ८१ ॥

संदेहे सिद्धान्ते वादे वा समरभूमिभागे वा ।
या राजति बहुरूपा सा देवी विष्णुवल्लभा ख्याता ॥ ८२ ॥

प्रतिफलतु मे सदा तन्मुनिमानसपेटिकारत्नम् ।
विष्णोर्वक्षोभूषणमादृतनिर्गतिजनावनं तेजः ॥ ८३ ॥

बालकुरङ्गविलोचनधाटीरक्षितसुरादि मनुजानाम् ।
नयनयुगासेव्यं तद् भातीह धरातले तेजः ॥ ८४ ॥

माधवदृक्साफल्यं भक्तावलिदृश्यकामधेनुकला ।
लक्ष्मीरूपं तेजो विभातु मम मानसे वचसि ॥ ८५ ॥

हरिसरसक्रीडार्थं या विधृतानेकरूपिका माता ।
सा गेहभूषणं नः स्फुरतु सदा नित्यसंपूज्या ॥ ८६ ॥

द्वारवतीपुरभागे मैथिलनगरे च यत्कथासारः ।
सा देवी जलधिसुता विहरणभाङ् मामके मनसि ॥ ८७ ॥

जलनिधितपोमहिम्ने देव्यै परमात्मनः श्रियै सततम् ।
भूयांसि नमांसि पुनः सर्वा नः संपदः सन्तु ॥ ८८ ॥

परमौषधं हि संसृतिव्याधेर्यत् कीर्तितं निपुणैः ।
तदहं भजामि सततं लक्ष्मीरूपं सदानन्दम् ॥ ८९ ॥

दशरथसुतकोदण्डप्रभावसाक्षात्कृते कृतानन्दा ।
सीतारूपा माता जज्ञे यज्ञक्षितौ हि सा सिद्ध्यै ॥ ९० ॥

मुनिजनमानसनिलये कमले ते चरणपङ्कजं शिरसि ।
अवतंसयन्नुदारं विशामि देवैः सुधर्मां वा ॥ ९१ ॥

धनमदमेदुरसेवां त्यक्त्वाहं ते पदाम्भोजम् ।
शरणं यामि पुमर्थस्फूर्तिकलायै भृशं दीनः ॥ ९२ ॥

न घटय कुत्सितसेवां दुष्टैर्वा संगमं मातः ।
कुरु मां दासं युवयोः संसृतितापं च हर शीघ्रम् ॥ ९३ ॥

मयि नमति विष्णुकान्ते तवाग्रतस्तापभारार्ते ।
मातः सहसा सुमुखी भव बाले दोषनिलये च ॥ ९४ ॥

हन्त कदा वा मातस्तव लोचनसेचनं भवेन्मयि भोः ।
इत्थं प्रातः स्तुवतां त्वमेव रक्षाकरी नियतम् ॥ ९५ ॥

संसाररोगशान्तिप्रदमेतल्लोचनं मातः ।
तावत्कमहमुपासे दिव्यौषधमाशु सागरेन्द्रसुते ॥ ९६ ॥

संसृतिरोगार्तानां तव नामस्मरणमत्र धरणितले ।
पूजाप्रदक्षिणादिकमार्या मुख्यौषधं वदन्ति किल ॥ ९७ ॥

मातर्विना धरण्यां सुकृतानां खण्डमिह जन्तुः ।
ध्यानं वा न हि लभते प्रणतिं वा संपदां जननीम् ॥ ९८ ॥

गुरुवरकटाक्षविभवाद् देवि तवाङ्घ्रिप्रणामधुतपापः ।
तव च हरेर्दासः सन् विशामि देवेश मानितां च सभाम् ॥ ९९ ॥

मुरहरनेत्रमहोत्सवतारुण्यश्रीर्निरस्तनतशत्रुः ।
ललितलिकुचाभकुचभरयुगला दृग्विजितहरिणसंदोहा ॥ १०० ॥

कारुण्यपूर्णनयना कलिकल्मषहारिणी च सा कमला ।
मुखजितशारदकमला वक्त्राम्भोजे सदा स्फुरतु माता ॥ १०१ ॥

तावककटाक्षसेचनविभवां निर्धूतदुरितसंघा हि ।
परमं सुखं लभन्ते परे तु लोके च सूरिभिः सार्धम् ॥ १०२ ॥

तव पादपद्मविसृमरकान्तिझरीं मनसि कलयंस्तु ।
निरसितनरकादिभयो विराजते नाकिसदसि सुरवन्द्यः ॥ १०३ ॥

हन्त सहस्रेष्वथ वा शतेषु सुकृती पुमान् मातः ।
तावकपादपयोरुहवरिवस्यां कलयते सकलम् ॥ १०४ ॥

जननि तरङ्गय नयने मयि दीने ते दयास्निग्धे ।
तेन वयं तु कृतार्था नातः परमस्ति नः प्रार्थ्यम् ॥ १०५ ॥

तावककृपावशादिह नानायोगादिनाशितभया ये ।
तेषां स्मरणमपि द्राक् श्रियावहं नित्यमाकलये ॥ १०६ ॥

नैव प्रायश्चित्तं दुरितानां मामकानां हि ।
त्वामेव यामि शरणं तस्माल्लक्ष्मि क्षमाधारे ॥ १०७ ॥

मुरवैरिमान्यचरिते मातस्त्वामखिललोकसाम्राज्ये ।
पश्यन्ति दिवि सुरेन्द्रा मुनयस्तत्त्वार्थिनश्च नित्यकलाम् ॥ १०८ ॥

स्वीयपदप्राप्त्यै ननु विबुधेशा जलधिकन्यके मातः ।
आराध्य दिव्यकुसुमैस्तव पादाब्जं परं तुष्टाः ॥ १०९ ॥

सृष्टिस्थित्यादौ हरिरम्ब तवापाङ्गवीक्षणादरवान् ।
जगदेतदवति काले त्वं च हरिर्नः क्रमात् पितरौ ॥ ११० ॥

राज्यसुखलाभसंपत्प्राप्त्यै क्षितिपाश्च ये च विप्राद्याः ।
गाङ्गजलैरपि कुसुमैर्वरिवस्यां ते क्रमेण कलयन्ति ॥ १११ ॥

संत्यक्तकामतदनुजडम्भासूयादयो नराः कमले ।
आराध्य त्वां च हरिं काले चैकासनस्थितां धन्याः ॥ ११२ ॥

जननी कदा पुनीते मम लोचनमार्गमादरादेषा ।
ये किल वदन्ति धन्यास्तेषां दर्शनमहं कलये ॥ ११३ ॥

करधृतलीलापद्मा पद्मा पद्माक्षगेहिनी नयने ।
सिञ्चति सकलश्रेयःप्राप्त्यै निर्व्याजकारुण्या ॥ ११४ ॥

नानाविधविद्यानां लीलासदनं सरोजनिलयेयम् ।
कविकुलवचःपयोजद्युमणिरुचिर्भाति नः पुरतः ॥ ११५ ॥

अतसीकुसुमद्युतिभाङ् नाकिगणैर्वन्द्यपादपद्मयुगा ।
सरसिजनिलया सा मे प्रसीदतु क्षिप्रमादरात् सिद्ध्यै ॥ ११६ ॥

जगदीशवल्लभे त्वयि विन्यस्तभरः पुमान् सहसा ।
तीर्त्वा नाकिस्थानं विशति परं वैष्णवं सुरैर्मान्यम् ॥ ११७ ॥

मातर्ज्ञानविकासं कारय करुणावलोकनैर्मधुरैः ।
तेनाहं धन्यतमो भवेयमार्यावृते सदसि ॥ ११८ ॥

हरिवक्षसि मणिदीपप्रकाशवत्यानया मात्रा ।
नित्यं वयमिह दासाः श्रिया सनाथा मुदा परं नौमः ॥ ११९ ॥

विद्रावयतु सरोजासने त्वदीया कटाक्षधाटी नः ।
अज्ञानाङ्कुरमुद्रां पुनरपि संसारभीतिदां सहसा ॥ १२० ॥

तावककटाक्षसूर्योदये मदीयं हृदम्भोजम् ।
भजते विकासमचिरात् तमोविनाशश्च निश्चितो विबुधैः ॥ १२१

लक्ष्मीकटाक्षलहरी लक्ष्मीं पक्ष्मलयति क्रमान्नमताम् ।
पादपयोरुहसेवा परं पदं चित्सुखोल्लासम् ॥ १२२ ॥

चिद्रूपा परमा सा कमलेक्षणनायिका मुदे भजताम् ।
यत्प्रणयकोपकाले जगदीशः किंकरो भवति ॥ १२३ ॥

काचन देवी विहरतु मम चित्ते संततं सिद्ध्यै ।
यापत्यं कलशाब्धेरुरगेशयसत्कलत्रं च ॥ १२४ ॥

अष्टसु महिषीष्वेका कमला मुख्या हि निर्दिष्टा ।
अनयैव सर्वजगतामुदयादिस्तन्यते काले ॥ १२५ ॥

कैवल्यानन्दकलाकन्दमहं संततं वन्दे ।
तत्तु मुकुन्दकलत्रं चिन्तितफलदानदीक्षितं किमपि ॥ १२६ ॥

ईक्षे कमलामेनामम्बामम्भोजलोचनां सततम् ।
मन्दस्मितमधुरास्यां नित्यं चाज्ञातकोपमुखदोषाम् ॥ १२७ ॥

अङ्कितमाधववक्षःस्थला सरोजेक्षणा च हरिकान्ता ।
कबलयति मानसं मे दयाप्रसारादिभिर्नित्यम् ॥ १२८ ॥

भूत्यै मम भवतु द्रागज्ञानध्वंसिनी नमताम् ।
नाथानुरूपरूपा श्रुत्यन्तेड्या दशावतारेषु ॥ १२९ ॥

सकलजनरक्षणेषु प्रणिहितनयना त्रिलोकमाता नः ।
पुष्णाति मङ्गलानां निकरं सेवाक्रमेण . . . ॥ १३० ॥

पद्मासनजननी मां पातु मुदा सुन्दरापाङ्गैः ।
सर्वैश्वर्यनिदानं यामाहुर्वैदिका दीप्ताम् ॥ १३१ ॥

नानालंकारवती मुनिमानसवासिनी हरेः पत्नी ।
त्रैलोक्यविनुतविभवा मां पायादापदां निचयात् ॥ १३२ ॥

विद्रावयतु भयं नः सा कमला विष्णुवल्लभा माता ।
अब्धिः संक्षुभितोऽभूत् यदर्थमार्येण रामेण ॥ १३३ ॥

भूयो यदर्थमिन्द्रः सुरतरुकुसुमार्थिना च कृष्णेन ।
हृतगर्वोऽजनि युद्धे सा नित्यं श्रेयसे भूयात् ॥ १३४ ॥

त्वामाराध्य जना अपि धनहीनाः सौधमध्यतल्पभाजः ।
नानादेशवनीपकजनस्तुता भान्ति नित्यमेव रमे ॥ १३५ ॥

संसृतितापो न भवति पुनरपि यत्पादपङ्कजं नमताम् ।
सा मयि कलितदया स्यादम्बा विष्णोः कलत्रमनुरूपम् ॥ १३६ ॥

जननीकटाक्षभाजामिह मर्त्यानां सुरास्तु किंकरताम् ।
रिपवो गिरितटवासं भजन्ति वेश्मानि सिद्धयः सर्वाः ॥ १३७ ॥

स्मरणाद्वा भजनाद्वा यस्याः पादाम्बुजस्य भुवि धन्याः ।
हन्त रमन्ते स्तम्बेरमनिवहावृतगृहाङ्गणे मनुजाः ॥ १३८ ॥

चिरकृतसुकृतनिषेव्या सा देवी विष्णुवल्लभा ख्याता ।
यस्याः प्रसादभूम्ना जाताः पश्चादयो वदान्या हि ॥ १३९ ॥

अम्ब मधुरान् कटाक्षान् तापहरान् विकिर मयि कृपाजलधे ।
ये विन्यस्ताः करिवरमारुतिमुखभक्तवर्येषु ॥ १४० ॥

अमृतलहरीव मधुरा जलधररुचिरा नतार्तिहरशीला ।
सर्वश्रेयोदात्री काचिद् देवी सदा विभातु हृदि ॥ १४१ ॥

गीताचार्यपुरन्ध्री त्वदीयनामप्रभावकलनाद्यैः ।
यमभयवार्ता दूरे हरिसांनिध्यं कुतो न स्यात् ॥ १४२ ॥

जलनिधितनये कान्ते विष्णोरुष्णांशुचन्द्रनयने ते ।
चतुराननादयस्तु ख्याता बालाः श्रुतौ चोक्ताः ॥ १४३ ॥

मनसिजवैरं गात्रं वाणी सौधारसी च यद्भजताम् ।
श्लाघ्या संपत् सज्जनसमागमश्चाशु सिध्यन्ति ॥ १४४ ॥

सफलयतु नेत्रयुगलं हतनतदुरिता च सा परा देवी ।
जलनिधिकन्या मान्या पत्यवतारानुकूलनिजचरिता ॥ १४५ ॥

नित्यं स्मरामि देवीं नमतां सर्वार्थदायिनीं कमलाम् ।
यामाहुर्भवनिगलध्वंसनदीक्षां च . . . ॥ १४६ ॥

सकलजगदघनिवारणसंकल्पां मधुजितो दयिताम् ।
जीवातुमेव कलये मोक्षार्थिजनस्य भूमिसुताम् ॥ १४७ ॥

मन्दानामपि दयया तमोनिरासं वितन्वन्ती ।
सर्वत्र भाति कमला तनुरिव विष्णोर्निरस्ताघा ॥ १४८ ॥

बालमरालीगत्यै सुरपुरकन्यादिमहितकलगीत्यै ।
विरचितनानानीत्यै चेतो मे स्पृहयते बहुलकीर्त्यै ॥ १४९ ॥

अभिलषितदानकुशला वाग्देवीवन्दिता च सा कमला ।
नित्यं मानसपद्मे संचारं कलयते मुहुः कुतुकात् ॥ १५० ॥

मुरमथननयनपङ्कजविलासकलिका सुरेशमुखसेव्या ।
भूतमयी सावित्री गायत्री सर्वदेवता जयति ॥ १५१ ॥

सा हि परा विद्या मे लक्ष्मीरक्षोभणीयकीर्तिकला ।
हृद्यां विद्यां दद्यादद्य श्रेयःपरंपरासिद्ध्यै ॥ १५२ ॥

कामजननी हि लक्ष्मीः नानालीलादिभिर्निजं नाथम् ।
मोहयति विष्णुमचिरात् प्रकृतीनां क्षेमसिद्धयर्थम् ॥ १५३ ॥

मनसिजसाम्राज्यकलानिदानमार्याभिवन्दितं किमपि ।
लक्ष्मीरूपं तेजो विलसति मम मनसि विष्णुसंक्रान्तम् ॥ १५४ ॥

विष्णुमनोरथपात्रं संतप्तस्वर्णकाम्यनिजगात्रम् ।
आश्रितजलनिधिगोत्रं रक्षितनतबाहुजच्छात्रम् ॥ १५५ ॥

कविकुलजिह्वालोलं मुरमर्दनकलितरम्यबहुलीलम् ।
निरसितनतदुष्कालं वन्दे तेजः सदालिनुतशीलम् ॥ १५६ ॥

आदिमपुरुषपुरन्ध्रीमम्बामम्भोजलोचनां वन्दे ।
यां नत्वा गततापास्त्यक्त्वा देहं विशन्ति परमपदम् ॥ १५७ ॥

लक्ष्म्या हरिरपि भाति प्रकृतिक्षेमाय दीक्षितायासौ ।
मम लोचनयोः पुरतो लसतु गभीरं क्रियासिद्धयै ॥ १५८ ॥

जननि कदा वा नेष्याम्यहमारादर्चितत्वदीयपदः ।
निमिषमिव हन्त दिवसान् दृष्ट्वा त्वामादरेण कल्याणीम् ॥ १५९ ॥

संपूर्णयौवनोज्ज्वलदेहां यां वीक्ष्य शौरिरपि ।
कुसुमशरविद्धचेताः किंकरभावं स्वयं प्राप्तः ॥ १६० ॥

अनुनयशीलस्तदनु प्रणयक्रोधादिना भीतः ।
आदिमपुरुषः सोऽयं सा लक्ष्मीर्न श्रियै भवतु ॥ १६१ ॥

मणिकुण्डलललसितास्यं कृपाकरं किमपि कुङ्कुमच्छायम् ।
हरिणा कृतसंचारं तेजो मे भातु सर्वदा सिद्धयै ॥ १६२ ॥

साम्राज्यमङ्गलश्रीः श्रीरेषा पुष्कराक्षस्य ।
गन्धर्वकन्यकाद्यैर्गङ्गातीरेषु गीतकीर्तिर्हि ॥ १६३ ॥

कविताभाग्यविधात्री परिमलसंक्रान्तमधुपगणकेशा ।
मम नयनयोः कदा वा सा देवी कलितसंनिधानकला ॥ १६४ ॥

कीर्तिः स्वयं वृणीते वाग्देवी चापि विजयलक्ष्मीश्च ।
तं नरमचिराल्लोके यो लक्ष्मीपादभक्तस्तु ॥ १६५ ॥

सन्मित्रं पाण्डित्यं सद्दाराः सत्सुताद्याश्च ।
जायन्ते तस्य भुवि श्रीभक्तो यश्च निर्दिष्टः ॥ १६६ ॥

परमाचार्यैर्विनुतां तामम्बामादरान्नौमि ।
परमैश्वर्यं विष्णोरपि या वेदेषु निर्दिष्टा ॥ १६७ ॥

कविकुलसूक्तिश्रेणीश्रवणानन्दोल्लसद्धतंससुमा ।
सा देवी मम हृदये कृतसांनिध्या विराजते परमा ॥ १६८ ॥

तापार्तास्तु तटाकं यथा भजन्ते रमां देवीम् ।
संसृतितप्ताः सर्वे यान्ति हि शरणं शरण्यां ताम् ॥ १६९ ॥

सर्वज्ञत्वं श्लाघ्यं धराधिपत्यं रमे देवि ।
यद्यत् प्रार्थ्यं दयया तद् दिश मोक्षं च मे जननि ॥ १७० ॥

विद्युतमचञ्चलां त्वां कृष्णे मेघे पयोधिवरकन्ये ।
नित्यमवैमि श्रेयःसिध्यै मातः प्रसन्ने नः ॥ १७१ ॥

त्वामम्ब संततरुचिं कृष्णो मेघः समासाद्य ।
सद्वर्त्मनि वर्षति किल काङ्क्षाधिकमादरेण वार्धिसुते ॥ १७२ ॥

अम्ब त्वमेव काले मुकुन्दमपि दर्शयन्तीह ।
श्रेयःसिद्ध्यै नमतां भासि हृदि श्रुतिशिरःसु सल्लोके ॥ १७३ ॥

विनमदमरेशसुदतीकचसुममकरन्दधारया स्निग्धम् ।
तव पादपद्ममेतत् कदा नु मम मूर्ध्नि भूषणं जननि ॥ १७४ ॥

अपवर्गसौख्यदे ते दयाप्रसारः कथं वर्ण्यः ।
यामवलम्ब्य हि यष्टिं न पतति संसारपङ्किले मार्गे ॥ १७५ ॥

सूक्ष्मात् सूक्ष्मतरं ते रूपं पश्यन्ति योगिनो हृदये ।
तां त्वामहं कदा वा द्रक्ष्येऽलंकारमण्डितां मातः ॥ १७६ ॥

चिरतरतपसा क्लिष्टे योगिहृदि स्थानभाग् रमा देवी ।
दर्शनमचिराद् दयया ददाति योगादिहीनानाम् ॥ १७७ ॥

तीरं संसृतिजलधेः पूरं कमलाक्षलोचनप्रीतेः ।
सारं निगमान्तानां दूरं दुर्जनततेर्हि तत्तेजः ॥ १७८ ॥

लक्ष्मीरूपं तेजो ममाविरस्तु श्रियै नित्यम् ।
यन्नित्यधर्मदारान् विष्णोरमितौजसः प्राहुः ॥ १७९ ॥

जलधिसुते त्वं जननी स वासुदेवः पिता च नः कथितः ।
शरणं युवां प्रपन्ना नातो दुर्गतिपरिस्फूर्तिः ॥ १८० ॥

हरिनीलरत्नभासा प्रकाशितात्मा समुद्रवरकन्या ।
मङ्गलमातनुतेयं कटाक्षकलिकाप्रसारैस्तु ॥ १८१ ॥

मच्चित्तमत्तवारणबन्धनमधुना त्वदीयपादयुगे ।
कलयामि रमे मातर्मां रक्ष क्षिप्रमेव संसृतितः ॥ १८२ ॥

मोचय संसृतिबन्धं कटाक्षकलिकाङ्कुरै रमे मातः ।
नातः परमर्थ्यमिह क्षमातले त्वं दयामूर्तिः ॥ १८३ ॥

मञ्जुलकवितासंततिबीजाङ्कुरदायिसारसालोका ।
जननि तवापाङ्गश्रीः जयति जगत्त्राणकलितदीक्षेयम् ॥ १८४ ॥

अम्ब तवापाङ्गश्रीरपाङ्गकेलीशतानि जनयन्ती ।
मुरहन्तुर्हृदि जयति व्रीडामदमोहकामसारकरी ॥ १८५ ॥

बद्धमपि चित्तमेतद् यमनियमाद्यैः परिष्कारैः ।
धावति बलाद् रमे तव पादाब्जं यामि शरणमहम् ॥ १८६ ॥

मत्तगजमान्यगमना मधुरालापा च मान्यचरिता सा ।
मन्दस्मेरमुखाब्जा कमला मे हृदयसारसे लसतु ॥ १८७ ॥

शास्त्रस्मरणविहीनं पापिनमेनं जनं रमा देवी ।
दयया रक्षति काले तस्यास्तेन प्रथा महती ॥ १८८ ॥

मुखविजितचन्द्रमण्डलमिदमम्भोरुहविलोचनं तेजः ।
ध्याने जपे च सुदृशां चकास्ति हृदये कवीश्वराणां च ॥ १८९ ॥

अम्ब विवेकविदूरं जनमेनं शिशिरलोचनप्रसरैः ।
शिशिरय कृपया देवि त्वमेव माता हि लोकस्य ॥ १९० ॥

कोपादुपेक्षसे यदि मातर्मे रक्षकः कः स्यात् ।
मयि दीने को लाभस्तव तु दयायाः प्रसारिण्याः ॥ १९१ ॥

भवचण्डकिरणतप्तः श्रान्तोऽहं ज्ञानवारिदूरस्थः ।
शिशिरामङ्घ्रिच्छायां तव मातर्यामि शरणमाराात्तु ॥ १९२ ॥

मातरशोकोल्लासं प्रकटय तव कोमलकटाक्षैः ।
यैर्दीना नरपतयः कलिता वारणशतावृते गेहे ॥ १९३ ॥

जयति रमे तव महती कृपाझरी सर्वसंमान्या ।
क्षेमंकरी यदेषा प्रतिकल्पं सर्वजगतां च ॥ १९४ ॥

अज्ञानकूपकुहरे पतितं मां पाहि कमले त्वम् ।
नगरे वा ग्रामे वा वनमध्ये दिक्षु रक्षिणी त्वमसि ॥ १९५ ॥

तव चरणौ शरणमिति ब्रुवन्नहं मातरब्धितनये त्वम् ।
हरिणा सहिता दयया पाह्यविलम्बेन दीनं माम् ॥ १९६ ॥

परिसरनतविबुधालीकिरीटमणिकान्तिवल्लरीविसरैः ।
कृतनीराजनविधि ते मम तु शिरोभूषणं हि पदयुगलम् ॥ १९७ ॥

मम हृदयपङ्कजवनीविकासहेतौ दिनाधिपायेताम्(?) ।
तव तु कटाक्षप्रसरः दीपायेतां(?) तमोनिराकरणे ॥ १९८ ॥

यावच्छरणं याति क्षितितनये त्वां हि जन्तुरिह मूढः ।
तावत् तस्य तु रसनाङ्गणे तु वाणी समाकलितनृत्ता ॥ १९९ ॥

पङ्कजनिलये तावकचरणं शरणं समाकलये ।
तेन हि सर्वकृतानां भविष्यतां हानिरेव दुरितानाम् ॥ २०० ॥

श्रुत्यन्तसेवितं ते चरणसरोजं प्रणम्य किल जन्तुः ।
छत्रोल्लसितशिराः सन् वनीपकान् दानवारिणा सिञ्चन् ॥ २०१ ॥

विष्वक्सेनमुखाद्यैः सेवितमम्ब त्वदीयपादयुगम् ।
अवतंसयन्ति सन्तः कलितापप्रशमनायास्तु ॥ २०२ ॥

दुग्धोदधितनये त्वां दिशागजेन्द्राः सुवर्णघटतोयैः ।
मणिमण्टपमध्यतले समभ्यषिञ्चन् हरिप्रीत्यै ॥ २०३ ॥

दिग्गजपुष्करकुम्भैरभिषिक्तां त्वां हरिः प्रीत्या ।
उदवहदारान्मुनिगणमध्ये सर्वश्रियो मूलम् ॥ २०४ ॥

जातपराक्रमकलिका दिशि दिशि किंनरसुगीतनिजयशसः ।
धन्या भान्ति हि मनुजाः यद्वीक्षालवविशेषतः काले ॥ २०५ ॥

नमदमरीकचभरसुममरन्दधाराभिषिक्तं ते ।
पदकमलयुगलमेतच्छ्रेयःस्फूर्त्यै सदा भवतु ॥ २०६ ॥

रागद्वेषादिहतं मामव कमले हरेः कान्ते ।
दर्शय दयया काले ह्यपवर्गस्थानमार्गं च ॥ २०७ ॥

न हि जाने वर्णयितुं परमे स्थाने त्वदीयविभवमहम् ।
मुनयश्च सुरा वेदा यतो निवृत्ताः क्षमातनये ॥ २०८ ॥

मनुजाः कटाक्षिताः किल तथाम्बया मेदिनीपुत्र्या ।
सत्सुतकलत्रसहिताः सुरभिं कालेन निर्विशन्ति मुदा ॥ २०९ ॥

जलधीशकन्यका सा लसतु पुरोऽस्माकमादरकृतश्रीः ।
यत्प्रणमनाज्जनानां कवितोन्मेषः सदीडितो भाति ॥ २१० ॥

दूरीकरोतु दुरितं त्वद्भक्तिर्मामकं कमले ।
अहमपि सुरेशसेव्ये तव सदसि विशामि कीर्तिगानपरः ॥ २११ ॥

परमज्ञानविधात्री तव पादपयोजभक्तिरस्माकम् ।
किं वाशास्यमतोऽन्यत् समुद्रतनये हरेर्जाये ॥ २१२ ॥

अम्ब कदा वा लप्स्ये मदीयपापापनोदाय ।
तव पादकमलसेवामब्जभवाद्यैस्तु संप्रार्थ्याम् ॥ २१३ ॥

मन्दानामपि मञ्जुलकवित्वरसदायिनी जननी ।
कापि करुणामयी सा लसतु पुरस्तात् सदास्माकम् ॥ २१४ ॥

सकलकविलोकविनुते कमले कमलाक्षि वल्लभे विष्णोः ।
त्वन्नामानि हि कलये वने जले शत्रुपीडायाम् ॥ २१५ ॥

दिवि वा भुवि दिक्षु जले वह्नौ वा सर्वतः कमले ।
जन्तूनां किल रक्षा त्वदधीना कीर्त्यते विबुधैः ॥ २१६ ॥

कुशलविधये तदस्तु त्रिविक्रमासेव्यरम्यनिजकेलि ।
कबलितपदनतदैन्यं तरुणाम्बुजलोचनं तेजः ॥ २१७ ॥

जननी सुवर्णवृष्टिप्रदायिनी भाति विष्णुवक्षःस्था ।
कमला कलितक्षेमा प्रकृतीनां शीतलापाङ्गैः ॥ २१८ ॥

जगतामादिमजननी लसति कवेरात्मजापुलिने ।
क्षेत्रेषूत्तमजुष्टेष्वयोनिजा लोकरक्षायै ॥ २१९ ॥

कुचशोभाजितविष्णुः कुङ्कुमपङ्काङ्किता कमला ।
काञ्च्यां राजति काञ्चीमणिगणनीराजिताङ्घ्रियुगा ॥ २२० ॥

मन्दारकुसुममदहरमन्दस्मितमधुरवदनपङ्करुहा ।
हृद्यतमनित्ययौवनमण्डितगात्री विराजते कमला ॥ २२१ ॥

कंसरिपुगेहिनी सा हंसगतिर्हंसमान्यनिजचरिता ।
संसारतापहानिं कलयतु काले रमास्माकम् ॥ २२२ ॥

मनसिजजननी जननी चास्माकमिहादरात् काले ।
शीतलल्लोलापाङ्गैस्तरङ्गयति श्रेयसां सरणिम् ॥ २२३ ॥

तव मन्दहासकलिकां भजे भुजङ्गे शयानं तम् ।
या कलयति गतकोपं बालानां नः कृतापराधानाम् ॥ २२४ ॥

सा साधयेदभीष्टं कमला श्रीर्विष्णुवक्षःस्था ।
यस्याः पदविन्यासः श्रुतिमौलिषु तन्यते महालक्ष्म्याः ॥ २२५ ॥

शान्तिरसनित्यशेवधिमम्बां सेवे मनोरथावाप्त्यै ।
यामाराध्य सुरेशाः स्वपदं प्रापुर्हि तादृक्षम् ॥ २२६ ॥

धातुरपि वेदवचसां दूरे यत्स्थानमामनन्ति बुधाः ।
सास्तु मुदे श्रीरेषा मुरमर्दनसत्कलत्रममितौजः ॥ २२७ ॥

भवदुःखराशिजलधेर्हठात् तरित्रीं परं विद्मः ।
तामम्बां कमलस्थां मुरारिवक्षोमणिप्रदीपां च ॥ २२८ ॥

मुनिसार्वभौमवर्णितमहाचरित्रं हरेः कलत्रं तत् ।
पथि मङ्गलाय भवतु प्रस्थानजुषां कृपाधारम् ॥ २२९ ॥

खण्डितवैरिगणेयं मण्डितभक्ता सुताद्यैश्च ।
भासुरकीर्तिर्जयति क्षोणीसुरवन्द्यचरणाब्जा ॥ २३० ॥

नतपालिनि मां पाहि त्रिजगद्वन्द्ये निधेहि मयि दयया ।
तावककटाक्षलहरीः शक्तिमये सकलसिद्धीनाम् ॥ २३१ ॥

भवसागरं तितीर्षुस्तव चरणाब्जं महासेतुम् ।
मातः कदा नु लप्स्ये घनतापोर्म्यादिपीडितो दीनः ॥ २३२ ॥

कविवाग्वासन्तीनां वसन्तलक्ष्मीर्मुरारिदयिता नः ।
परमां मुदं विधत्ते काले काले महाभूत्यै ॥ २३३ ॥

मुरहरपरतन्त्रं तद् गततन्द्रं वस्तु निस्तुलमुपासे ।
तेनैवाहं धन्यो मद्वंश्या निरसितात्मतापभराः ॥ २३४ ॥

तृष्णां शमयति देवी राघवदयिता नतालिसुरवल्ली ।
इत्यार्यवचो धैर्यं जनयति काले धरापुत्रि ॥ २३५ ॥

रघुपतिदयिते मातः काकासुररक्षणादिना लोके ।
तावककरुणामहिमा प्रथितः किल भूतिदायी नः ॥ २३६ ॥

प्रचुरतरदुरितपालीसमावृतानां कलौ हि तप्तानाम् ।
तावकदया हि मातः शरणं वरमिति सतां गणः स्तौति ॥ २३७ ॥

अत्यन्तशीतलां तां कटाक्षधाटीमुपासेऽहम् ।
तेन मम त्रिदशानां न कोऽपि भेदो धरातनये ॥ २३८ ॥

यैः सेवा संकलिता तव पादाब्जे धरातनये ।
तेषामज्ञानझरी याति हि विलयं क्षणेनैव ॥ २३९ ॥

ज्ञानारविन्दविलसनमचिरादस्य स्तुतौ हि कविवर्याः ।
संपद् दिव्या च तथा विबुधावलिमाननीयात्र ॥ २४० ॥

मातस्तव पादाब्जं यस्य ललाटे कृतोरुनिजकान्ति ।
तत्पादपद्ममचिराद् विमानगा देवता वहति ॥ २४१ ॥

आज्ञावशेन देव्या लसन्ति दिवि देवतामान्याः ।
इन्द्राद्याः स च धाता दिक्पालाश्चापि गन्धर्वाः ॥ २४२ ॥

केवल्यानन्दकलादात्रीं कमलामहर्निशं नौमि ।
तेनैव जन्म सफलं तीर्थादिनिषेवणाद्यच्च ॥ २४३ ॥

यच्च हरिपादपङ्केरुहपरिचरणादिना लोके ।
तत् सर्वमाशु घटयति सहसा मन्दस्य मे माता ॥ २४४ ॥

नानाश्रुत्यन्तकलापरिमलपरिवाहवासितं मातः ।
तव चरणकमलयुगलं ममावतंसः क्षणं भातु ॥ २४५ ॥

नतदेवनगरनारीधम्मिल्लसत्सुमालिकृतनादाः ।
प्रातर्मुरजविलासं कलयन्ति भृशं तवाग्रतो भृङ्गाः ॥ २४६ ॥

पापप्रशमनदीक्षाकलाधुरीणाः पयोजनिलये ते ।
मां च पवित्रीकुर्युः पादपरागाः कृपावशतः ॥ २४७ ॥

हन्त कदा वा लप्स्ये तवाङ्घ्रिशुश्रूषणासक्तिम् ।
सहजानन्दं तेन हि पदं क्रमात् प्राप्यमादिष्टम् ॥ २४८ ॥

नलिनीविलासरुचिरां मयि देवि त्वत्कटाक्षलहरीं हि ।
काले निधेहि दयया स्फीता ते कीर्तिरादृता सर्वैः ॥ २४९ ॥

विनिहतदुरितस्तोमा कापि मदीये हृदम्भोजे ।
लसतु परदेवताख्या माधवनेत्रप्रियंकरी कलिका ॥ २५० ॥

पञ्चायुधगुरुमन्त्रं कलनूपुरनिनदमादरात् कमले ।
कलयति रमाधवगृहं यातुं काले त्वयि प्रवृत्तायाम् ॥ २५१ ॥

नतनाकिलोकवनिताललाटसिन्दूरशोणकान्तिभृतोः ।
कलये नमांसि कमले तव पादपयोजयोर्नित्यम् ॥ २५२ ॥

कमलसुषुमानिवासस्थानकटाक्षं चिराय कृतरक्षम् ।
रक्षोगणभीतिकरं तेजो भाति प्रकाममिह मनसि ॥ २५३ ॥

ज्योत्स्नेव शिशिरपाता कटाक्षधाटी त्वदीया हि ।
अम्ब मुकुन्द . . . . . . . . . कुरुते ॥ २५४ ॥

तापहररसविवर्षणधृतकुतुका कापि नीलनलिनरुचिः ।
कादम्बिनी पुरस्तदास्तां नः संततं जननी ॥ २५५ ॥

सफलयतु नेत्रयुगलं मामकमेतत् त्वदीयरूपमहो ।
यत् कमलनेत्रसुचरितपचेलिमं वैदिकी श्रुतिर्ब्रूते ॥ २५६ ॥

माधवनेत्रपयोजामृतलहरी भाति तावकं रूपम् ।
अम्ब युवामाद्यौ नः पितरौ वन्दे सुखावाप्त्यै ॥ २५७ ॥

सरसकवितादिसंपद्विलसनमारादुशन्ति कविवर्याः ।
यत्प्रीणनेन सा मे भवतु विभूत्यै हि सा कमला ॥ २५८ ॥

मनसिजजयादिकार्यं यदपाङ्गलवान्नृणां भवति ।
तत्पदमानन्दकलं सेव्यं च भजे रमां जननीम् ॥ २५९ ॥

शिथिलिततमःसमूहा भक्तानां सा रमा देवी ।
जनयति धैर्यं च हरेः काले या सर्वदा सेव्या २६० ॥

यद्भ्रूविलासवशतः शक्तः सृष्ट्यादिकं कर्तुम् ।
हरिरपि लोके ख्यातः सा नः शरणं जगन्माता ॥ २६१ ॥

नयनयुगलीं कदा मे सिञ्चति देव्याः परं रूपम् ।
यद्भजनान्न हि लोके दृष्टं श्लाघ्यं परं वस्तु ॥ २६२ ॥

सुचरितफलं त्वदीयं रूपं नः कलितभक्तीनाम् ।
अत एव मामकानां पापानां विरतिरूर्जिता कमले ॥ २६३ ॥

सुकृतविभवादुपास्या कमला सा सर्वकल्याणा ।
हरिवक्षसि कृतवासा रक्षति लोकानहोरात्रम् ॥ २६४ ॥

संविद्रूपा हि हरेः कुटुम्बिनी भाति भक्तहृदयेषु ।
सर्वश्रेयःप्राप्त्यै यां विदुरार्या रमां कमलाम् ॥ २६५ ॥

विषयलहरीप्रशान्त्यै कमलापादाम्बुजं नौमि ।
पूर्वं शुकादिसुधियो यद्ध्यानाद् गलितशत्रुभयाः ॥ २६६ ॥

ललितगमनं त्वदीयं कलनूपुरनादपूरितं मातः ।
नौमि पदाम्बुजयुगलं भवतापनिरासनायाद्य ॥ २६७ ॥

विरलीकरोति तापं कमलाया मन्दहासझरी ।
यत्सेवनेषु समुदितकौतुकरसनिर्भरो हरिर्जयति ॥ २६८ ॥

प्रतिफलतु संततं मे पुरतो मातस्त्वदीयरूपमिदम् ।
यद्दर्शनरसभूम्ना हरिरपि नानास्वरूपभाक् काले ॥ २६९ ॥

अम्ब तव चरणसेवां संततमहमादरात् कलये ।
तेन मम जन्म सफलं त्रिदशानामिव मुनीन्द्राणाम् ॥ २७० ॥

दुर्वारगर्वदुर्मतिदुरर्थनिरसनकलानिपुणाः ।
तव चरणसेवयैव हि कमले मातर्बुधा जगति ॥ २७१ ॥

आनन्दमेति मातस्तव नामोच्चारणेन सिन्धुभवे ।
संप्राप्तत्वद्रूपं मम मानसमात्तयोगकलम् ॥ २७२ ॥

तव दृष्टिपातविभवात् सर्वे लोके विधूततापभराः ।
यान्ति मुदा त्रिदशैः सह विमानमारुह्य मातरहो ॥ २७३ ॥

को वा न श्रयति बुधः श्रेयोऽर्थी तामिमां कमलाम् ।
यां पन्नगारिवाहनसधर्मिणीमर्चयन्ति सुरनाथाः ॥ २७४ ॥

तामरविन्दनिवासामम्बां शरणार्थिनां कलितरक्षाम् ।
बहुरूपेष्वघनिचयेष्वपि निश्चित्यात्मनो धैर्यम् ॥ २७५ ॥

करुणाप्रवाहझर्या गतपङ्कं भूतलं मातः ।
सत्वाङ्कुरादिलसितं जयति पयोराशिकन्यके कमले ॥ २७६ ॥

विधिशिववासवमुख्यैर्वन्द्यपदाब्जे नमस्तुभ्यम् ।
मातर्विष्णोर्दयिते सर्वज्ञत्वं च मे कलय ॥ २७७ ॥

परदेवते प्रसीद प्रसीद हरिवल्लभे मातः ।
त्वामाहुः श्रुतयः किल कल्याणगुणाकरां नित्याम् ॥ २७८ ॥

क्षन्तव्यमम्ब मामकमघराशिं क्षपय वीक्षणतः ।
सत्वोन्मेषं देहि प्रिये हरेर्दासमपि कुरु माम् ॥ २७९ ॥

वाञ्छितसिद्धिर्न स्याद् यदि पादाब्जे कृतप्रणामानाम् ।
हानिस्त्वदीययशसामिति केचिद्धैर्यवन्तश्च ॥ २८० ॥

सदसदनुग्रहदक्षां त्वां मातः संततं नौमि ।
ग्रहपीडा नैव भवेद्यमपीडा दूरतः काले ॥ २८१ ॥

विद्याः कलाश्च काले कृपया कलय प्रसीदाशु ।
मातस्त्वमेव जगतां सर्वेषां रक्षणं त्वया क्रियते ॥ २८२ ॥

उच्चेष्वपि नीचेषु प्रकाशते तुल्यमेव तव रूपम् ।
एतद् दृष्ट्वा धैर्यं घनागसोऽप्यम्ब जायते ननु मे ॥ २८३ ॥

का शङ्का तव वैभवजालं वक्तुं दिगन्तरे मातः ।
वरहारालंकारां सेवन्ते त्वां हरित्पतयः ॥ २८४ ॥

कमलायाश्च हरेरपि संदृश्यं दिव्यदांपत्यम् ।
तावेव नः पती किल जन्मान्तरपुण्यपरिपाकात् ॥ २८५ ॥

सर्वासामुपनिषदां विद्यानां त्वं परं स्थानम् ।
अल्पधियो वयमेते त्वत्स्तोत्रे भोः कथं शक्ताः ॥ २८६ ॥

साष्टाङ्गप्रणतिरियं प्रकल्पिता मातरद्य तव चरणे ।
तेनाहं हि कृतार्थः किं प्रार्थ्यं वस्त्वनः कमले ॥ २८७ ॥

स्तोत्रमिदं हि मया ते चरणाम्भोजे समर्पितं भक्त्या ।
तव च गुरोरपि वीक्षा तत्र निदानं परं नान्यत् ॥ २८८ ॥

देहान्ते ननु मातर्मोक्षं त्रिदशैः समं देहि ।
अहमपि साम पठन् सन् त्वां च हरिं यामि शरणार्थी ॥ २८९ ॥

शुकवाणीमिव मातर्निरर्थकां मद्वचोभङ्गीम् ।
आराच्छृणोषि दयया तदेव चोत्तमपदव्यक्त्यै ॥ २९० ॥

विद्यां कलां वरिष्ठां अम्ब त्वां संततं वन्दे ।
या व्याकरोषि काले विद्वद्भिर्वेदतत्त्वादि ॥ २९१ ॥

वैदुष्यं वाण्याः सत्संपज्झर्यो यदीयवीक्षणतः ।
सिध्यन्त्यपि देवानां सा नः शरणं रमा देवी ॥ २९२ ॥

विपुलं श्रियो विलासं श्रद्धां भक्त्यादिकं देहि ।
अम्ब प्रसीद काले तव पादाब्जैकसेविनामिह नः ॥ २९३ ॥

केचित् प्राञ्चः कमलां प्राप्य हि शरणं विपत्काले ।
झटिति विधूनिततापाः सा मे देवी प्रसन्नास्तु ॥ २९४ ॥

मरकतकान्तिमनोहरमूर्तिः सैषा रमा देवी ।
पाति सकलानि काले जगन्ति करुणावलोकाद्यैः ॥ २९५ ॥

भागीरथीव वाणी तव नुतिरूपा विराजते परमा ।
इह मातर्यद्भजनं सर्वेषां सर्वसंपदां हेतुः ॥ २९६ ॥

कलशपयोदधितनये हरिप्रिये लक्ष्मि मातरम्बेति ।
तव नामानि जपन् सन् त्वद्दासोऽहं तु मुक्तये सिद्धः ॥ २९७ ॥

निखिलचराचररक्षां वितन्वती विष्णुवल्लभा कमला ।
मम कुलदैवतमेषा जयति सदाराध्यमान्यपदकमला ॥ २९८ ॥

सर्वजगन्नुतविभवे संततमपि वाञ्छितप्रदे देवि ।
अम्ब त्वमेव शरणं तेनाहं प्राप्तसर्वकार्यार्थः ॥ २९९ ॥

कमले कथं नु वर्ण्यस्तव महिमा निगममौलिगणवेद्यः ।
इति निश्चित्य पदाब्जं तव वन्दे मोक्षकामोऽहम् ॥ ३०० ॥

त्वामम्ब बालिशोऽहं त्वचमत्कारैर्गिरां गुम्भैः ।
अयथायथक्रमं हि स्तुवन्नपि प्राप्तजन्मसाफल्यः ॥ ३०१ ॥

इति श्रीकमलात्रिशती समाप्ता

## ८४. कमलाष्टकम्[1]

न्यङ्कावरातिभयशङ्काकुले धृतदृगङ्कायतिः प्रणमतां
शङ्काकलङ्कयुतपङ्कायताश्मशितटङ्कायितस्वचरिता ।
त्वं कालदेशपदशङ्कातिपातिपतिसंकाशवैभवयुता
शं काममातरनिशं कामनीयमिह संकाशयाशु कृपया ॥ १ ॥

आचान्तरङ्गदलिमोचान्तरङ्गरुचिवाचां तरङ्गगतिभिः
काचाटनाय कटुवाचाटभावयुतनीचाटनं न कलये ।
वाचामगोचरसदाचारसूरिजनताचातुरीविवृतये
प्राचां गतिं कुशलवाचां जगज्जननि याचामि देवि भवतीम् ॥ २ ॥

चेटीकृतामरवधूटीकराग्रधृतपेटीपुटार्घ्यसुमनो-
वीटीदलक्रमुकपाटीरपङ्कनवशाटीकृताङ्गरचना ।
खेटीकमानशतकोटीकराब्जजजटाटीरवन्दितपदा
या टीकतेऽब्जवनमाटीकतां हृदयवाटीमतीव कमला ॥ ३ ॥

स्वान्तान्तरालकृतकान्तागमान्तशतशान्तान्तराघनिकराः
शान्तार्थकान्तवकृतान्ता भजन्ति हृदि दान्ता दुरन्ततपसा ।
यां तानतापभवतान्तातिभीतजगतां तापनोदनपटुं
मां तारयत्वशुभकान्तारतोऽद्य हरिकान्ताकटाक्षलहरी ॥ ४ ॥

[1] Edited from the MS. No. 72850 (not included in the D. C. as it was noticed after the preparation of the D. C.) The MS. has neither title nor colophon. The conjectural title is given because it imitates the *Ambāṣṭaka* of Śaṃkarācārya (or Kālidāsa, see D. C. No. 132-5).

यां भावुका मनसि संभावयन्ति भवसंभावनापहृतये
त्वं भासि लक्ष्मि सततं भाव्ययदुद्भवनसंभावनादिविधये ।
जम्भारिसंपदुपलम्भादिकारणमहं भाव्यमङ्घ्रियुगलं
संभावये श्रुतिषु संभाषितं वचसि संभाष्य तस्य तव च ॥ ५ ॥

दूरावधूतमधुधारागिरोच्चकुचभारानताङ्गलतिका-
साराङ्गलिप्तघनसारार्द्रकुङ्कुमरसा राजहंसगमना ।
वैराकरस्मरविकारापसंसरणवाराशिमग्नमनसः
श्रीराविरस्तु धुरि ताराय मे गुरुभिरारधिता भगवती ॥ ६ ॥

श्रीवासधूपकनदावासदीपरुचिरावासभूपरिसरा
श्रीवासदेशलसदावापकाशरदभावाभकेशनिकरा ।
श्रीवासुदेवरमणी वामदेवविधिदेवाधिपावनपरा
श्रीवासवस्तुनरदेवादृतस्तुतिसभावा मुदेऽस्तु सुतराम् ॥ ७ ॥

भाषादिदेवकुलयोषामणिस्तवनघोषाञ्चितस्वसविधा
दोषाकुले जगति पोषाकुला सपदि शेषाहिशायिदयिता ।
दोषालयस्य मम दोषानपोह्य गतदोषाभिनन्द्यमहिमा
शेषाशनाहिरिपुशेषादिसंपदविशेषान् ददातु विभवान् ॥ ८ ॥

[इति श्रीकमलाष्टकं समाप्तम् ]

## ८५. महालक्ष्मीदण्डकः[1]

केशवसूरिकृतः

मन्दारमालाञ्चितकेशभारां मन्दाकिनीनिर्झरगौरहाराम् ।
वृन्दारिकावन्दितकीर्तिपारां वन्दामहे मां कृतसद्विहाराम् ॥ १ ॥

जय दुग्धाब्धितनये जय नारायणप्रिये ।
जय हैरण्यवलये जय वेलापुराश्रये ॥ २ ॥

जय जय जनयित्रि वेलापुराभ्यन्तरप्रस्फुरत्स्फारसौधाञ्चितोदारसालान्तरागारखेलन्मुरारातिपार्श्वस्थिते । क्लृप्तविश्वस्थिते । चित्ररत्नोज्ज्वलद्रत्नसानूपमप्रत्नसौवर्णकोटीरकान्तिच्छटाचित्रिताच्छाम्बरे । देवि दिव्याम्बरे । फुल्लसन्मल्लिकामालिकाप्रोल्लसन्नीलभोगीशभोगप्रतीकाशवेण्यर्धचन्द्रालिके । वल्गुनीलालके । केशसौरभ्यलोभभ्रमत्स्थूलजम्बूफलाभालिमालासमाकर्षणेहोत्पतन्मौलिवैडूर्यसंदर्शनत्रस्तलीलाशुकालोकजातस्मिते । देवजातस्तुते । ईश्वरीशेखरीभूतसोमस्वयोत्सादनाभ्युत्सुकत्वच्छिरःसंश्रितप्राप्तनित्योदयब्रध्नशङ्काकरस्वर्णकोटीरसंदर्शनानन्दितस्वीयताताङ्कारोहणाभीप्सुलब्धान्तिकार्कात्मजानिर्झराशङ्कनीयान्तकस्तूरिकाचित्रके । वार्धिराट्पुत्रिके । मान्मथश्यामलेक्ष्वात्मधन्वाकृतिस्निग्धमुग्धाद्भुतभ्रूलताचालनारब्धलोकालिनिर्माणरक्षिण्यसंहारलीलेऽमले । सर्वदे कोमले । स्वप्रभान्यक्कृते स्वानुगश्रुत्यधःकारिणीकान्तिनीलोत्पले बाधितुं वागताभ्यां श्रवःसंनिधिं लोचनाभ्यां भृशं भूषिते । मञ्जुसंभाषिते । किंचिदुद्बुद्धचाम्पेयपुष्पप्रतीकाशनासास्थितस्थूलमुक्ताफले । दत्तभक्तौघवाञ्छाफले । शोणबिम्बप्रवालाधरद्योतविद्योतमानोल्लस-

[1] Based on the single MS. No. VB 1194. The author must be the same as Keśavadeśika saluted by Rāmānujadeśika in the *Ṣaḍānanadaṇḍaka* (*Stotrasamuccaya*, vol. I, pp. 16-21). Both these works are written by the same hand one after the other in the MS.

द्दाडिमीबीजराजिप्रतीकाशदन्तावले । गत्यधःकृतसदन्तावले । त्वत्पतिप्रेरितत्वष्टृ-सृष्टाद्भुतातीद्धभस्मासुरत्रस्त दुर्गाशिवत्राणसंतुष्टतद्दत्तशीतांशुरेखायुगात्मत्वसंभावना-योग्यमुक्तामयप्रोल्लसत्कुण्डले । पालिताखण्डले ॥ १ ॥

अयि सुरुचिरनव्यदूर्वादलभ्रान्तिनिष्पादकप्रोल्लसत्कण्ठभूषानिबद्धाय-तानर्घ्यगारुत्मतांशुप्रजापात्यसारङ्गनारीस्थिरस्थापकाश्चर्यकृद्दिव्यमाधुर्यगीतोज्ज्वले । मञ्जुमुक्तावले । अङ्गदप्रोतदेवेन्द्रनीलोपलत्विट्छटाश्यामलीभूतचोलोज्ज्वलस्थूल-हेमार्गलाकारदोर्वल्लिके । फुल्लसन्मल्लिके । ऊर्मिकासंचयस्यूतशोणोपलश्रीप्रवृद्धारुण-च्छायमृद्वङ्गुलीपल्लवे । लालितानन्दकृत्सल्लवे । दिव्यरेखाङ्कुशाम्भोजचक्रध्व-जाद्यङ्कराजत्करे । संपदेकाकरे । कङ्कणश्रेणिकाबद्धरत्नप्रभाजालचित्रीभवत्पद्मयुग्म-स्फुरत्पञ्चशाखद्वये । गूढपुण्याशये । मत्पदाब्जोपकण्ठे चतुःपूरुषार्था वसन्त्यत्र मामाश्रयं कुर्वते तान् प्रदास्यामि दासाय चेत्यर्थकं त्वन्मनोनिष्ठभावं जगन्मङ्गलं सूचयद् वा वराभीतिमुद्राद्वया व्यञ्जयस्यङ्गपाणिद्वयेनाम्बिके । पद्मपत्राम्बके । चारुगम्भीरकंदर्पकेल्यर्थनाभीसरस्तीरसौवर्णसोपानरेखागतोत्तुङ्गवक्षोजनामाङ्कित -स्वर्णशैलद्वयारोहणार्थेन्द्रनीलोपलाबद्धसूक्ष्माध्वसंभावनायोग्यसद्रोमराज्याढ्यदेहे र-मे । का गतिः श्रीरमे । निष्कनक्षत्रमालासदृक्षाभनक्षत्रमालाप्रवालस्रगेकावली-मुख्यभूषाविशेषप्रभाचित्रिताच्छोत्तरासङ्गसंछिन्नवक्षोरुहे । चञ्चलागौरि हे । केलि-कालक्वणत्किङ्किणीश्रेणिकायुक्तसौवर्णकाञ्चीनिबद्धस्फुरत्पट्टनीव्याढ्यशुक्लाम्बरे । भा-सिताशाम्बरे । पुण्डरीकाक्षवक्षःस्थलीचर्चितानर्घ्यपाटीरपङ्काङ्कितानङ्गनिक्षेपकुम्भ-स्तने । प्रस्फुरद्गोस्तने ॥ २ ॥

गुरुनिबिडनितम्बबिम्बाकृतिद्राविताशीतरुक्स्यन्दनप्रोतचन्द्रावलेपोत्करे । स्वर्णविद्युत्करे । भोः प्रयच्छामि ते चित्ररत्नोर्मिकां मामिकां सादरादेह्यदो मध्यमं भूषयाद्यैतया द्रष्टुमिच्छाम्यहं साध्विति त्वत्पतिप्रेरितायां मुदा पाणिनादाय धृत्वा रहः केशवं लीलयानन्दयः सप्तकीवास्ति ते । सप्तलोकीस्तुते । चित्ररोचिर्महामे-

खलामण्डितानन्तरत्नस्फुरत्तोरणालंकृतश्लक्ष्णकंदर्पकान्ताररम्भातरुद्वन्द्वसंभावनीयो -रुयुग्मे रमे। संपदं देहि मे। पद्मरागोपलादर्शबिम्बप्रभाच्छायसुस्निग्धजानु . . . द्वये शोभने चन्द्रबिम्बानने। शम्बरारातिजैत्रप्रयाणोत्सवारम्भजृम्भन्महा-काहलीडम्बरस्वर्णतूणीरजङ्घे शुभे। शारदार्कप्रभे। हंसराजक्वणद्धंसबिम्बस्फुरद्धं-सकालंकृतस्पष्टलेखाङ्कुशाम्भोजचक्रध्वजव्यञ्जनालंकृतश्रीपदे। त्वां भजे संपदे। नम्रवृन्दारिकाशेखरीभूतसौवर्णकोटीररत्नावलीदीपिकाराजिनीराजितोत्तुङ्गगाङ्गेयसिंहा-सनास्तीर्णसौवर्णबिन्द्वङ्कसौरभ्यसंपन्नतल्पस्थिते। संततस्वःस्थिते। चेटिकादत्त-कर्पूरखण्डान्वितश्वेतवीटीदरादानलीलाचलद्दोर्लते। दैवतैरर्चिते। रत्नताटङ्ककेयूरहा-रावलीमुख्यभूषाच्छटारञ्जितानेकदासीसभावेष्टिते। देवताभिष्टुते। पार्श्वयुग्मोल्ल-सच्चामरग्राहिणीपञ्चशाखाम्बुजाधूतजृम्भद्रणत्कङ्कणाभिष्टुताभीशुसच्चामराभ्यां मुदा वीज्यसे। कर्मठैरिज्यसे। मञ्जुमञ्जीरकाञ्च्युर्मिकाकङ्कणश्रेणिकेयूरहारावली-कुण्डलीमौलिनासामणिद्योतिते। भक्तसंजीविते॥ ३॥

जलधरगतशीतवातार्दिता चारुनीरन्ध्रदेवालयान्तर्गता विद्युदेषा हि किं भूतलेऽपि स्वमाहात्म्यसंदर्शनार्थं क्षमामास्थिता कल्पवल्ल्येव किं घस्रमात्रोल्लसन्तं रविं रात्रिमात्रोल्लसन्तं विधुं संविधाय स्वतो वेधसातुष्टचित्तेन सृष्टा सदाप्युल्लसन्ती महादिव्यतेजोमयी दिव्यपाञ्चालिका वेति सद्भिः सदा तर्क्यसे। त्वां भजे मे भव श्रेयसे। पूर्वकद्वारनिष्ठेन नृत्यद्वराकाररम्भादिवाराङ्गनाश्रेणिगीतामृताकर्णना-यत्तचित्तामराराधितेनोच्चकैर्भार्गवीन्द्रेण संभाविते। नो समा देवता देवि ते। दक्षिणद्वारनिष्ठेन सच्चित्रगुप्तादियुक्तेन वैवस्वतेनार्च्यसे। योगिभिर्भाव्यसे। पश्चिमद्वारभाजा भृशं पाशिना स्वर्णदीमुख्यनद्यन्वितेनेड्यसे। सादरं पूज्यसे। उत्तरद्वारनिष्ठेन यक्षोत्तमैर्नम्रकोटीरजूटैर्मनोहारिभी राजराजेन भक्तेन संभाव्यसे। योगिभिः पूज्यसे। लक्ष्मि पद्मालये भार्गवि श्रीरमे लोकमातः समुद्रेशकन्येऽच्युत-प्रेयसि . . . स्वर्णशोभे च मे चेन्दिरे विष्णुवक्षःस्थिते पाहि पाहीति यः प्रातरुत्थाय भक्त्या युतो नौति सोऽयं नरः संपदं प्राप्य विद्योतते। भूषणद्योतिते।

दिव्यकारुण्यदृष्ट्याशु मां पश्य मे दिव्यकारुण्यदृष्ट्याशु मां पश्य मे दिव्यकारुण्यदृष्ट्याशु मां पश्य मे। मां किमर्थं सदोपेक्षसे नेक्षसे त्वत्पदाब्जं विना नास्ति मेऽन्या गतिः संपदं देहि मे संपदं देहि मे संपदं देहि मे। त्वत्पदाब्जं प्रपन्नोऽस्म्यहं सर्वदा त्वं प्रसन्ना सती पाहि मां पाहि मां पाहि मां पद्महस्ते त्रिलोकेश्वरि प्रार्थये त्वामहं देवि तुभ्यं नमो देवि तुभ्यं नमो देवि तुभ्यं नमः ॥

सत्रिषष्ट्युत्तरशतरगणाढ्यश्चतुर्दलः।
महालक्ष्मीदण्डकोऽयं कृतः केशवसूरिणा ॥

[इति महालक्ष्मीदण्डकः संपूर्णः]

## ८६. लक्ष्मीस्तवः[1]

सुधासारासारादपि बहुलसारा कुवलया-
वलीदामश्यामा शुभविभवसामस्त्यजननी।
मम श्रेयो भूयो वितरतु सुधासिन्धुदुहितुः
कृपातुङ्गापाङ्गोल्लसदसमशृङ्गारलहरी ॥ १ ॥

[1] Based on the MS. No. 73483 (D. C. No. 2453). The name of the author of this Stotra is not mentioned in the MS. but he refers to (Surapuram) Aṇṇayācārya (see verse 98). The other work in the MS., written by the same hand, is the *Kṛṣṇabhāvaśataka* (*Kṛṣṇasaṃsmaraṇam*, D. C. No. 1467) by Bukkapaṭṭaṇam Veṅkatācārya. He may be the author of this Stotra also.

जगत्स्रष्टा स्रष्टा श्रुतिभिरनवद्यप्रसृतिभि-
श्चतुर्मुख्या मुख्यानपि गुणलवांस्ते कवयितुम् ।
रमे नेष्टामीष्टां तव शिशुरयं त्वत्करुणया
ग्रहीतुं स्तम्बोऽपि प्रभवति सितां सैकतयुताम् ॥ २ ॥

महिम्नः पारं ते द्रुहिणपुरजित्तारकजितः
क्षमन्ते वानन्ते जननि न चतुष्पञ्चषमुखाः ।
यदि त्वन्ये मन्ये जलधिपतिकन्ये कवयितुं
यतेरन्नीशेरन् मशकशिशुकाः सिन्धुगिलने ॥ ३ ॥

नृपान् नावंनावं भवजलधिनावं तव कृपां
रमे नीचाः केचिज्जहतु भुवि निर्विण्णरसनाः ।
किमेतैर्जाह्नव्यास्तटभुवि खनद्भिः प्रवणता-
दुरापोद कूपं त्वयि कृतभरोऽहं तदधुना ॥ ४ ॥

तव स्तोत्रं चित्रं त्रिभुवनपवित्रं जिगदिषोः
समन्ताज्जृम्भन्ताममलवदने पद्मसदने ।
नटद्द्राषायोषाकरकमलभूषापरिकन-
न्मणीभूषोन्मेषप्रतिमगतयो मे भणितयः ॥ ५ ॥

श्रियामेकं मूलं द्विरदगतिनम्रं त्रिविधचि-
त्कलापं संसेव्यं सविनति चतुष्पञ्चषमुखैः ।
प्रदीपत्सप्ताश्वं प्रभवतु सदाष्टापदपदं
महालक्ष्म्याश्चित्ते मम नवलसद्यौवनदशम् ॥ ६ ॥

सरस्वत्या सत्या वलमथनसत्याप्यसुलभं
भवद्दास्यं पश्यञ्जिगदिषति यस्ते तदुपमाम् ।

अयं निम्बं बिम्बं विवदिषति पद्मे सुरतरोः
समं लोष्टं स्पष्टं हि कलयिषतेऽष्टापदगिरेः ॥ ७ ॥

त्वया जुष्टस्तुष्टः कमपि खलु दुष्टं बलिभुजं
समत्रास्त त्रस्तं परमपुरुषो रुक्मिणमपि ।
तवासांनिध्येऽहन् दशवदनचैद्यादिचपला-
नितीदं ते लक्ष्मि प्रथयति घृणैकप्रवणताम् ॥ ८ ॥

जगद्रक्षाशिक्षाप्रभृतिमहिमानं भगवति
त्वदेकान्तं प्राहुः कतिचिदपरे त्वत्पतिगतम् ।
नयापेतैरेतैरलमखिलवेदान्तकलनै
प्रतीमस्तन्मिश्रं खलु शुभवतोरम्ब भवतोः ॥ ९ ॥

तवानल्पं तल्पं फणिकुलपतिस्तद्रिपुपते-
रुरोरत्नं प्रत्नं तव भजति भद्रासनगतिम् ।
त्रयो वेदाः सौधा जननि कमलं सद्म विमलं
भवद्भूमा भूमावहह न पदं वाङ्मनसयोः ॥ १० ॥

महावृत्ते यत्ते सकरुणकटाक्षप्रसरणात्
पदं स्वं स्वं प्राप्ता हरिहरविरिञ्चिप्रभृतयः ।
जगच्चित्तायत्ता जगदुदयसत्तावगतयो
यतस्तत् त्वं तत्त्वं परमिति रमे निश्चिनुमहे ॥ ११ ॥

नवोन्मीलन्नीलोत्पलदलकुलश्यामलतमः -
कटाक्षस्ते हस्ते कलयति नरं यं भगवति ।
अयं रङ्गद्भृङ्गोत्कटकरटिगण्डस्थलगल-
न्मदस्यन्देऽलिन्दे चरति चरितं तेऽद्भुतमिदम् ॥ १२

तव भ्राता त्राता कुवलयगरिम्णस्तव पिता
महासत्त्वो धत्ते भुवि भुवनसाम्राज्यमखिलम् ।
क्षमः सृष्टौ पुष्टौ पतिरपि निधृष्टौ च जगतां
रमे साम्राज्यं ते क इह विवरीतुं प्रभवति ॥ १३ ॥

रणे शक्तिं युक्तिं नयविधिषु रक्तिं गुणगणे
गुरौ भक्तिं सक्तिं कृतफणितिसूक्तिं च सदसि ।
वहन्तोऽपि क्ष्मापा दधति लघुतां त्वद्विमुखिता-
स्त्वया दृष्टो दुष्टोऽप्यखिलगुणजुष्टोऽम्ब भवति ॥ १४ ॥

कृपावर्षोत्कर्षादमरशिखिहर्षं विदधतं
परव्योम्नि स्फीतं सकलफलदं कृष्णजलदम् ।
श्रिता विद्युल्लेखा चलनरहिता नित्यमहिता
रमा तृष्णापूर्त्यै वसुविसरमाकल्पयतु नः ॥ १५ ॥

प्रवालश्रीरोष्ठे कचभुवि घनालिद्युतिरुरो-
भुवौ कुम्भावब्जप्रथितकदनं चापि वदनम् ।
कटी गोत्राभोगास्पदमहिमहीभृत्तटवस-
त्युरःसद्मे (पद्मे) भगवति ततस्त्वं जयमयी ॥ १६ ॥

मुखे चान्द्रीं शार्ङ्गीं गलभुवि च मैनीं नयनयो
रुचिं सौधीं वाचि त्रिवलिषु च वैचीं प्रपदयोः ।
पदोः कौर्मीं पाद्मीं नखततिषु मौक्तीं च दधती
व्यनक्षि श्री(रब्धे)र्लयमनुवहन्ति स्त्रिय इति ॥ १७ ॥

सुमोल्लासो हासो भ्रमरनिकरास्तेऽम्ब चिकुरा
मधुद्रोणी वाणी भगवति करौ पल्लववरौ ।

भुजौ शाखाभेदौ नखमुखततिः कोरकतति-
स्ततो मन्येऽम्ब त्वां मनसि ललितां कल्पलतिकाम् ॥ १८ ॥

त्रं वक्त्रं वचनरचने माधवरुचिः
कचः कृष्णश्चक्रप्रकृतिमपि रोमालिरयते ।
वलग्ने संलग्ना हरिविहृतिरित्यम्ब सततं
पदं धत्तां चित्ताम्बुरुहि मम ते विष्णुमयता ॥ १९ ॥

सुधांशुस्ते वक्त्रं सुमविलसितं मन्दहसितं
सुधा वाणी वेणी सुरपतिमणीभङ्गसरणिः ।
सुषिर्नाभिर्बाहू सुरतरुलतासुन्दरतमौ
सुवर्णप्रागल्भ्यं तव जननि गात्रेषु जयति ॥ २० ॥

त्रिवृद्भावं पञ्चीभवनमपि च क्वापि समये
यतः स्वैरं नारायणि तव बरीभर्ति कबरी ।
तमो नाम श्यामं त्रिगुणसमतायां यदुदितं
जगन्मातस्तत् ते तदिति हृदि तां निश्चिनुमहे ॥ २१ ॥

सुधासान्द्रश्चन्द्रस्तव सुमुखतां प्राप्य नतदृक्
चकोरीनारीणां मुदमपि धुरीणां रचयति ।
इति श्रुत्वा मत्वा स्वयमपि तदाशिश्रयिषयो-
दितां श्यामां श्यामां तव किरणयामाम्ब कबरीम् ॥ २२ ॥

किरीटाद्रेर्नीलोपलफलकसोपानपटली
शिरःपश्चाच्चक्रद्युमणितनुसंजातयमुना ।
श्रियं दद्यादुद्यत्सदनकमलामोदवशव-
र्त्यलिश्रेणी वेणी रतिपतिकृपाणी जननि ते ॥ २३ ॥

मणीभूषावेषावरुणहरिणाङ्कौ निगलितौ
तमःश्रेणी वेणीधृतमकृत सीमन्तमभितः ।
जगन्मातर्यत्तत्तिमिरनिगलोपाङ्गवलय-
प्रणालीवाराली भवदलकपाली विजयते ॥ २४ ॥

गरादुग्रे व्यग्रे गलति गतभीः कन्तुरुदधे-
र्जनित्रीभिःस्त्रीभिर्जितवलभिदाप्त्वेन्द्रजिदिति ।
प्रथां कृष्णं जिष्णुस्तव जननि वेणीकपटतो
ऽसृजन्मायामेघावलिमुदितशैलीमुखरुचिम् ॥ २५ ॥

स्फुरच्चूडारत्नद्युमणियमुनायाः कचतते-
स्त्रिकाकुल्या श्रोणीगिरियुगलगा तेऽम्ब जयतु ।
कलां कालोन्मीलत्कनककदलीकन्दलदला-
न्तरालीनां लीनामिव पिदधती या विलसति ॥ २६ ॥

महानीलावाले मृगमदरजोलेशकलिते
जलं काले काले रविदुहितुरालिप्य च यदि ।
तमालं पुष्णीयुर्यदि च परिपुष्येत् स कमले
तदा तन्मञ्जर्यः कथमपि दधीरन् कचरुचिम् ॥ २७ ॥

अहेर्जेता बर्हिःस्थितिभृदिनजातानुकृतिरु-
त्पलादेशः पाशी मरुदधिपतिः श्रीदविभवः ।
शिवः स्रष्टा कृष्णस्तव कचभरोऽष्टावपि दिशां
पतीन् मूर्तीस्तिस्रः स्वयमनुविधत्ते भगवति ॥ २८ ॥

हलाघाताद् भीतां शरणमुपयातां विनिहितां
त्वया पश्चाद्भागेऽवितुमकरुणोद्यत्करुणया ।

रवेः कन्यां मन्यामह उदधिजे तेऽम्ब कबरीं
भयात् कृष्णा वेणीत्यनुकलितनामान्तरधृतिम् ॥ २९ ॥

सुवासध्रीचीभिर्वचनरचनाभिर्निचुलितं
लसद्भासोल्लासच्छविशमितनम्रार्तितिमिरम् ।
शशाङ्कं शङ्कन्तां कतिचन मुखं तेऽम्बुजसखं
न चैतत् संमन्ये स हि जननि जन्मादिकुटिलः ॥ ३०

जले स्थित्वा कृत्वा मुखमभिमुखं चापि सवितु-
र्भ्रमद्भृङ्गारावच्छलमनुजपाप्याप नलिनी ।
न ते वक्त्रच्छायालवमपि निजे स्मेरजलजे
विधौ वैरं स्वैरं वहति न तपोऽप्यम्ब भवति ॥ ३१ ॥

सदादर्शस्फूर्तिं दधति वदने तेऽब्जसदने
क्व चन्द्रस्योन्मेषः सम इति कथा तस्य वितथा ।
जगन्मातस्तस्मात् स बहुलकृशस्तावकमुख-
श्रियै धत्ते तप्तं भवशिरसि गीर्वाणशिरसि ॥ ३२ ॥

सदा नासामुक्ताभरणमिषरोहिण्युपगतं
पतिं दृष्ट्वा वक्रं परुषरुषमेकत्र मिलिताम् ।
वहन्तीं तारालीमिव सवुसृणां मौक्तिकमयीं
ललन्तीं श्रीकान्ते तव जयतु सीमन्तसरणिः ॥ ३३ ॥

मणीताटङ्काश्वच्छुरणकचनीलावरणस-
द्रदश्रेणीमुक्ताच्छुरणसुपथे मन्मथरथे ।
वचोविज्ञेयाश्वे तव मुखमये पार्श्वकलितं
कपोलद्वन्द्वं ते मुकुरयुगमम्बामनुमहे ॥ ३४ ॥

जयन् मूर्तीस्तिस्रस्तिसृभिरिषुभिर्मध्यफलके
लिखन् रोमालीं ते जयलिपिमुदीर्णत्रिवलिकाम् ।
स्मरः श्रान्त्यानेनाननशशिनि दत्तौ सकमलो-
त्पलारोपौ रोपौ किमु जननि दृग्भ्रूयुगमिदम् ॥ ३५ ॥

महासौरभ्यं ते मुखनलिनमास्वादितुमणो-
रणीयस्त्वादास्ते किमु तिलकरूपेण स हरिः ।
भवत्फाले नो चेन्निरतिशयसौरभ्यभरिते
प्रकर्षः कस्तूर्याः क इव भविता लोकजननि ॥ ३६ ॥

भवद्वक्त्रच्छायां कलयितुमिहाम्भोजशशिनौ
तपस्तप्त्वा रात्रिंदिवमनुकल पुष्करतटे ।
गतावर्थानर्थौ परिमलकलङ्कप्रसरणा-
दतो हेतोरेतौ मम जननि वैरं कलयतः ॥ ३७ ॥

न सौरभ्यं चन्द्रे न च सरसिजे रम्यममृतं
सदादर्शश्चाम्भोरुह[वन]विहारैकरसिके ।
विधत्ते कस्तूरीतिलककलने सेवकविधिं
ततस्ते वक्त्रेन्दोरुपमितिपदं व्योमकमलम् ॥ ३८ ॥

वृषोल्लासावासं तव वदनचन्द्रं भ्रमरकै-
र्वृतं साम्यं प्रेप्सन्नलिकुलयुतः सन्नुपगतः ।
ततो राकाचन्द्रो मम जननि दैवज्ञविबुधै-
रिहोच्चोऽयं नीचोऽयमिति विवृणद्भिः परिहृतः ॥ ३९ ॥

हरेर्वक्षोभागे कमलदलमाल्यभ्रमभृतः
श्रयद्दारिद्र्याद्र्युद्दलनशतकोटिप्रसृतयः ।

दद‍न्तां कल्याणं मम जलधिकन्ये जननि ते
कटाक्षाः कालिन्दीकुवलकुलकूलंकषरुचः ॥ ४० ॥

कुरङ्गस्ते रङ्गेश्वरि नयनशृङ्गारविजितो
जहच्चन्द्रं चन्द्रं शरणमगमत् त्वन्मुखरुचा ।
स चापास्तो हस्तार्पितमकृत शंभोर्मृगमतः
स्फुरत्स्वैश्वर्येष्वष्टसु चरति भिक्षां पशुपतिः ॥ ४१ ॥

दृशोस्ते साम्येप्सुर्भगवति चकोरैः सह मृगो
भवद्वक्त्रामित्रं ह्यकृत शरणं शीतकिरणम् ।
इति द्वेषादास्ये मृगमदमदास्तस्य रुधिरं
ध्रुवं नो चेत् का स्यादुपकृतिरिहात्यन्तसुरभौ ॥ ४२ ॥

श्रुतिश्रेणीवेणीकुसुमरसपाणिंधय(म)पद-
प्रवालश्रीर्नीलोत्पलविसदृशौ तावकदृशौ ।
शिशू खञ्जन्या इत्यनुमनुमहे यत्प्रसरणा-
स्पदे नृत्यन्त्य(न्ये)सदवधयः सिद्धिनिधयः ॥ ४३ ॥

पुरा पारावारे स्फुरदमृतसारे समुदितः
सरोजानां द्रोग्धा जननि भवती चेत्यश‍ृणवम् ।
करोषि त्वं दृष्ट्या कलितदरहासप्रसरया
परं सिन्धूनिन्दून् भगवति सुधैकात्मवपुषः ॥ ४४ ॥

दशाकृत्या सत्त्वं नखरमिषतोऽलक्तकमिषा-
द्रजो रक्तं व्यक्तं भगवति पदो तेऽश्रयदिति ।
तमोऽक्ष्णोरर्केन्द्वोः शरणमगमत् कज्जलमयं
न चेत् त्वद्दृष्टानां कथमिव तमोऽम्ब प्रसरति ॥ ४५ ॥

धनुर्मीनौ भ्रूदृग्युगमजनिषातां समकरौ
कुचौ कुम्भौ श्रोणी कटकमिथुनाभां कलयतः ।
कचेऽस्त्युन्मेषोऽलिश्रित उदधिकन्ये कृतधिय-
स्तदेते सूक्ष्मत्वाज्जननि न-वलग्नं विवृणुते ॥ ४६ ॥

स्वदृक्शीताशीतांश्वनुकलननेमस्फुटमुखो-
न्मरन्दस्ते हस्ते सितकमलकोशोऽतिललितः ।
महालोकानीकात्मकशिशुपरीपोषधृतस-
त्पयःशङ्काशङ्कां दधदखिलपुष्टिं दिशतु नः ॥ ४७ ॥

फणावत्पर्यङ्कप्रणयिनि तवापाङ्गतुलना-
गुणाकाङ्क्षं स्वेन्दीवरमुपनतार्थं कलयितुम् ।
स्वबिम्बावालान्तर्न्यधित सुधया पुष्टिमयता-
मिति स्तोकालोकास्तदुपगतिमङ्कं विवृणते ॥ ४८ ॥

त्रयो भागाः प्राप्ता इति दनुसुतानां दिविषदां
सुधायां तत्र द्वावसुरविषयावन्तरदधात् ।
दृशोस्ते मोहिन्याकृतिरुदधिकन्ये तव पति-
स्तवापाङ्गासङ्गात् तदिह जगदानन्दमयते ॥ ४९ ॥

जगुः प्रत्नं रत्नं कतिचिदपरे विद्रुमदलं
परे बिम्बं निम्बच्छदनसदृशभ्रूर्भगवति ।
तवोष्ठं वक्त्रेन्दोः सविधभुवि भक्त्यौषधिकुलैः
परिन्यस्तं मन्ये ललितमुपदापल्लवमिति ॥ ५० ॥

पयःपारावारे फणिनि शयितायाः सदयितं
सुधाभिर्गण्डूषानुषसि रचयन्त्या रुचिलवाः ।

तवोष्ठाद्ये मिश्राः पयसि त इमे शैलक्ष्णणाद्
बहिर्वेलं न्यस्ता जननि दधते विद्रुमपदम् ॥ ५१

पुरा पारावारं मथितवति वर्गे दिविषदां
विभज्यादान्मोदादमितममृतं यो भगवति ।
जिताविद्यां विद्यामपि कलयतां योऽमृतमदा-
दहो बिम्बोष्ठात् ते मधुरममृतं वष्टि स हरिः ॥ ५२ ॥

सुधां प्रेप्सन्नब्धेः सलिलमुपगृह्याम्बुदमयैः
करैर्मुक्तासारो यदमृतमुपादत्त तरणिः ।
बलाद् दर्शे गृह्णात्युदधितनये तत्सुहृदि ते
मुखे न्यासं कर्तुं रदनवसनान्तस्त्वदनुजः ॥ ५३ ॥

हरिः साक्षाल्लाक्षालसितमलिकं वीक्ष्य भवतीं
भवद्रोषोन्मेषां यदरुणिमलीलामपदिशन् ।
प्रसन्नां त्वां कृत्वा समरमत मायी त्वदधरः
स मे दद्यादद्यानुपमविभवानम्ब जगताम् ॥ ५४ ॥

इयं साक्षान्मोक्षस्तुतिररुणबिम्बा त्वदधरा-
दुपर्यास्ये चन्द्रे स्मितमहसि साङ्के तिलकतः ।
ललन्ती मुक्तालिर्जननि कनकाकल्पतटिता
श्रितं वेणी श्रेणीकृतिवरुणलोकं प्रसजति ॥ ५५ ॥

स्वयं सारग्राही हरिरुदधिसंबन्धनविधा-
वधाद् रम्भादिस्त्रीः सुरपतिगृहे त्वां तु जगृहे ।
व्यभाङ्क्षीन्निःसारं त्वमृतममरेभ्यस्त्वदधरे
सुधां रस्यां पास्यञ्जननि मम सौभाग्यजननि ॥ ५६ ॥

सरोजावासिन्या रदनवसनस्य प्रतिमितौ
गिरां भावं तावद् विरमयत शृङ्गारकवयः ।
शरच्चन्द्रे यावद् दिनदिनमनुप्लुत्य सुधया
प्ररोहन् पुण्ड्रेक्षुः फलति फलमारुण्यभरितम् ॥ ५७ ॥

मम श्रेयो भूयो वितरतु सुधासिन्धुदुहितु-
र्महीयान् बिम्बोष्ठः प्रणमदभयालापमधुरः ।
यमुत्प्रेक्षांचक्रे हरिरिह रदैर्मौक्तिकवृते
सुधापारावारे स्मितवपुषि चिन्तामणिरिति ॥ ५८ ॥

जपाटोपादाप्तं(त्तं) भवदधरबिम्बेन मधुजि-
त्पदं मुक्ता जातास्तदनुकलनादेव च रदाः ।
अदःसांगत्येन स्मितमविरतोल्लासभरितं
न चित्रं यन्मातर्भजति सुमनःसंपदमिति ॥ ५९ ॥

जगन्मान्ये मन्ये जननि जलजातप्रहरणो
जगन्नेतुश्चेतोमृगमृगयुरेतन्निपतितम् ।
भवन्नाभीमध्ये निजहृदि विदन्नाक्षिपदुप-
र्यहो कुन्तं रोमावलिवपुषमैन्दीवरमिति ॥ ६० ॥

रतिः कामश्चेमावसिततमरोमालिशिलया
मिते मध्यक्षेत्रे प्रथमरससस्यान्यतनुताम् ।
यतो वक्षोऽन्तस्तत्कलितफलराशिद्वयमिदं
जगन्मातः स्फीतस्तनयुगलरूपेण लसति ॥ ६१ ॥

फणीशानक्षोणीधररमणमन्दारविटप-
द्रुजालम्बामम्ब त्रिभुवनसमुज्जीवनलताम् ।

तनूं विद्मः पद्मे तव यदुदितोरोजफलयोः
पदं रोमालीदोहदमृदुलधूमालिरयते ॥ ६२ ॥

ग्रहोत्कर्षामर्षात् तव नयनदाक्षिण्यविरहं
विदन्निन्दुः पत्नीः प्रपदनपरास्तेऽम्ब पदयोः ।
नखाकृत्या कृत्वा तव सुमुखतां प्रापदिति त-
त्कलङ्कं रोमालीं त्वमसि किमु गर्भीकृतवती ॥ ६३ ॥

द्विजानां राजायं तव वदनतामेत्य महितां
विधाय स्वं भास्वत्करगतमरिद्वन्द्वमनिशम् ।
बलाद् गृह्णन् रोमावलिमयतमःशृङ्खलिकया
न्यबध्नादम्बास्या वलय इव नाभिर्विलसति ॥ ६४ ॥

जयश्रीरोमालीं स्मरनृपकनत्कञ्चुकपटी-
कुटीबद्धां रज्जुं कतिचिदसितां तेऽभिदधताम् ।
कुचौ लीलाशैलौ प्रतिरति रतीशोपकलितां
क्रमोन्मूलं नीलोपलसरणिमेनां मनुमहे ॥ ६५ ॥

प्रभोः पञ्चास्त्रस्य स्तनगिरिजुषः केतनकृते
ध्रुवं नीतो नाभीसरससरसः कोऽपि मकरः ।
यदङ्घ्र्यग्रालम्ना नयनसमयाकृष्टवितता
लताशैवालीव स्फुरति तव रोमालिरनघे ॥ ६६ ॥

स्मरः सत्या रत्या सह कुचगिरिप्रान्तभुवि ते
चरन् बन्धं कंचिद् विहरति किमीप्सुर्हरजितम् ।
सुतं यस्मादम्बापतति निभृता बन्धरततत्-
पृथुश्रोणीवेणी स्फुरति तव रोमावलिमयी ॥ ६७ ॥

जगद्रक्षाशिक्षाद्यनुगुणगुणालानगलितं
हरेश्चित्तं मत्तद्विपमुरुकुचाद्र्यन्तरगतम् ।
पथा नेतुं चेतोभवभृतिभृता पाणिविधृता
रमे रोमालिस्ते ध्रुवमजनि नीलोत्पलसृणिः ॥ ६८ ॥

रमे नेयं नाभिः स्मरविरचितावालवलयो
न रोमाली तस्मिन्नुपजनितशृङ्गारलतिका ।
स्तनौ नेमौ तस्यां रथपदविहंगद्वयमिदं
मुखेन्दोरालोकान्निभृतमिव भीत्या विलसति ॥ ६९ ॥

असंख्याका लोकास्तव जननि पाका इति कृपा-
मपारां बिभ्राणा समुदमुदयन्ती जलनिधेः ।
सहामूभ्यां चाभ्याममृतकलशाभ्यां पृथुलसत्-
कुचाभ्यामध्यष्ठाः किमु विपुलवक्षो भगवतः ॥ ७० ॥

हरे रक्षोदक्षोत्करहृदयविक्षोभकरव-
स्फुरद्वीरो नैवान्वभवमिह शृङ्गारमिति किम् ।
तपस्तप्त्वा शङ्खो जननि गलतामेत्य किल ते
ययौ शृङ्गारित्वं मुरहरकराश्लेषवशतः ॥ ७१ ॥

तव स्थानं पद्मं तव च तनयः पद्मवसतिः
करे धत्ते चेतत् तदिदमिह कर्णाग्रनिहितम् ।
वितन्यात् पैशुन्यं स्वविषय इतीन्दुर्द्विरुदगात्
समुक्ताताटङ्काकृतिरवहितस्ते श्रवणयोः ॥ ७२ ॥

सुधासध्रीचीनप्रचुरवचनालीविरचना-
नदीपारावारीभवदधरबिम्बान्तिकभुवोः ।

तरङ्गाग्रन्यस्ता क्रमिकनवमुक्तावलिरिव
स्फुरन्ती लक्ष्मि स्तान्मम शुभकरी दन्तसरणिः ॥ ७३ ॥

धृतोन्मेषस्त्वेष प्रसभमरुणोऽम्ब त्वदधरो
वृषातन्द्रश्चन्द्रो मुखमुदधिकन्ये बुधनुते ।
जगन्मान्यश्रोणीकटकगुरुभावः परमनु-
ग्रहोच्चत्वं कस्ते जननि विवरीतुं प्रभवति ॥ ७४ ॥

त्वया पद्मं सद्मीकृतमिति तदाश्रित्य सततं
मृणाली त्वद्बाहुद्वयमृदुलतां काममयताम् ।
न तत् तस्याः शस्यं भवति जडसंसक्तविहृते-
रिति ज्ञात्वा हंसास्तव गतिविदस्तां विलुनते ॥ ७५ ॥

जगत्कर्ता भर्ता तव तदखिलं च त्वदुदरा-
दुदीतं तच्चाणु ध्रुवमिति विदन् गौतममुनिः ।
जगन्मूलं हे श्रीरणुमनुतैतन्न हि मृषा
हरिश्चाप्यस्य स्त्रीं चरणपरमाणोरजनयत् ॥ ७६ ॥

गतेयत्तं चित्तं प्रणतजनताया घटयितुं
भवद्राग भोगौ भगवति करौ ते मनुमहे ।
ययोरेकैकस्मिन्नपि विशदयन्त्यङ्गुलिलता-
प्रपञ्चः पञ्चानामिह सुरतरूणां श्रित इति ॥ ७७ ॥

यदालम्बा अम्ब प्रचुरवृजिनाश्चापि न पुन-
र्भवासङ्गं संगृह्णत इति वदन्ति श्रुतिगणाः ।
प्रपन्नौ तावेतौ तव मृदुकरौ संततपुन-
र्भवासङ्गं रङ्गक्षितिरमणशृङ्गारगृहिणि ॥ ७८ ॥

बिभीमः पापेभ्यो न वयमवयन्तस्तव दयां
यतस्ते हस्ताब्जे जननि वरविश्राणनविधौ ।
समाह्वानं कुर्वन् खलखलखलेत्येवमभयं
भवत्या भक्तानां कथयति कनत्कङ्कणगणः ॥ ७९ ॥

मनोवाक्चेष्टाभिर्मम जननि शेषाचलपतेः
प्रतीपं नैवापः कथमपि कदाचित् क्वचिदिति ।
व्रतं श्रुत्वा सत्यापितमपि स म(त)त्याज हि कुतो
यतो मुक्ताहारं त्वमुपरि कुचेऽलंकृतवती ॥ ८० ॥

स्मितक्षीराम्भोधिः समजनि मुखेन्दोर्विकसितो-
त्पलाभ्यां ते दृग्भ्यामपि समुदितापाङ्गयमुना ।
स्तनाद्री प्रासूत स्तबकव(द)सौ रोमलतिका
रमे चित्रं कार्यात् करणजनिरेषा वपुषि ते ॥ ८१ ॥

सशर्वाणी वाणी मघवशुकवाणीमुखनम-
त्सुरीवेणीश्रेणीपटुनटनमाणिक्यकटकम् ।
मनोवृत्त्या धृत्या मम समनुसृत्यापि तव पत्-
सरोजं दध्रे श्रीः किमु कमलिनीभावविभवम् ॥ ८२ ॥

महापद्मे पद्मे सततकृतसद्मे यदुदिते
मुकुन्दः शङ्खेनाभ्यषिचदलिनीलोपरकृते ।
प्रपद्ये पादाब्जं मकरकलितं कच्छपयुतं
तदेतद् यत्सङ्गाद् भवति नवनिक्षेपविभवः ॥ ८३ ॥

प्रभोः प्राभून्नाभेर्नभ इति बभाषे भगवती
श्रुतिः साभून्मध्यान्नभस इति बाभाति हृदि नः ।

हृदश्चन्द्रः सान्द्रोऽभवदिति तयाभाणि कमले
नखालिस्ते चन्द्रान्नियुतमयुतं चापि सृजति ॥ ८४ ॥

कदाचित्कैलासे जननि विचरन्त्यां त्वयि पद-
श्रिया शोणेनायं रजतगिरिरेषोऽरुण इति ।
भ्रमाद्रुद्रेऽन्याद्रिं जिगमिषति ते मन्दहसितं
पुना रौप्यं कृत्वारुणदिति रमे संशृणुमहे ॥ ८५ ॥

महीयस्यां यस्यां पृथगवित गानोपनिषदा
नमः शर्वे खर्वेतरविनयपूर्वं रचयति ।
रमे चूडाचुम्बी शशधरशिशुः सा च तटिनी
नखानां तां कान्ति क इव विवरीतुं प्रभवति ॥ ८६ ॥

कला कापि त्वं श्रीः किसलयपदा कीर्तिमहिता
कुमार्यब्धेः कूर्मप्रपदलसिता केशवयुता ।
त्विषां कोटिः कैशिक्यसि सपदि ते कौतुकमयः
कटाक्षः कल्याणीः करकनकधाराः किरतु नः ॥ ८७ ॥

[1]ध्रुवं धावंधावं धृतपरिभवं संप्रति भवं
नवं नावंनावं नमदनुभवं तेऽम्ब विभवम् ।
अवं जीवंजीवं शशभृदुपजीवन्तमिव मां
कटाक्षः कल्याणीः करकनकधाराः किरतु नः ॥ ८८ ॥

वरं वारंवारं प्रपदनमरं रञ्जितवतां
धुरं धारंधारं प्रधणभुवि रंरंस्यस इति ।

[1] The following is written and struck off by the scribe:
ध्रुवं नावंनावं धुतपरिभवं तेऽम्ब विभवं नवं नावंनावं नमदनुभवं स्वीकृतलवम् ।

स्तुते पारं रङ्गेश्वरि तव कटाक्षोऽचिरमसून्
द्विषां छिन्दन् भिन्दन्नपि भसितसात्कृत्य रमताम् ॥ ८९ ॥

स्वयं ध्यायंध्यायं सुगुणसमुदायं रसमयं
वयं पायंपायं सदमृतमयं श्रीरिति पदम् ।
प्रहृष्यामः सायंतनविकचमल्लीरसमिलत्-
कबर्यम्बालम्बं सधनमविलम्बं वितर नः ॥ ९० ॥

नमन्मुक्ताकारं मम हृदयशुक्तौ जननि ते
शरीरं तं मन्त्रं स्वयमपुनरुक्तं बहु जपन् ।
प्रपद्ये सद्यस्त्वां तुरगरथहस्त्यादिबहुलां
तवापाङ्गस्तुङ्गस्थिरकनकधारां दिशतु नः ॥ ९१ ॥

सुधासिन्धौ संधौ फणिपफणमाणिक्यमहसां
परीरम्भारम्भानुभवसुभगं भावुकहृदा ।
लसद्वृत्याः पत्या श्रिय उदयदानन्दकलिकः
कटाक्षः कल्याणीं कलयतु स नः काञ्चनखनिम् ॥ ९२ ॥

जहन्मूल्यं माल्यं सकुतुकमलौल्यं वितरितु-
र्हरेर्योऽभूद्योऽभादपि चिपिटमुष्टिं वितरतः ।
यदालम्बः शम्बप्रहरणवतः कोऽपि विभवः
कटाक्षोऽसौ लक्ष्म्याः पृथुलधनधारा दिशतु नः ॥ ९३ ॥

श्रियां दातुर्जेतुः श्रितसुरतरोरण्णयगुरोः
स्वयं जिह्वासिंहासनमधिगता मे भगवती ।
मनोमूर्तिः श्रीस्ते मनसि विलसन्ती विगलित-
प्रपन्नार्तिस्फूर्तिर्वसुविसरपूर्तिं दिशतु नः ॥ ९४ ॥

शिशोरिष्टां चेष्टां जगति जननीबालिकलनां
लता पद्मस्येव त्वसि मम कृपावारिधिमयी ।
वचःपूजाव्याजाद्दचितमपचारं मम रमे
क्षमित्वा कल्याणीं करकनकधारां वितर नः ॥ ९५ ॥

अतिप्रत्ने रत्ने . . . . . रत्नैः सुरुचिरैः
कृतोन्मेषा भूषाः सुतटिद्विशेषा धृतवती ।
स्फुरन्ती पद्मान्तर्मम कनकवर्षाणि किरती
रमेथास्त्रायेथा हरिपुरुषकारैकरसिके ॥ ९६ ॥

त्रयीसौधे गाधे शठमथनगाथेष्टसरणौ
स्थिरश्रीमद्रामानुजमुनिवचःपुष्पशयने ।
शयाना तन्वाना भगवत इहानन्दमयतां
कटाक्षैर्वीक्षेथाः प्रपदनयुतां दासजनताम् ॥ ९७ ॥

कृतानन्दस्यन्दं कनकजलधाराजलधरं
कटाक्षं लक्ष्मि त्वं कलय मयि कारुण्यविवशा ।
विषक्तो यस्यासौ करितुरगरत्नालिभरित-
स्त्रयाणां लोकानां दिशति वरसाम्राज्यविभवम् ॥ ९८

[इति श्रीलक्ष्मीस्तवः समाप्तः]

## ८७. लक्ष्मीस्तोत्रम्[1]

(वाधूल)राघवकविकृतम्

श्रिया युक्तः श्रीमान् स्थितिजनिलयादीन् कलयते
जगत्या नैवं चेत् स्वमपि न च पुष्णात्यशरणः ।
अतस्त्वां तत्तादृग्दुरधिगमनिःसीमविभवां
भजामो रुद्राणीपरिचितपदाम्भोजयुगलीम् ॥ १ ॥

अयि श्रीस्त्वं पूर्वं जनकतनयीभूय जगतां
प्रभो रामस्याभूः प्रियसहचरी कोसलपतेः ।
तथापुष्यः कृष्णं नतजननि रुक्मीन्द्रतनया
विना त्वां गोविन्दः प्रभवति जगत्यां क च न वा ॥ २ ॥

त्वया दृष्टः शंभुस्त्रिपुरमथनायालमरुण-
क्षपानाथावाङ्कां शिरसि निदधानावुदयतः ।
पिबन् भक्त्या पद्मे तव चरणनिर्णेजनजलं
फणीनामीशानः परिवहति मूर्ध्ना वसुमतीम् ॥ ३ ॥

त्वदीये नम्रार्तिक्षपणनिपुणे पादकमले
वहन् मूर्ध्ना जम्भद्विषदवति गीर्वाणनगरीम् ।
त्वदीयभ्रूभङ्गाज्जनयति जगत् पङ्कजजनि-
स्त्वया दृष्टः को वा जननि पदमुच्चैर्न भजते ॥ ४ ॥

हरेर्वक्षःपीठीमनुकलमुपास्थाय विपुलां
सुधासारैः श्रीमच्चरणनलिनान्तर्विगलितैः ।

[1] Based on the MS. No. 70707 (D. C. No. 2454).

प्रसिञ्चन्त्यञ्चन्ती कुमुदवनमम्भोजनिलये
कथं वा नाधत्से मयि पदयुगं नम्रजननि ॥ ५ ॥

पुरा ते पादाब्जप्रसृमरपरागान् स्वमकुटे
वहन् रुद्रोऽप्यद्रेर्दुहितरमुदारामुदवहत् ।
शरण्ये लोकानां मुनिजनवरण्ये तनुभृता-
मपाङ्गस्ते भूयादतुलकुशलायाब्जनिलये ॥ ६ ॥

पुरारेस्त्वां पुष्पैः सह गिरिजयाराधितवतो
गलं गत्वा घोरं गरमभवदिन्दूपलमिव ।
अतः श्रीः श्रुत्यन्ताः प्रणिजगुरुदारांस्तव गुणा-
नियत्तानिर्मुक्ताननवधिकवात्सल्यजलधे ॥ ७ ॥

शरज्ज्योत्स्नाकान्तिस्तुहिनकरबिम्बाभवदना
कुचाभ्यामानम्रा कुवलयदलस्पर्धिनयना ।
दधाना हस्ताभ्यां नलिनयुगलं कापि महसां
ततिर्विष्णोर्वक्षःस्थलमधिवसन्ती विजयते ॥ ८ ॥

सचन्द्रे सोष्णांशौ विरमति विरिञ्चे सहशिवे
कृतान्ते जातान्ते भजति च विरामं सुरपतौ ।
अनूपे सर्वस्मिन् वटदलतले त्वत्पतिरसौ
मुकुन्दः सानन्दं विहरति रमे कल्पविरमे ॥ ९ ॥

पयःपारावारे मणिविरचिते मण्टपतले
प्रतीहारे वाणीधरणिधरकन्यापरिवृते ।
मणीपीठे तस्मिन् कनकमयपद्मे स्थितिजुषो
हरेरङ्कस्थां त्वां कतिचन भजन्ते कृतधियः ॥ १० ॥

परव्योम्नः पत्युः प्रियमहिषि ते पादयुगली-
निदिध्यासा यस्मिन्नुदयमयते लोकजननि ।
तदैवास्मै देवि प्रदिशसि सुरेन्द्राभिलषितं
पदं त्राणीं चापि प्रचुरकरुणासारभरिताम् ॥ ११ ॥

वदन्ति त्वां सन्तो हुतभुजमधिष्ठाय सकलं
समश्नन्तीं होत्रा हुतमनुसवं श्रीर्भगवति ।
पुराणा वाण्येवं प्रणिगदति बिम्बे दिनपतेः
समं पत्यानर्घाण्यनुदिनमिहार्घ्याणि भजते ॥ १२ ॥

त्वमात्मा त्वं कालस्त्वमसि च परं ज्योतिरुदधि-
स्त्वमक्ष्णोरानन्दस्त्वमसि च परं ब्रह्ममहिषी ।
चिदात्मा त्वं लक्ष्मीर्जगदिह तवापाङ्गचलनं
समालम्ब्य श्रीमान् सृजति भगवानत्त्यवति च ॥ १३ ॥

गुणैः पूर्णे निर्णेजनजलपवित्रत्रिभुवने
जरादूरीभूते जननि निगमान्तस्तवपदे ।
नतानां स्तोतॄणाममितफलविश्राणनचणौ
वयं वैकुण्ठेशप्रणयिनि भजामस्तव पदौ ॥ १४ ॥

क्षमाचारौ दूरे गुरुचरणभक्तिस्तु सुतरां
तथा धर्मेऽप्यास्था तव चरणचिन्ता मयि कुतः ।
तथाप्यङ्गापाङ्गानयि कलय लक्ष्मीस्तव दयां
प्रशंसन्त्युद्दामां यमनियमवन्तो मुनिजनाः ॥ १५ ॥

तवापाङ्गैर्दृष्टो जननि करुणार्द्रैर्भवति यः
स वेत्ता शास्त्राणां स खलु कुलशीलादिसहितः ।

स दर्पं कान्दर्पं शमयति च दान्तेन मनसा
प्रशास्त्येनामीशश्चतुरुदधिवेलां वसुमतीम् ॥ १६ ॥

अदोषः को वास्ते जन इति रुषं शेषशयितुः
परिष्वङ्गैस्तुङ्गैः प्रशमयसि कारुण्यभरिते ।
मदीयानार्द्रानप्यधिकमपराधान् भगवति
क्षमस्वेमां लक्ष्मि स्तुतिमपि ममाङ्गीकुरु मुदा ॥ १७ ॥

कदारण्ये पुण्ये कमलवनवापीपरिवृते
तरूणां छायाभिस्तरणिकिरणान्तर्धिनि तले ।
वसन् मातर्लक्ष्मीः कमलवनवासैकरसिके
प्रसीदेति क्रोशन् कलुषमपनेष्ये परिणतम् ॥ १८ ॥

इति श्रीभूसारंपुरमधिवसन् **राघवकविः**
कुले वाधूलाख्ये महति जनिमान् लोकविनुते ।
सतां सेवी सत्वाधिक**रघुवराचार्य**तनयात्
समुत्पन्नो लक्ष्म्याः स्तुतिभिरधुनानर्च चरणौ ॥ १९ ॥

[इति श्रीलक्ष्मीस्तोत्रं समाप्तम्]

## ८८: श्रीपादस्तवः[1]

भूमेरामोदनाय प्रदिशति निभृतस्मेरमीक्षाविशेषं
शेषोपान्तस्थितायाः कमितरि भगवत्यन्तरुज्जृम्भमाणम्

Edited from the single MS. No. VB 280.

कोपं सापत्न्यलभ्यं विगमयितुमुपादाय हस्तैश्चतुर्भि-
नीतं तेन स्वमूर्ध्नि प्रदिशतु कुशलं पादपद्मं रमायाः ॥ १ ॥

रेखाभिर्यत् सिराभिः किसलयमिव कल्पद्रुमस्योपगूढं
लेखानां शेखरत्वं गतमत इव यद्यच्च शोणप्रकाशम् ।
पादद्वन्द्वं रमायाः प्रणतजनमनःकामितार्थप्रदं तद्
दारिद्र्यं दारयेन्नः कुसुमसमरुचा भासमानं नखाल्या ॥ २ ॥

सिक्तं रक्तैरिव स्वैर्वपुरुरगपतेर्विश्वरूपस्य विष्णो-
रध्यासोद्भूतसंमर्दनदलितकृतच्छिद्रचर्मान्तवान्तैः ।
शोणीकुर्वन्ति भासः शशरुधिरनिभा यत्प्रसूताः प्रसूत्यै
भूयाद् भूयः समृद्धेर्जलनिधिजनुषः पादपङ्केरुहं नः ॥ ३ ॥

आदावामृश्यमानं किसलयरुचिभिः केशवस्याङ्गुलीभिः
पश्चादाचुम्ब्यमानं मृदु मृदुमुखपद्मेन शोणाधरेण ।
भूयश्चालिङ्ग्यमानं दृढतरमुरसि प्रापयद्भ्यां कराभ्यां
भूयाद् भूत्यै चिरं नः शिरसि विनिहितं पादपद्मं रमायाः ॥४॥

क्षिप्तं क्षीराम्बुराशेस्तटभुवि पयसां फेनपुञ्जावृतायां
केलीसंचारकाले भसितपरिवृताङ्गारवद् यद् विभाति ।
तन्नः संमृज्यमानं नमदमरवधूमौलिभिः पादपद्मं
श्रीदेव्याः श्रेयसे स्तात् प्रणतिगतिभयापद्रवत्कान्तहस्तम् ॥ ५ ॥

वक्षस्यक्षीणरागं निदधति दयिते कुङ्कुमेनेव लिप्तं
कुर्वन्ती कान्तिरेतत् सुभगयतितरां यत्प्रसूता नितान्तम् ।
मूर्धन्येनं च रत्नाम्बररचितशिरश्छादनेनेव गुप्तं
भार्गव्या भर्गमुख्यैः परिणुतमवतात् पादपद्मं सदा नः ॥ ६ ॥

अब्धेर्जाता प्रवालावलिरिति मुनिभिर्दैवतैस्तत्र संस्था-
दुत्पन्ना कल्पवृक्षादिति दितितनयैर्बाडवाग्नेः शिखेति ।
नानानद्यागमासादितमरुणपयोजन्यमित्यन्यलोकै-
रव्यादुत्प्रेक्ष्यमाणं पदकमलयुगं पद्मजायाश्चिरं नः ॥ ७ ॥

श्रीपादस्तवमेतद् ये पठन्ति प्रातरुत्थिताः ।
अष्टैश्वर्यं भवेत् तेषामाश्वेव हि न संशयः ॥ ८ ॥

[इति श्रीश्रीपादस्तवः समाप्तः]

## ८९. अष्टदिक्पालस्तुतिः[1]

(कौशिक)रङ्गनाथसूरिविरचिता

तत्रादौ विधातारं प्रति प्रणामः—

आरूढं स्कन्धदेशं मृदुसितविपुलं राजहंसस्य यूनो
भारत्यान्वास्यमानं सनकमुखमहायोगिबृन्दैरमन्दैः ।
श्रीमत्तत्त्वावबोधे विनिहितमतिभिः सेव्यमानं विरिञ्चिं
सेवे प्रस्थानकालोचितनवविजयश्रेयसे भूयसे नः ॥ १ ॥

वासवं प्रति प्रणामः—

सार्धं शच्याधिरूढं धवलघनतनुं नागमैरावताख्यं
दम्भोलिं दैत्यदम्भप्रशमनमुरुदोस्तम्भदेशे दधानम् ।

[1] Based on a recent transcript No. TR 804 (D. C. No. 3052).

रम्भाद्याधूतवालव्यजनजपवनाङ्कूरलोलांशुकाग्रं
सेवे नाकाधिनाथं सपदि बहुविधश्रेयसे भूयसे नः ॥ २ ॥

अग्निं प्रति प्रणामः—

आसीनं लोहितांसे मणिफलकनिभे स्वाहया छाययेव
ज्वालैः स्वैः सप्तसंख्यैः प्रशमिततिमिरं काममष्टासु दिक्षु ।
शक्तिं व्यक्तौजसं स्वां रिपुमददमने धारयन्तं कराग्रे
सेवे वैश्वानरं तं सपदि बहुविधश्रेयसे भूयसे नः ॥ ३ ॥

यमं प्रति प्रणामः—

साकं प्राकम्पमाने गिरिशिखर इव श्यामलाभिख्यदेव्या
ऽदभ्रे विभ्राजमानं महिषकुलपतौ सेव्यमानं च दूतैः ।
दण्डं ब्रह्माण्डभाण्डोद्दलनपटुतरं बाहुदण्डे दधानं
सेवे धर्माभिधं तं सुरमिह विविधश्रेयसे भूयसे नः ॥ ४ ॥

निर्ऋतिं प्रति प्रणामः—

तुङ्गत्वङ्गत्तुरङ्गं गतिरयविजितस्वान्तवाताण्डजेशं
दीर्घादेव्याधिरूढं करभुवि निशितप्रान्तकुन्तं वहन्तम् ।
राजानं नैर्ऋतानां परिवृतमभितो यातुधानप्रधानैः
सेवे प्रस्थानकालोचितनवविजयश्रेयसे भूयसे नः ॥ ५ ॥

वरुणं प्रति प्रणामः—

देव्याः श्रीकालिकाया भुजशिखरयुगव्यापृतोदग्रबाहुं
यानं मातङ्गयानं मकरमधिगतं वैरिनाशाय पाशम् ।
आबिभ्राणं कराग्रे जलचरनिवहैः सेव्यमानं जलेशं
सेवे प्रस्थानकालोचितनवविविधश्रेयसे भूयसे नः ॥ ६ ॥

वायुदेवं प्रति प्रणामः—

विद्यामध्येतुकामं किल रभसगतैः संनिकृष्टं कुरङ्गं
संप्राप्तं यानमङ्काश्रयणकुतुकिनीमञ्जनां रञ्जयन्तम् ।
पाणौ कुर्वाणमुच्चैर्ध्वजमपि च जगत्प्राणभूतं समीरं
सेवे प्रस्थानकालोचितनवविजयश्रेयसे भूयसे नः ॥ ७ ॥

कुबेरं प्रति प्रणामः—

सानन्दं चित्रलेखां विविधमणिमयैर्भूषणैर्भूषिताङ्गीं
निध्यायन्तं नितान्तं करतलकलितोद्दामकौक्षेयकं च ।
आरूढं यानमुच्चैर्नरमपि धनदं किंनरोपास्यमानं
सेवे प्रस्थानकालोचितनवविजयश्रेयसे भूयसे नः ॥ ८ ॥

ईशानं प्रति प्रणामः—

अन्यं संचारशीलं रजतगिरिमिव श्वेतमानं समन्ताद्
अध्यारूढं महोक्षं तुहिनगिरिसुताश्लेषदत्तावधानम् ।
सेनानीविघ्नराजप्रमथगणशतैः सेवितं शूलपाणिं
सेवे प्रस्थानकालोचितनवमहितश्रेयसे भूयसे नः ॥ ९ ॥

स्तुतिपठनफलम्—

इति कौशिकरङ्गनाथक्लृप्तां सुरनाथस्तुतिमन्वहं पठन् सन् ।
लभते परमां श्रियं धरायामिह तेषां कृपया विधूतदोषः ॥ १० ॥

इति श्री-अष्टदिक्पालस्तुतिः समाप्ता

# ९०. उपासनाष्टादशकम्[1]

अथ पूर्वोत्तरपीठिकासहितमुपासनाष्टादशकं विलिख्यते । तत्र पूर्वपीठिकाचतुष्टयम्—

परस्परविरुद्धत्वं ज्ञानोपासनयोरिह ।
वृथैवाशङ्कमानानामिदं किंचिन्मयोच्यते ॥ १ ॥

घटज्ञानेन मृन्नाशो मृज्ज्ञानेन घटाप्ययः ।
न विद्यते यतस्तस्मादाविरुद्धयं समीक्ष्यते ॥ २ ॥

तत्त्वज्ञानेन नोपास्तेर्हानिर्नोपासनादिना ।
ज्ञानस्य हानिरनयोराविरुद्धयं तथेक्ष्यताम् ॥ ३ ॥

अथ वक्ष्ये गुरुमरुत्पुरनाथकटाक्षतः ।
उपासनाष्टादशकं भक्तकर्णरसात्मकम् ॥ ४ ॥

पूर्वपीठिकाचतुष्टयं संपूर्णम्

निरंशभूतं परमार्थवस्तु ह्यनादिजीवस्थितमूढदृष्ट्या ।
तिरोहितं सत् कियदंशभागे बन्धस्य मोक्षस्य च भूमिरास्ते ॥ १ ॥

तदृष्ट्यभावेन हि बन्धलेशो मोक्षस्य वार्तापि परे द्वितीये ।
तथाप्यभिन्ना व्यजने मरुद्वन्माया समस्तं बत संतनोति ॥ २ ॥

अभिन्नमाया न करोति वस्तुस्वरूपनाशं क्वचिदप्यनीशा ।
अवस्तुवैचित्र्यकरीति यत् तत् सम्यग्विचारान्ननु वस्तुसिद्ध्यै ॥ ३ ॥

[1] Based on the single MS. No. 67160.

मोक्षस्थलोद्भूतविशुद्धसत्त्वाद् बन्धस्थलस्थायितमःप्रणाशः ।
भूयादतस्तादृशशुद्धसत्त्वतनोः सदोपासनया विमुक्तिः ॥ ४ ॥

उपासनालेशविवर्जितानां बहुश्रुतानामपि तत्त्वशास्त्रे ।
स्वात्मानुभूतिर्मुकुराङ्गनेव स्वरूपहीना ह्यवलम्बशून्या ॥ ५ ॥

अनावृतांशो न हि दृष्टिवेद्यः समावृतांशो मनसोऽप्यचिन्त्यः ।
अतो हि तद्ब्रह्म भजेन्मुमुक्षुर्विशुद्धसत्त्वावयवप्रदीप्तम् ॥ ६ ॥

विशुद्धसत्त्वांशवपुः प्रपञ्चे द्विधा विभात्यागममस्तकेड्यम् ।
अनन्तलीलास्पदमप्रतर्क्यं क्रमादपर्णाकमलाङ्गसङ्गम् ॥ ७ ॥

एकस्य विष्णोरवतारभेदे जयाजयौ संभवतः कदाचित् ।
तथैकदा शार्ङ्गिपिनाकिनोश्च जयाजयाद्याः प्रभवन्तु नाम ॥ ८ ॥

अन्योन्यमेकात्मकतां च लोके परस्परं पूजकपूज्यतां च ।
संप्राप्तयोः केशवचन्द्रमौल्योः को वा विजानाति महारहस्यम् ॥ ९ ॥

विष्णुः प्रहर्षं शिवपूजयैति शिवश्च विष्ण्वर्चनया प्रसादम् ।
अभ्येति चात्र श्रुतयः प्रमाणं तस्माद्धि तावन्तरभिन्नरूपौ ॥ १० ॥

तत्रैकमाश्रित्य परत्र निन्दां त्यक्त्वैव सम्यङ्मुदितान्तरङ्गः ।
तदीयलीलामृतपानतृप्तः कालं नयेदात्महिताभिलाषी ॥ ११ ॥

विटस्य कान्ताश्रवणादिकाले यथा मनस्तृप्तिमुपैति लोके ।
तथैव मोदं भगवत्कथायामवाप्य यस्तिष्ठति भक्तिभाक् सः ॥ १२ ॥

केचिद्धरिं सत्पुरुषा भजन्ते नितान्तकैवल्यनिधिं निकामम् ।
अन्ये पुनः केचन शंकरं तं महानुभावा मथितार्थमायम् ॥ १३ ॥

श्रुतावुभावेव महानुभावौ भक्तोत्तमौ यौ भजतोऽच्युतेशौ ।
अन्ये तदंशांशजफल्गुदेवान् मोहाद् भजन्ते खलु तुच्छकामाः ॥ १४ ॥

वयं तु शैवा अपि भस्मफाला रुद्राक्षपञ्चाक्षरधारिणोऽपि ।
भजामहेऽनन्यधियान्तरङ्गे गोपीविटाग्रेसरमेव नित्यम् ॥ १५ ॥

कर्माणि वर्धन्त्वथवा गलन्तु ज्ञानं निजृम्भत्वथवान्यथास्तु ।
श्रीवासुदेवे मम भक्तिरस्तु श्रीगोपिकालिङ्गनहृष्टचित्ते ॥ १६ ॥

ज्ञानस्य चोपासनया न हानिर्नोपासनायास्तु हतिः प्रबोधात् ।
इत्थं विचिन्त्याच्युतचन्द्रमौल्योर्धीमान् भजेदन्यतरं विमुक्त्यै ॥ १७ ॥

वेदान्तविद्याश्रवणादिगर्वं कर्मित्वयोगित्ववृथाभिमानम् ।
दूरे विसृज्यार्जुनसारथिं वा भजन्तु शिष्टास्त्रिपुरान्तकं वा ॥ १८ ॥

देहालम्बनमुन्मुच्य चिदानन्दोपलब्धये ।
विशुद्धसत्त्वस्यालम्बं विना चेत् स्यादधोगतिः ॥ १९ ॥

उपासनाष्टादशकामृताब्धावुदारचित्ताश्रितभक्तमत्स्याः ।
सदा निमज्जन्त्वितरे तु काकच्छटावदेव प्रलपन्तु मोघम् ॥ २० ॥

इत्युपासनाष्टादशकं संपूर्णम्

## ९१. गायत्र्यष्टकम्[1]

### शंकराचार्यविरचितम्

विश्वामित्रतपःफलां[2] प्रियतरां विप्रालिसंसेवितां
नित्यानित्यविवेकदां स्मितमुखीं खण्डेन्दुभूषोज्ज्वलाम् ।
ताम्बूलारुणभासमानवदनां मार्ताण्डमध्यस्थितां
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ १ ॥

जातीपङ्कजकेतकीकुवलयैः संपूजिताङ्घ्रिद्वयां
तत्त्वार्थात्मिकवर्णपङ्क्तिसहितां तत्त्वार्थबुद्धिप्रदाम् ।
प्राणायामपरायणैर्बुधजनैः संसेव्यमानां शिवां
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ २ ॥

मञ्जीरध्वनिभिः समस्तजगतां मञ्जुत्वसंवर्धनीं
विप्रप्रेङ्खितवारिवारितमहारक्षोगणां मृन्मयीम्[3] ।
जप्तुः पापहरां जपासुमनिभां हंसेन संशोभितां
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ ३ ॥

काञ्चीचेलविभूषितां शिवमयीं मालार्धमालादिकान्
बिभ्राणां परमेश्वरीं शरणदां मोहान्धबुद्धिच्छिदाम् ।
भूरादित्रिपुरां त्रिलोकजननीमध्यात्मशाखानुतां
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ ४ ॥

ध्यातुर्गर्भकृशानुतापहरणां सामात्मिकां सामगां
सायंकालसुसेवितां स्वरमयीं दूर्वादलश्यामलाम् ।

[1] Based on the single MS. No. 71209 (D. C. No. 2775).
[2] °यियां—MS. [3] मृण्मयीम्—MS.

मातुर्दास्यविलोचनैकमतिमत्खेटीन्द्रसंराजितां
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ ५ ॥

संध्यारागविचित्रवस्त्रविलसद्विप्रोत्तमैः सेवितां
ताराहीरसुमालिकां सुविलसद्रत्नेन्दुकुम्भान्तराम् ।
राकाचन्द्रमुखीं रमापतिनुतां शङ्खादिभास्वत्करां
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ ६ ॥

वेणीभूषितमालकध्वनिकरैर्भृङ्गैः सदा शोभितां
तत्त्वज्ञानरसायनज्ञरसनासौधभ्रमद्भ्रामरीम् ।
नासालंकृतमौक्तिकेन्दुकिरणैः सायंतमश्छेदिनीं
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ ७ ॥

पादाब्जान्तररेणुकुङ्कुमलसत्फाल[द्यु]रामावृतां
रम्भानाट्यविलोकनैकरसिकां वेदान्तबुद्धिप्रदाम् ।
वीणावेणुमृदङ्गकाहलरवान् देवैः कृताञ्छृण्वतीं
गायत्रीं हरिवल्लभां त्रिणयनां ध्यायामि पञ्चाननाम् ॥ ८ ॥

हत्यापानसुवर्णतस्करमहागुर्वङ्गनासंगमान्
दोषाञ्छैलसमान् पुरंदरसमाः संच्छिद्य सूर्योपमाः ।
गायत्रीं श्रुतिमातुरेकमनसा संध्यासु ये भूसुरा
जप्त्वा यान्ति परां गतिं मनुमिमं देव्याः परं वैदिकाः ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं
गायत्र्यष्टकं संपूर्णम्

## ९२. गुरुराजसप्ततिः[1]

(पैङ्गनाडु)गणपतिशास्त्रिविरचिता

विज्ञानैकवदान्यं विबुधैर्मान्यं कलेशमूर्धन्यम् ।
श्रीमत्त्यागाधीशं गुरुं मखीशं भजेतरामनिशम् ॥ १ ॥

यागानन्दितदेवो रागादीनामगोचरस्वान्तः ।
वागालयाननाब्जस्त्यागाधीशाभिधो गुरुर्जयति ॥ २ ॥

गदितपदवाक्यमानं गलदभिमानं गभीरमहिमानम् ।
शिष्याणां दयमानं गुणभूमानं गुरुं भजेऽमानम् ॥ ३ ॥

तरुणाविवेकशैले स्वरुणा तुल्या कवित्वविधिकल्या ।
गुरुणा विहिता सुहिता करुणा काचित् करोति मयि खेलाम् ॥ ४ ॥

न्यस्ते विष्टरवर्ये ध्वस्तेतरदुर्मतस्थबुधचर्ये ।
शस्ते गुरुवरचरणे हस्ते कृत्वा कृतार्थ एषोऽहम् ॥ ५ ॥

आशाजाङ्घिककीर्तिः पाशापोहावलोकनिजमूर्तिः ।
ईशावतार एको धीशाली देशिकेश्वरो जयति ॥ ६ ॥

द्वैतमतध्वंसकरं कैतवरहितस्वभावजनसुलभम् ।
रैततिनिराशहृदयं नैतमुदारं जहामि गुरुनाथम् ॥ ७ ॥

धीकीलालजबन्धौ मूकीभूतप्रतीपबुधघूके ।
एकीभूतदयौघे कोकीभूयान्मनो गुरुवरार्के ॥ ८ ॥

[1] Edited from the MS. No. PM 255 (D. C. No. 2888).

अविरतहविरास्वादनघुमुघुमितश्वासलम्पटा भृङ्गाः ।
इति मतिवितारिगलगतरुद्राक्षं देशिकेन्द्रमद्राक्षम् ॥ ९ ॥

ध्यानारूढमहेशाज्ज्ञानानन्दामृतौघघनभावात् ।
दूना परमतविबुधात् का नाम कथा परत्र गुरुवर्यात् ॥ १० ॥

त्रेतागारनिविष्टं पीतात्मीयावबोधसुखपूरम् ।
धूताखिलदुरितौघं पातास्म्यक्ष्णा कदा नु परमगुरुम् ॥ ११ ॥

द्राक्षेक्षुमाधुरीणामाक्षेपकसूक्तिकर्मसु धुरीणम् ।
भ्रूक्षेपदासभूपं वीक्षे विज्ञानशेवधिं कमपि ॥ १२ ॥

भासितसिततरभसितभ्राजितवपुषे कवित्वविभवपुषे ।
विदितर्क्सामकयजुषे विनतिर्गुरवे दयासमुदयजुषे ॥ १३ ॥

दम्भादिदूरहृदयं पुंभावापन्नशारदासदृशम् ।
संभावयामि चेतसि तं भासा तुलितचन्द्रशिशुमौलिम् ॥ १४ ॥

वरतरबहुनिजशिष्यं सुरगुरुलज्जाकरस्ववैदुष्यम् ।
विदलितधीकालुष्यं हृदये कलयन् परं गुरुमतुष्यम् ॥ १५ ॥

विद्या खलु देयानां हृद्या तदमूं वितीर्य सार्थाख्यः ।
अद्यासौ गुरुमुख्यश्छिद्यादस्मासु दृष्टिवैमुख्यम् ॥ १६ ॥

कुण्ठितकुमतगविद्वत्कुलगर्वं कूलमुद्वहत्कृपौघम् ।
कुन्दावभासयशसं कुर्वे हृदये गुरुं कुटिलदूरम् ॥ १७ ॥

मोहं विभिद्य सम्यक् सोऽहंबुद्ध्या शिवं हृदि भजन्तम् ।
देहं च विस्मरन्तं कोऽहं कुक्षिंभरिर्गुरुं स्तोतुम् ॥ १८ ॥

शान्तं शिवमिव भान्तं परिहृतजान्तं पलायितध्वान्तम् ।
कान्तं विमलस्वान्तं भजे नितान्तं बुधीकृतभ्रान्तम् ॥ १९ ॥

दासायितावनीपं जितनलिनीपं यशोभृतद्वीपम् ।
ध्वान्तनिवहप्रदीपं धुतनततापं भजे कमपि दीपम् ॥ २० ॥

अज्ञानाप्रतिहरणं यज्ञानां सुहितहिमकराभरणम् ।
विज्ञानार्थिषु शरणं प्रज्ञानघनं प्रणौमि गुरुचरणम् ॥ २१ ॥

दोषानुषङ्गदूरा भूषा सर्वज्ञमूर्ध्नि शुचिवेषा ।
एषा काचन नितरां तोषायास्माकमस्तु शशिलेखा ॥ २२ ॥

परितः परिहृतपङ्को भरितो भसितावदातरुचिभारैः ।
वर्जितगर्जितलेशो वर्षति बोधं बलाहकः कोऽपि ॥ २३ ॥

मण्डितचम्पकगहनं खण्डिततमभेदवादिजनकथनम् ।
दण्डितमदादिषडरिं पण्डितमणिमानतोऽस्मि परमगुरुम् ॥ २४ ॥

स्पर्शितभुजङ्गभीतिर्दर्शितषड्दर्शनस्ववाग्रीतिः ।
विविधं मेघं विघ्नन् विद्याकेकी विराजते कोऽपि ॥ २५ ॥

प्रतिमतबुधकुलजैत्रं प्रथितच्छात्रं प्रसादभृतनेत्रम् ।
प्रयततमदिव्यगात्रं प्रज्ञापात्रं भजे कलुषदात्रम् ॥ २६ ॥

विद्यापारावारं विमतविदारं विधेयसुखभारम् ।
भूमौ कृतावतारं गौरीदारं भजे गुरुमुदारम् ॥ २७ ॥

विलसति न बुधः पुरतः कविरपि कश्चित् तथाग्रतो यस्य ।
चित्रचरित्रः सोऽयं कुत्रचिदास्ते गुरुर्महति देशे ॥ २८ ॥

यशसा जितविधुबिम्बं वेदान्ताम्भोजसारलोलम्बम् ।
वृजिनव्रजगिरिशम्बं विद्यालम्बं भजे तमविलम्बम् ॥ २९ ॥

विज्ञानौघनिकायं विनष्टमायं विशुद्धजनगेयम् ।
कलितमखसंप्रदायं गुणसमुदायं गुरुं रसादायम् ॥ ३० ॥

विहिताम्नायत्राणान् विरचितविद्याख्यरत्नविश्राणान् ।
कानपि वाणीप्राणान् कलये भसितं सितं सुबिभ्राणान् ॥ ३१ ॥

निजमहिमभरितलोकं नितरामुद्यत्तमोपहालोकम् ।
विमतभिदाधृतयत्नं विद्यारत्नं विराजते किमपि ॥ ३२ ॥

स्फारीभवत्स्ववाचा दूरीकृतदुर्मतस्थदुष्टगजः ।
पुण्ये चम्पारण्ये खेलति विज्ञानकेसरी कश्चित् ॥ ३३ ॥

गुरुरपि कविताशाली शुचिरपि भास्वान् विभूतिभरितोऽपि ।
संपदि निरीहचेताः संवित्पूरः प्रकाशते कोऽपि ॥ ३४ ॥

कलिना मर्महतानां कर्मवराणां स कश्चिदालम्बः ।
विलसति चम्पकविपिने वितरन् ज्ञानामृतं विनम्राणाम् ॥ ३५ ॥

शिष्टानां सहकृत्वा शितया बुद्ध्या तु जीवसहयुध्वा ।
श्रुतिनिवहपारदृश्वा राजति यज्वा स मे मतावृज्वाम् ॥ ३६ ॥

विबुधजनैरपि मृग्यं विशिष्य भूपालकार्हणायोग्यम् ।
विनतजनमात्रभोग्यं विधिमहिलाया विराजते भाग्यम् ॥ ३७ ॥

भिन्दानमखिलविशयं विन्दानं विविधशास्त्रवाक्यार्थम् ।
मन्दाननुगृह्णन्तं स्पन्दानन्तरितचक्षुरीक्षे तम् ॥ ३८ ॥

कलिना मलिनस्वान्तैर्भ्रान्तैः संचालितेन शीलेन ।
गाढं दृढ इति कलितः पण्डित एकः परोरजा भाति ॥ ३९ ॥

भस्मितदुर्मततूलं भव्ययशःकृतहरिद्वरदुकूलम् ।
जडतासरितः कूलं जयति जगत्यां महस्तु चिन्मूलम् ॥ ४० ॥

श्रितनन्दनस्वभावः शाखाशतभूषितो बुधश्लाघ्यः ।
कल्पकभूरुह एको जल्पति जगतां कलाः समस्ताश्च ॥ ४१ ॥

अज्ञातपरुषघोषो विज्ञानाब्धिः परेण पुरुषेण ।
विलसितनिजान्तरोऽसौ वितरति कश्चित् सरस्वतीं भजताम् ॥ ४२ ॥

संपूर्णशारदागमसंप्राप्तोल्लासभासुरो जगति ।
एको हि राजहंसो लोकोत्तर एजते विशुद्धात्मा ॥ ४३ ॥

रक्षन् क्षमामजस्रं तक्षन् दुर्वादकेलिमाक्षिप्य ।
अपथविदूरप्रकृतिर्नृप इव कश्चिद् विपश्चिदाभाति ॥ ४४ ॥

विज्ञानराशिकोशं वित्तनिराशं विरुद्धमतनाशम् ।
विमलयशोभरिताशं जितवागीशं श्रयामि गुर्वीशम् ॥ ४५ ॥

भसितत्रिपुण्ड्रयुक्तं भगवत्पूजाविधानसंसक्तम् ।
पठितातिपुण्यसूक्तं पण्डितमेकं भजे दिवानक्तम् ॥ ४६ ॥

अद्वैतराजधानीदृढतरवप्रं दिनेशमिव दीप्रम् ।
कलये हृदये तमहं करुणाभरितं कलङ्कहरचरितम् ॥ ४७ ॥

दग्धेतरमतवादस्निग्धे दयया दृशा भृशं कुर्वन् ।
मुग्धे मयि कोऽपि गुरुर्दुग्धे विद्याविशेषसर्वस्वम् ॥ ४८ ॥

जित्वरमखिलबुधानां सृत्वरयशसं दिशासु निखिलासु ।
सत्वरमुपैमि शरणं गत्वरमृजुना पथा गुरुश्रेष्ठम् ॥ ४९ ॥

जडतालताकृपाणी जपार्थमालाविलासयुतपाणी ।
पीयूषतुल्यवाणी पिनष्टु काचिच्छुचं कृपाश्रेणी ॥ ५० ॥

चित्तविनिग्रहयालुं विनतदयालुं मतावनिद्रालुम् ।
शास्त्रेष्वसंशयालुं प्रणिपतयालुर्भवामि तं प्राज्ञम् ॥ ५१ ॥

क्षेपिष्ठं कवितायां क्षोदिष्ठद्वैतखण्डनवरिष्ठम् ।
कलये मतिवर्षिष्ठं कलुषदविष्ठं कलावतां श्रेष्ठम् ॥ ५२ ॥

नतजनकृपानुकम्पं नाम्नैवोद्यत्प्रतीपबुधकम्पम् ।
यशसा दिशासु लिम्पं हृदये कृत्वा गुरुं शुचमलुम्पम् ॥ ५३ ॥

कर्मवरकरणगृध्नुः कलुषत्रस्नुः कदध्वगक्षिप्नुः ।
कश्चन वादे धृष्णुः कलयति विहृतिं स चम्पकारण्ये ॥ ५४ ॥

निखिलजनेड्यं कर्मानुष्ठास्नुर्निगमसीम्नि निष्ठास्नुः ।
धिषणायामग्रास्नुर्धिनोतु कश्चिद्धिया धिषणजिष्णुः ॥ ५५ ॥

जनान्धंकरणं सुभगंकरणं सुधोपमैः सूक्तैः ।
नमतामाढ्यंकरणं ज्ञानाद्वैतं चकास्ति किमपि भुवि ॥ ५६ ॥

परशिवसध्रीचीनं विष्वद्रीचीनविमलकीर्तिभरम् ।
कलुषपराचीनमतिं कलये कंचिद् बुधं समीचीनम् ॥ ५७ ॥

अद्वैतद्रढिमानं धीकृशिमानं क्षणेन धुन्वानम् ।
विद्वत्परिबृढिमानं वीक्षे कंचिद्विशुद्धमहिमानम् ॥ ५८ ॥

सुचरितविधिजीवातुः सुधया सहयुध्वसूक्तिरसपूरः ।
विधुसध्रीचीनयशाः विभाति कश्चिद्विपश्चिदग्रण्यः ॥ ५९ ॥

करुणारसाम्बुधीनां कलुषरिपूणां कनद्यशोभूम्नाम् ।
सततं वरिवसिताहं सारस्वतसारजीवनाडीनाम् ॥ ६० ॥

निगमपथसंचरिष्णुर्निराकरिष्णुर्निकृष्टमतघोषम् ।
कापथविनिवर्तिष्णुः कलयतु मेधां गुरुः प्ररोचिष्णुः ॥ ६१ ॥

छविभूतिस्फुरदङ्गोऽप्यच्छविभूतिस्फुरच्छरीरोऽयम् ।
कीर्तिभृतोऽपि विशुद्धो गुह्यश्चित्रीयते गुरूत्तंसः ॥ ६२ ॥

विबुधैरखिलैर्वन्द्यः विहितप्रीतिर्विशिष्य गणपतये ।
विज्ञानदानशौण्डः कोऽपि गिरीशः कुतूहलं कुरुते ॥ ६३ ॥

संक्षुण्णतमस्काण्डः सभुवनजातप्रतीक्ष्यनिजपादः ।
निखिलजगद्बोधकरः निस्तुलतेजाश्चकास्ति मिहिर इव ॥ ६४ ॥

वासर इवासदृक्षः वारिद इव वर्षितामृतस्रोताः ।
वादे निपुणश्चम्पकवन्यामास्ते वदावदः कश्चित् ॥ ६५ ॥

क्षीरमपि क्षारतरं मोचा नीचा सुधाविधापि मुधा ।
माक्षिकमनीक्षिकार्हं कलिते ललिते गिरो गुरोः सारे ॥ ६६ ॥

भास्वान् कलाधिनाथः मङ्गलरूपो बुधो गुरुश्च कविः ।
सूर्यानन्दनरूपस्तनुते कश्चिन्मुदं तमः-केतुः ॥ ६७ ॥

विचनीकसीति मेधा विसनीस्रंसीति येन जडता च ।
तं प्रणिपनीपतीमि प्रश्रयभरितः प्रवेकमार्याणाम् ॥ ६८ ॥

ज्ञानलवलाभमात्रा धन्यंमन्यैरलं बुधैरन्यैः ।
वाङ्मनसदूरदूरं वन्दे विज्ञानराशिमेव गुरुम् ॥ ६९ ॥

जगदभिवन्द्याय नमो जडजनचैतन्यवर्षकाय नमः ।
नतजनसुलभाय नमो निस्तुलविज्ञानराशयेऽस्तु नमः ॥ ७० ॥

इति **गणपतिना** कृतिना गुह्या **गुरुराजसप्ततिः** कलिता ।
ललितारसभरमिलिता पठतां भक्त्या ददाति पाण्डित्यम् ॥ ७१ ॥

विजये विरचितविजये विहिता गुरुराजसप्ततिः सेयम् ।
अहिमकरे प्रेमकरे मकरे च करे परे वरे वारे ॥ ७२ ॥

इति श्रीगणपतिशास्त्रिणा विरचिता गुरुराजसप्ततिः संपूर्णा

## ९३. दशश्लोकीस्तवराजः[1]

यो देवः प्रथमो विधीशहरिमुख्यानां पुरो नाकिनां
य: शुण्डापरिशोभिलम्बिजठरो यो नालिकेरप्रियः ।
मूलाधारचतुर्दलाब्जविलसच्छ्रीवल्लभानायको
विघ्नान् नो विधुनोतु मोदककृतानन्दः स विघ्नेश्वरः ॥ १ ॥

यः शूरं सिंहवक्त्रं निखिलसुररिपुं तारकं चापि युद्धे
संहृत्याशेषदेवानपरिमितकृपापूर्णदृष्ट्या जुगोप ।
साक्षाच्छ्रीशिवशक्त्यभिन्नमहसा संजातमूर्त्युज्ज्वलः
सोऽस्मान् पातु षडाननः प्रतिदिनं नानाविपद्वृन्दतः ॥ २ ॥

[1] Based on the MS. No. 67160 (D. C. No. 3082).

भ्राजद्रत्नमयाकृतेरिह महामेरोः समन्तात् सदा
प्रादक्षिण्यवशात् तमः परिहरन् यः पाति लोकानिमान् ।
तेजोराशिरपारभूरिकरुणश्छन्दोमयो भास्करः
सोऽस्मान् पातु विधूय रोगमखिलं छायाविलासप्रियः ॥ ३ ॥

धनुर्बाणौ वज्रायुधमपि कराब्जैरनुदिनं
चतुर्भिर्भूषाढ्यैः स्रवदमृतसंपूर्णकलशम् ।
वहन्तं शुभ्राभं विधिहरिगिरीशात्मकतनुं
भजेऽहं कल्पद्रुं हृदि निजपरानन्दजनकम् ॥ ४ ॥

शङ्खं चक्रमथाङ्कुशं च दधतीं भ्राजत्कपालं चतु-
र्बाह्वग्रैः शरदिन्दुकुन्दधवलां मर्त्याननां सुन्दरीम् ।
नानारत्नविभूषणाम्बरधरां संचिन्तकानां नृणा-
मिच्छाकामफलप्रदां भगवतीं श्रीकामधेनुं भजे ॥ ५ ॥

श्रीमत्कल्पकशाखिमूलविलसच्छ्रीकामधेन्वन्तिके
श्रीमच्छेषफणासहस्रमणिभिर्भास्वत्तनोः शार्ङ्गिणः ।
या वक्षःस्थलवासिनी भगवती सौदामिनीवाभ्रगा
नित्यं भाति ममालये वसतु सा क्षीराब्धिकन्यान्वहम् ॥ ६ ॥

पञ्चाशद्वर्णरूपा निखिलनिगमशास्त्रादिविद्यास्वरूपा
साक्षाच्छ्रीचतुराननाङ्कनिलया या ज्ञप्तिमात्रात्मिका ।
शुभ्राङ्गी सितवस्त्रपुष्पविलसन्मूर्तिर्मदीये सदा
जिह्वाग्रेऽस्तु सरस्वती भगवती सा पुस्तकाद्युज्ज्वला ॥ ७ ॥

या सृष्ट्यादिकपञ्चकृत्यनिरतस्यार्धेन्दुचूडामणेः
साहाय्यं कुरुते सदापि युवतिर्भ्राजत्कपर्दामला ।

सा गौरी परसच्चिदात्मकतनुच्छायोत्थविश्वाकृतिः
सूर्येन्द्वग्निविलोचना वसतु मे हृत्पुण्डरीकान्तरे ॥ ८ ॥

स्वाभिन्नात्मकमायया शबलितो यो ब्रह्मविष्णवीशता-
मासाद्याथ गुणत्रयात्मकमहालीलाविभूत्या मुहुः ।
सृष्ट्वैतत् परिपाल्य कृत्स्नमुपसंहृत्यावसाने जगत्
स्वीयेऽचिन्त्यमहिम्नि सुस्थिततनुः पायादपायात् स माम् ॥ ९ ॥

यत् सच्चित्सुखरूपमद्वयमनासक्तं मृषामात्रके
विश्वेऽस्मिन्नबुधैरशास्त्रगुरुभिर्भ्रान्त्या समूरीकृते ।
तत् साक्षात् परतत्त्वसंज्ञकमखण्डानन्दपीयूषनिः-
ष्यन्दैकाकृति वस्तु मेऽस्तु सततं प्रत्यङ्मुखे चेतसि ॥ १० ॥

स्वाभीष्टदेवतावर्गस्तुतिध्यानस्वरूपिणीम् ।
दशश्लोकीमिमां वीक्ष्य सन्तः कुर्वन्त्वनुग्रहम्[1] ॥ ११ ॥

इति श्रीदशश्लोकीस्तवराजः समाप्तः

[1] दशश्लोकीस्तवराजाभिप्रायसारसर्वस्वमपि संगृह्यैकश्लोकेनोच्यते—
चिन्ताया मणिरूपतामुपगतो ये योगिनां ब्रह्मना-
ड्युन्मेषे सति सद्गुरूदितरहस्यार्थोपदेशादिभिः ।
भोगासक्तिमतां च चिन्तितमनोभावार्थदायी च यः
सोऽग्रे मेऽस्त्विह भोगमोक्षफलदश्चिन्तामणिश्चिन्मयः ॥

## ९४. दुग्धापगादशकम्[1]

वीरराघववेदान्तयतिराड् देशिकोत्तमः ।
सर्वतन्त्रस्वतन्त्रो मे संनिधत्तां सदा हृदि ॥

[2]कलशतटिनी भाति स्वच्छप्रवाहपरंपरा
पृथुलतरलोदारस्फायत्तरङ्गकरम्बिता ।
मधुरसलिलास्वादाभ्याशाभ्युपागतसंभृत-
त्रिदशमहिषीवक्षोदेशक्षरन्नवकुङ्कुमा ॥ १ ॥

दुग्धापगा दुरितदूषितदुर्जनानां दूरस्थिता दुरवगाहमहाह्रदाढ्या
दुर्दान्तदुर्भरतपोभरितैर्मुनीन्द्रैः संसेविता प्रवहति प्रथमानकीर्तिः ॥ २ ॥

चर्कर्ति स्वयमध्वगश्रमधुतिं बर्भर्ति तत्तोषणं
जर्हर्ति क्षणतस्तदीयदुरितं वर्वर्ति तच्चेतसि ।
पुष्णाति श्रियमद्भुतां भगवती मुष्णाति दोषानसौ
कृष्णासिन्धुकवेरजाभ्यधिकतानिष्णातभावोज्ज्वला ॥ ३ ॥

स्वेच्छोद्गच्छदुदुच्छकच्छपपरिच्छेदोच्चलत्पङ्कज-
प्रातःस्यन्दिमरन्दबृन्दलहरीपारंपरीमेदुरा ।
एषा दुग्धनदी नदीषु सुभगाशेषाभिवन्द्या जग-
द्दोषापाकरणक्षमा क्षिपतु मे दोषानशेषानसौ ॥ ४ ॥

मध्याह्नार्कमरीचिमण्डलपरिक्लिन्नोऽध्वगः सांप्रतं
देवि त्वत्सलिलावलोकनकलामात्रेण विश्राम्यति ।

[1] Based on the single MS. No. 69910 (D.C. No. 2742).
[2] MS. adds: श्रीमते वीरराघववेदान्तसंयमीन्द्रमहादेशिकाय नमः ।

किं ब्रूमो वयमम्ब दुग्धतटिनि त्वद्वैभवं के विदुः
प्रत्यक्षं वयमन्वभूम भवति स्नानप्रभावं परम् ॥ ५ ॥

प्रत्यक्षं ह्युपजीव्य शास्त्रमुदितं प्रत्यक्षबाधे तु नो
शास्त्रं जीवितुमर्हतीति जगदुस्त्रय्यन्तसिद्धान्तिनः ।
देवि त्वं बहुमन्यसे मतमिदं दुग्धस्रवन्ति त्वयि
स्नातॄणां स्मृतिचोदितं फलगणं प्रत्यक्षयन्ती ततः ॥ ६ ॥

देहः प्रत्यक्षसिद्धः खलु घटपटयोरेवमीशेशितव्या-
द्यंशे भेदः प्रसिद्धः श्रुतिभिरपि कथं सोऽन्यथा कर्तुमर्हः ।
किं मेरुः सर्षपः स्यात् किमिह परिबृढः स्याल्लुलायः किमश्व-
श्छागो दुग्धापगे त्वं कथमिव सहसे ब्रह्मजीवैक्यवादम् ॥ ७ ॥

लोलत्कल्लोलजालप्रचलितकमलोत्फुल्लकह्लारपाली-
शश्वन्निष्यन्दिमाध्वीघुमुघुमितपयोभासमानासमाना ।
अश्रान्तब्रह्मचिन्ताश्रमविमलतरस्वान्तकान्तैर्मुनीन्द्रै-
र्मातस्तोष्टूयमाना किमु कलशनदि त्वं न्त(तु?) कुल्यासकुल्या ॥ ८ ॥

ब्रह्मादेशादिव त्वं प्रवहसि कलशह्लादिनि ब्रह्मदेशा-
भ्याशे ब्रह्मप्रवीणैरपि च बुधगणैर्ब्रह्मचिन्ताधुरीणैः ।
संध्यासूपास्यमानान्वहमनघतमस्वच्छनीरावगाहा
क्रीडासंभ्रान्तचेतःकुवलयनयना मञ्जुमञ्जीरघोषा ॥ ९ ॥

गङ्गा तुङ्गा तरङ्गावलिभिरधिगता वारिखेलद्रथाङ्गा-
नङ्गासङ्गावभङ्गावहनिजमहिमा तां परां गाहतां वा ।
तां गाथाभिः स्तुवन्तः कलशनदि शुभां त्वां परां गाहमानाः
सन्तो गङ्गाधराङ्गाकलनविरहितेत्यादरान्मुक्तसङ्गाः ॥ १० ॥

वीरराघववेदान्तवर्याख्यानशालिने ।
साक्षाल्लक्ष्मीनृसिंहाय त्रैलोक्यगुरवे नमः ॥

[इति श्रीदुग्धापगादशकं संपूर्णम्]

## ९५. महामायाष्टकम्[1]

(पैङ्गनाडु) गणपतिशास्त्रिकृतम्

सत्स्वन्येष्वपि दैवतेषु बहुषु प्रायो जना भूतले
यामेकां जननीति सन्ततममी जल्पन्ति तादृग्विधा ।
भक्तस्तोमभयप्रणाशनचणा भव्याय दीव्यत्वसौ
देवी स्फोटविपाटनैकचतुरा माता महामायिका ॥ १ ॥

मातेत्याह्वय एव जल्पति महद् वात्सल्यमस्मासु ते
कारुण्ये तव शीतलेति यदिदं नामैव साक्षीयते ।
इत्थं वत्सलतादयानिधिरिति ख्याता त्वमस्मानिमान्
मातः कातरतां निवार्य नितरामानन्दितानातनु ॥ २ ॥

प्रत्यक्षेतरवैभवैः किमितरैर्दैवव्रजैस्तादृशै-
र्निन्दायामपि च स्तुतावपि फलं किंचिन्न ये तन्वते ।
या निन्दास्तवयोः फलं भगवती दत्सेऽनुरूपं क्षणा-
न्नूनं तादृशवैभवा विजयसे देवि त्वमेका भुवि ॥ ३ ॥

[1] Based on the single MS. No. PM 977, not included in the D. C.

वृत्तान्तं विविधप्रकारमयि ते जल्पन्ति लोके जना-
स्तत्त्वं नोपलभे तथैव न विधिं जाने त्वदाराधने ।
तस्मादम्ब कथं पुनः कलयितुं शक्तास्मि ते पूजनं
नूनं वच्मि दयानिधेऽवतु जडानस्मान् भवत्यादरात् ॥ ४ ॥

रोदंरोदमुदीर्णबाष्पलहरीक्लिन्नानने ते शिशा-
वस्मिन् तप्यति किंचिदत्र करुणादृष्टिं विधत्से न चेत् ।
पातुं स्फोटगदात् पटुत्वमिव ते कस्यास्ति मातर्वद
क्वायं गच्छतु कस्य पश्यतु मुखं का वा गतिर्लभ्यताम् ॥ ५ ॥

धर्म्यानुच्चरतां पथः कलयतां दोषांस्तथा चात्मनः
स्वैरं निन्दनमातनोतु सततं द्वेष्येऽपथे तिष्ठतु ।
एतावत्यपि वत्सके किल शुचं याते मनाक् तत्क्षणं
तत्त्राणे जननी प्रयास्यति हि तन्मातस्त्वमस्मानव ॥ ६ ॥

आबालस्थविरं प्रसिद्धमयि ते मातेति यन्नाम तद्
गोप्तुं नैव हि शक्यमम्ब तदसौ तादृग्विधा त्वं यदि ।
अस्मिन् खिद्यति वत्सके न तनुषे मातुर्गुणं चेत्तदा
नूनं स्यादपवादपात्रमयि तन्मातस्त्वमस्मानव ॥ ७ ॥

मुक्ताहारमनोहरद्युतियुतां मूर्तिं नरास्तावकीं
ये ध्यायन्ति मृणालतन्तुसदृशीं नाभीहृदोरन्तरे ।
ते घोरज्वरभारजातविषमस्फोटस्फुटद्दुःसह-
क्लेदोद्यत्कटुपूतिगन्धमयि नो जानन्त्यमी जात्वपि ॥ ८ ॥

कारुण्याम्बुधिशीतलापदपयोजातद्वयीभावना-
जातस्फीतहृद(म्बुजा)मितसुधानिर्यासरूपामिमाम् ।

ये मर्त्या स्तुतिमादराद् गणपतेर्वक्त्राम्बुजान्निःसृतां
विश्वासेन पठन्ति ते न दधते स्फोटव्यथां जातुचित् ॥ ९ ॥

इति श्रीमहामायाष्टकं संपूर्णम्

## ९६. शारदात्रिशती[1]

गङ्गाधरमखिविरचिता

परमाभरणं धातुर्वदनाम्भोजस्य शारदा देवी ।
या राजति जननी सा लसतु सदा सुप्रसन्ना नः ॥ १ ॥

सा शारदा प्रसन्ना राजति मम मानसे नित्यम् ।
या शारदाब्जवदना जननी कीर्त्या हि सर्वलोकानाम् ॥ २

संपद् दिव्या धातुः ख्याता सा शारदा देवी ।
यद्भजनं देवानामपि तत्त्वज्ञानदं विदुर्विबुधाः ॥ ३ ॥

सरसकविताविभूत्यै यत्पदमाराध्यते विशेषज्ञैः ।
सा शारदा श्रियै नः काले सर्वप्रसन्नात्मा ॥ ४ ॥

[1] Based on the single recent transcript, No. TR 803 (D. C. No. 2804). This Stotra along with the *Ambikātriśatī* (*Stotra-samuccaya*, vol. I, pp. 31-61) and the *Kamalātriśatī* (above pp. 258-88) is called *Paramābharaṇam* on the title page of the MS.

नीलारविन्दलोचनयुगला सा शारदा देवी ।
करकमलकलितवीणा सदा प्रसन्ना श्रियै वः स्यात् ॥ ५ ॥

कलये तामहमनिशं फुल्लाब्जविलोचनां वाणीम् ।
या सृष्ट्यादौ साह्यं कलयति धातुर्जगन्माता ॥ ६ ॥

यस्या लीलालोलः पद्मासनगोऽपि वेदपाठरतः ।
तामहमतुलानन्दप्राप्त्यै कलये मनःपद्मे ॥ ७ ॥

ब्रह्माणं तां वाणीमेकासनभासुरां श्रियः प्राप्त्यै ।
आराद्विलोक्य मानसमानन्दरसं परं भजते ॥ ८ ॥

मुक्तामये विमाने पद्मासनयन्त्रिकामध्ये ।
दृश्यां वाणीं देवीं सेवे संततसुखप्राप्त्यै ॥ ९ ॥

भाग्यान्मम च कवीनां सा देवी दृश्यतामेति ।
वीणापुस्तकहस्ता या कमलासनपुरन्ध्री हि ॥ १० ॥

मामकमानसकीरं बध्नीयाश्चरणपञ्जरे मातः ।
तेन मम जन्मलाभः स्तोत्रं च तव प्रकामकलितार्थम् ॥ ११ ॥

संवित्प्ररोहकलिकाप्राप्त्यै तां नौमि शारदां देवीम् ।
या किल कवीश्वराणामधिनेत्री काव्यकलनादौ ॥ १२ ॥

भक्तानां जिह्वाग्रं सिंहासनमादराद् वाणी ।
कलयन्ती नृत्यति किल ततस्तु तन्नूपुरनिनादः ॥ १३ ॥

मञ्जुलफणितिझरीति प्रगीयते दिक्तटे रसिकैः ।
प्रातःफुल्लपयोरुहमरन्दरसकेलिधूर्वहा काले ॥ १४ ॥

दुर्वारगर्वदुर्मतिदुरर्थनिरसनकलानिपुणाः ।
मातस्तव पादपयोरुहसेवाधन्यतां प्राप्ताः ॥ १५ ॥

नीचा मम तु मनीषा तथापि तव नुतिकलाप्रवृत्तोऽस्मि ।
अम्ब तव तत्र हेतुः कृपा परं बुद्धिदा जयति ॥ १६ ॥

विधिदयिते तव मातः स्तुतौ न शक्ता अपि त्रिदशाः ।
क्षन्तव्यमत्र दयया मम चापल्यं तव स्तोत्रे ॥ १७ ॥

शुकवाणीमिव मातर्निरर्थकां मद्वचोभङ्गीम् ।
सदसि शृणोषि दयया तत् तव चोत्तमपदव्यक्त्यै ॥ १८ ॥

परदेवते प्रसीद प्राणेश्वरि धातुरम्ब मम वाणीम् ।
कृपया तव नुतियोग्यां त्वन्नूपुरनिनदरम्यरसगुम्फाम् ॥ १९ ॥

सर्वज्ञत्वं संपदमथवान्यां प्राप्तुमत्र तव मातः ।
तव चरणकमलमेतच्छरणं नान्या गतिर्दृष्टा ॥ २० ॥

मन्दधिया स्वल्पापि स्तुतिरम्ब निरर्थकापि रसहीना ।
कलिता चेत् तव कृपया तदेव सदसीडितं भाति ॥ २१ ॥

कुण्ठीकरोतु विपदं चाज्ञानं दुर्गतिं वाणि ।
तव चरणकमलसेवादरो जनानां कलौ काले ॥ २२ ॥

वीरश्रीर्विद्वच्छ्रीर्जयश्रियो वांमरैर्मान्ये ।
तव पादाम्बुजसेवादरेण सिध्यन्ति नान्यथा लोके ॥ २३ ॥

करुणारसवर्षिणि ते चरणसरोजद्वयं निधेहि मम ।
मस्तकतले विदारितजरादिकं सपदि जन्म सार्थं मे ॥ २४ ॥

श्रद्धां मेधां संपदमन्याममरेन्द्रमाननीयां हि ।
दयया विधेहि काले भक्तानां नस्त्वदेकशरणानाम् ॥ २५ ॥

प्रेयसि धातुर्जगतां परमेश्वरि वाणि मातरम्ब ननु ।
तव नामानि फणन्तस्त्रिदशैः सह यान्ति यानेन ॥ २६ ॥

तव नाम यस्य जिह्वाङ्गणे विशुद्धं क्षणं स्फुरति ।
स हि वन्द्यस्त्रिदशैरपि विगलितपापः परे लोके ॥ २७ ॥

नतनाकीश्वरवनितामौलिस्रग्गलितमकरन्दैः ।
स्निग्धपदाम्बुजयुगला वाणी देवी श्रियो हि लसति परा ॥ २८ ॥

विदुषामपि तुष्टिकरं नवनवरसगुम्फनं कवित्वं तु ।
यत्करुणावीक्षणतो सिध्यति तां शारदां वन्दे ॥ २९ ॥

अम्ब प्रसीद परमं मायामेतां निरस्य नतिभाजः ।
मम संविधेहि मधुरां वाचं तव नुतिकलार्हां च ॥ ३० ॥

वाणी माता जगतां वीणापुस्तककराम्भोजा ।
हंसाश्रिता हि नमतां श्रेयःसिध्यै प्रसन्ना नः ॥ ३१ ॥

श्लाघ्या संपत्काले वैदुष्यं वा यदीयवीक्षणतः ।
सिध्यन्त्यपि देवानां तां वन्दे शारदां देवीम् ॥ ३२ ॥

विद्यादानकरीयं कमलासनपुण्यपरिपाकः ।
मम मनसि संनिधत्तां दिव्यज्ञानादिसिध्यै हि ॥ ३३ ॥

दिव्यज्ञानं दयया विधेहि मातर्महासारम् ।
तेनैव ते तु कीर्तिर्दानफलं नश्च जन्मसाफल्यम् ॥ ३४ ॥

द्वादशबीजाक्षरगां मन्त्रोद्धारक्रियाशक्तिम् ।
वाणीं विधेस्तु पत्नीं मध्ये पश्यामि बिम्बमध्यस्थाम् ॥ ३५ ॥

रविकोटितेजसं तां सरस्वतीं त्र्यक्षरक्रियाशक्तिम् ।
अणिमादिदां प्रसन्नामम्बां पश्यामि पद्ममध्यगताम् ॥ ३६ ॥

जगदीश्वरि भारति मे प्रसीद वाणि प्रपन्नाय ।
अहमपि कुतुकात् तव नुतिकलनेऽशक्तश्च मन्दधिषणश्च ॥ ३७ ॥

मुनिजनमानसपेटीरत्नं धातुर्गृहे रत्नम् ।
वाणीति दिव्यरत्नं जयति सदा कामधुक् काले ॥ ३८ ॥

अज्ञानव्याधिहरं तदौषधं शारदारूपम् ।
यः पश्यति स हि लोके परात्मने रोचते काले ॥ ३९ ॥

कमलासननयनफलं सृष्ट्यादिकलासमासक्तम् ।
वाणीरूपं तेजः स्फुरति जगच्छ्रेयसे नित्यम् ॥ ४० ॥

हंसगतिं तामम्बामम्भोरुहलोचनां वन्दे ।
तिलकयति या गुरूणां जिह्वासिंहासनं वाणी ॥ ४१ ॥

वाणि तरङ्गय लोचनवीक्षणशैलीं क्षणं मयि भोः ।
मम जन्म लब्धविभवं तेन भवेन्नैव ते हानिः ॥ ४२ ॥

पद्मासनेन साकं काले वाणी समासना जयति ।
कुचकलशनमितदेहा कुर्वन्ती भद्रसंततिं नमताम् ॥ ४३ ॥

व्यातन्वाना वाणी कवीश्वराणां मनोज्ञवचनझरीम् ।
जयति विधिसुकृतसंततिपरिणतिमाला बुधैर्वन्द्या ॥ ४४ ॥

कमलसुषमाङ्गयष्टिः सा देवी जयति पद्ममध्यतले ।
शतबीजाक्षरलसितं दिक्पतिकृतरक्षकं च मेरुमुखम् ॥ ४५ ॥

वाणीयन्त्रं विबुधैर्मान्यं योगासनाब्धीन्दुम् ।
ह्रीमक्षरमुखमाद्यं प्राक्तटकलितं च पद्ममध्यतले ॥ ४६ ॥

तन्मेरुचक्ररूपं समाधिदृश्यं च लोकवेद्यं च ।
सैषाश्रित्य तदेतद् राजति राजीवलोचना वाणी ॥ ४७ ॥

हंसाश्रितगतिविभवा मन्दस्मेरा तमोनिहन्त्री च ।
मधुरतरवाङ्निगुम्फा वीणापुस्तककराम्भोजा ॥ ४८ ॥

वीणावादनरसिका नमतामिष्टार्थदायिनी वाणी ।
धातुर्नयनमहोत्सवकलिका कुर्याच्छुभं जगताम् ॥ ४९ ॥

तापिञ्छरम्यदेहश्रीरेषा कविसमाजनुता ।
अष्टैश्वर्यादिकलादाने दत्तेक्षणा जयति ॥ ५० ॥

सृष्ट्यादौ विधिलिखितं वाणी सैषा हि चान्यथाकर्तुम् ।
नाकौकसामपीह प्रभवति कलितप्रणामानाम् ॥ ५१ ॥

यः पश्यति तामेतां वाणीं पुरुषो हि धन्यतामेति ।
यं पश्यति सैषायं नितरां धन्यो नृपेडितः काले ॥ ५२ ॥

कबलिततमःसमूहा वाणी सैषा हि विजयते जगति ।
अपुनर्भवसुखदात्री विरिञ्चिमुखलालिता काले ॥ ५३ ॥

कमलासनमुखकमलस्थिरासनां शारदां वन्दे ।
यन्नामोच्चरणकलाविभवात् सर्वज्ञता नियतम् ॥ ५४ ॥

भवपरमौषधमेतद्वाणीरूपं सदाराध्यम् ।
कमलासनलोचनगणसरसक्रीडास्पदं जयति ॥ ५५ ॥

नारीवंशशिखामणिरेषा चिन्तामणिर्नतानां हि ।
धातृगृहभागधेयं ध्येयं सद्भिः श्रियः समृद्ध्यै नः ॥ ५६ ॥

जननि भुवनेश्वरि त्वां वाणीं वन्दे कवित्वरससिद्ध्यै ।
त्वं तु ददासि हि दयया मम मन्दस्यापि वाग्झरीर्मधुराः ॥ ५७ ॥

एतेन तव तु कीर्तेर्महिमा संगीयते दिशां वलये ।
किंनरवर्गैरमरीकन्याभिः कल्पवृक्षमूलतले ॥ ५८ ॥

कविमल्लसूक्तिलहरीस्तन्वाना शारदा जयति ।
विधिकेलिसदनहंसी कल्याणैकस्थली नमताम् ॥ ५९ ॥

स्फुरतु मम वचसि वाणि त्वदीयवैभवसुधाधारा ।
नित्यं व्यक्तिं प्राप्ता धुतनतजनखेदजालका महती ॥ ६० ॥

वाणि तव स्तुतिविषये बुद्धिर्जाता हि मे सहसा ।
तेन मम भागधेयं परिणतमित्येव नित्यसंतुष्टः ॥ ६१ ॥

सृष्टिकलामण्डनभूरेषा वाणी जगज्जननी ।
आलोकमात्रवशतस्तमसो हन्त्री च संपदां जननी ॥ ६२ ॥

पौरुषलोपविधात्री धातुरियं कमलकोमलाङ्गलता ।
वसतु सदा जिह्वाग्रे दिव्यज्ञानप्रदा देवी ॥ ६३ ॥

प्रतिदिनदुरितनिहन्त्री पद्मासननयनपुण्यपरिपाकः ।
कवितासंतानकलाबीजाङ्कुरवर्धिनी जयति ॥ ६४ ॥

क्षणवीक्षणेन माता लक्ष्मीं पक्ष्मलयति प्रणते ।
वेधसि सुरतमहोत्सवसंकेततल्पदर्शिनी काले ॥ ६५ ॥

शृङ्गारविभ्रमवता नीलोत्पलकान्तिचातुरीसुपुषा ।
वाणीनेत्रेण विधिर्जितोऽभवत् सोऽपि सततकृतवेदः ॥ ६६ ॥

श्यामा कटाक्षलहरी मातुर्जयतीह संपदां जननी ।
यामस्तौषीत् काले मघवा नाकाधिपा मुनयः ॥ ६७ ॥

मणिकटकनादपूरितमम्बापादाम्बुजं महामन्त्रैः ।
जप्यं ध्येयं काले दिशि दिशि कलितस्वरक्षं च ॥ ६८ ॥

स्मरणेन दुरितहन्त्री नमनेन कवित्वसिद्धिदा वाणी ।
कुसुमसमर्पणकलया काले मोक्षप्रदात्री च ॥ ६९ ॥

विस्मरतमोनिहन्त्रि त्वां सेवे शारदादेवि ।
शिशिरीकुरु मां काले करुणारसवीक्षितेन वरदेन ॥ ७० ॥

मातर्नमोऽस्तु तावककटाक्षमधुपाय शारदे जयति ।
यो वेधसोऽपि काले सृष्ट्यादौ चातुरीं दित्सन् ॥ ७१ ॥

सुमनोवाञ्छादाने कृतावधानं धनं धातुः ।
धिषणाजाड्यादिहरं यद्वीक्षणमामनन्ति जगति बुधाः ॥ ७२ ॥

ललितगमनं त्वदीयं कलनूपुरनादपूरितं वाणि ।
नौमि पदाम्बुजयुगलं कवितासिद्ध्यै विधेः कान्ते ॥ ७३ ॥

कमलकृतवैजयन्ती विधेर्मुखेष्वादराद्वाण्याः ।
जयति कटाक्षलहरी तोरणलक्ष्मीस्तु सत्यलोके हि ॥ ७४ ॥

निश्रेणिका च मुक्तेः सज्ज्ञाननदीमहालहरी ।
नानारसचातुर्यप्रसारिका दुरितशङ्कुला काले ॥ ७५ ॥

परतन्त्रितविधिविभवा देवी सा शारदा जयति ।
कैवल्यादिकलानां दात्री भक्तालिकामधेनुर्या ॥ ७६ ॥

कविकामधेनुरेषा मञ्जुस्मेराननाम्भोजा ।
वाणी जयति विधातुर्मननागमसंप्रदायफलदा हि ॥ ७७ ॥

घनतरकृपारसार्द्रैर्नानाविभवप्रदानकृतदीक्षैः ।
वाणी जयति कटाक्षैर्नः काश्मल्यं हठान्निरस्यन्ती ॥ ७८ ॥

दासाशादानकलाप्रक्लृप्तदीक्षाकटाक्षलहरी मे ।
कबलयतु पापराशिं वाण्या नित्यं महौदार्या ॥ ७९ ॥

आदिमजननी सैषा वाणी जयतीह भक्तरक्षायै ।
सर्वत्र कलितदेहा नानाशास्त्रादिरूपतो जगति ॥ ८० ॥

बहुविधलीलासदनं संभृतफुल्लाब्जशिल्पवैचित्र्यम् ।
वाणीमुखारविन्दं चुम्बति मानसमिदं हठात् कृत्यम् ॥ ८१ ॥

सौभाग्यकान्तिसारं वदनाम्भोजं श्रियै वाण्याः ।
आश्रित्य सकलवेदा अपि नित्यं मान्यतां प्राप्ताः ॥ ८२ ॥

ज्ञानमयी सलिलमयी तत्त्वमयी भाति सर्वलोकानाम् ।
अक्षरमयी च वाणी श्रेयोदाने निबद्धचित्तगतिः ॥ ८३ ॥

नमउक्तिरस्तु मात्रे वाण्यै नः सिद्धिदा भक्त्या ।
आनन्दिन्यै ज्ञानस्वरूपभाजे प्रबन्धरूपायै ॥ ८४ ॥

आराध्यायै ध्येयायै चात्तकलाचित्रनादरूपायै ।
सच्चित्तवासभाजे वाण्यै भूयो नमोऽस्तु भक्तिकृतम् ॥ ८५ ॥

कमलासनपुण्यकला नमतां चिन्तामणिर्वाणी ।
जीवाक्षरबोधकलारूपा जयतीह सत्त्वरूपवती ॥ ८६ ॥

ब्रह्माण्डमण्डलमिदं व्याप्तं मात्रा क्षराक्षरादिजुषा ।
यत्पदकमलं नित्यं श्रुतिततिसुदतीविभूषणं च विदुः ॥ ८७ ॥

मनसिजसाम्राज्यकलालक्ष्मीरेषा विरिञ्चिमुखहर्षम् ।
व्यातन्वाना नित्यं राजति षडरस्वरूपचक्रतले ॥ ८८ ॥

मञ्जुलवीणानिनदप्रयोगनिर्धूतमोहसंचारा ।
हंसीयाना वाणी हंसगतिः सुकृतिनेत्रपुण्यकला ॥ ८९ ॥

कुचकलशसविधविनिहितवीणानिक्वाणसावधानकला ।
अधिनेत्री हि कलानां सकलानां शारदा जयति ॥ ९० ॥

त्रिदशपरिषन्निषेव्या प्रातः सायं प्रफुल्लमुखकमला ।
कमलास्नुषा हि वाणी वाणीं दिशतु प्रबन्धरसभरिताम् ॥ ९१ ॥

अधिकचपलैः कटाक्षैरञ्चितलीलारसैरुदारैर्नः ।
मङ्गलमातन्वाना विधातृगृहिणी सुरादिनुतपादा ॥ ९२ ॥

कान्तं लक्ष्मीभवनं मुखकमलं शारदादिव्याः ।
सौभाग्यकान्तिसारं स्पृहयति मे मानसं सरसम् ॥ ९३ ॥

कारुण्यपूर्णनयनं पुस्तकहस्तं महः किमपि ।
धातुः पुण्यकलानां परिपाको मर्त्यरक्षणं कुरुते ॥ ९४ ॥

संसारवारिराशिं ततुं सा सेतुरेषा नः ।
धातुर्गृहिणी दुःखं शिथिलयतु परं जनिप्राप्तम् ॥ ९५ ॥

सरसकविकल्पवल्लीमम्बां वाणीमहमुपासे ।
अन्तस्तमोनिहन्त्रीं यामाहुर्ज्ञानदां मुनयः ॥ ९६ ॥

मम लोचनयोर्भूयात् विद्या कापि प्रधूतजनिभीतिः ।
निगमेषु संचरन्ती कृपानिधिः शारदा देवी ॥ ९७ ॥

शमिततनतदुरितसंघा धात्रे निजनेत्रकल्पितानङ्गा ।
कृतसुरशात्रवभङ्गा सा देवी मङ्गलैस्तुङ्गा ॥ ९८ ॥

पद्मासनस्थितां तां वाणीं चतुराननां वन्दे ।
कल्याणानां सरणिं कविपरिषत्कल्पवल्लरीं मान्याम् ॥ ९९ ॥

कुचभारसंनताङ्गीं कुन्दस्मेराननाम्भोजाम् ।
कुन्दलकुसुमपरीमलसंपादितभृङ्गझंकृतितरङ्गाम् ॥ १०० ॥

चिद्रूपां विधिमहिषीं हंसगतिं हंससंनुतचरित्राम् ।
विद्याकलादिनिलयामाराध्यां सकलजडिमदोषहरीम् ॥ १०१ ॥

जननि यदि भजति लोके तव लोचनवीक्षणं क्षणं मर्त्यः ।
कुपुरुषनुतिविमुखस्ते रूपं ज्ञानप्रदं पश्यन् ॥ १०२ ॥

कुक्षिंभरित्वमुखदुर्गुणादिकं दूरतस्त्यक्त्वा ।
त्वद्भावनेन धन्यो नयति च कालं प्रमोदेन ॥ १०३ ॥

मयि तापभारशान्त्यै तरङ्गय त्वद्विलोचने मातः ।
यच्छारदाब्जसुषमामान्ये देवादिभिः प्रार्थ्ये ॥ १०४ ॥

सर्वार्थदा हि भजतां कटाक्षधाटी शिवंकरी वाणि ।
चिन्तामणिमिव कलयति यां हि विधिर्विदितमन्त्रोऽपि ॥ १०५ ॥

सुकृतपरिपाकमनसा धन्यास्त्वामर्चयन्ति ननु वाणि ।
अहमपि तद्वत्कलये फलप्रदा त्वं समानकल्पासि ॥ १०६ ॥

निगमवचसां निदानं तव पादाब्जं वतंसयतु काले ।
देवोऽपि देवदेवो विजितजगत्त्रयतले मातः ॥ १०७ ॥

अन्तस्तमसो हन्त्री पटीयसी ते कटाक्षझरमाला ।
या तोरणमाल्यश्रियमातनुते वेधसः सौधे ॥ १०८ ॥

शृङ्गारविभ्रमवतीं त्वां प्राप्यैव क्रियाकाले ।
कलयति सृष्ट्यादिमसौ विधिः श्रुतिव्यक्तमाहात्म्यः ॥ १०९ ॥

वेधोवदनं केलीवनमासाद्याम्ब परमया हि मुदा ।
क्रीडसि शुकीव काले द्विजसंघसमर्चितात्मवृत्तिश्च ॥ ११० ॥

धातुर्मुखमञ्जूषारत्नं निगमान्तकेलिवनहंसीम् ।
परमां कलामुपासे तामम्बां चिद्विलासघनवृत्तिम् ॥ १११ ॥

वागीशदेवरूपिणि गीष्पतिमुखदेवसंघनुतचरणे ।
तव रूपं सूर्यायुतदृश्यं दर्शय मम ज्ञाने ॥ ११२ ॥

दिव्यज्ञानप्रदमिदमम्ब त्वद्रूपमादराद्वाणि ।
काले दर्शय कृपया तेन वयं प्राप्तकार्यसाफल्याः ॥ ११३ ॥

अम्बा त्रिसंध्यपठनप्रवृत्तिभाजां क्रमेण नाम्नां तु ।
द्वादशकलाविभेदव्यूहादिज्ञानदा प्रसन्ना हि ॥ ११४ ॥

मूकोऽपि सत्कविः स्याद् दुरक्षराण्यपि विधातृलिखितानि ।
सत्फलदानि सरस्वति कटाक्षपूरे यदि क्वापि ॥ ११५ ॥

अवलम्बे तामम्बां पञ्चाशद्वर्णकल्पितजगत्काम् ।
सृष्टिस्थितिसंहारस्थिरोदयां विविधशास्त्ररूपाढ्याम् ॥ ११६ ॥

वाणीं दिशतु मनोज्ञां वाणी गतिहसितकादम्बा ।
या दम्भादिविमुक्ता नादं भाव्यं वदन्ति यद्रूपम् ॥ ११७ ॥

राकेन्दुवदनबिम्बा साम्बा वाणी पुनातु कृतिमेनाम् ।
परिकलितभावबन्धां रसोज्ज्वलां मङ्गलोत्तुङ्गाम् ॥ ११८ ॥

लावण्यकान्तिसिन्धुः पादाब्जनतप्रभावसंधात्री ।
प्रसृमरतमोनिहन्त्री मद्वाचां देवता चाद्या ॥ ११९ ॥

जनतानेत्रानन्दं रूपं यस्याः स्फुटं भाति ।
स्मरणं त्वज्ञानहरं विश्वज्ञानप्रदं च सा जयति ॥ १२० ॥

सहधर्मिणी विधातुर्दारिद्र्यध्वंसिनी निजकटाक्षैः ।
सांनिध्यं जनयतु मे सुरमुनिनरसंनुतस्वमहिमेयम् ॥ १२१ ॥

मुखरितवीणा वाणी वाणीं मे दिशतु नैजनुतियोग्याम् ।
आस्वादितशास्त्रामृतलहरीं सद्यस्तमोनिहन्त्रीं च ॥ १२२ ॥

मणिनूपुरनादनिभा वाणी भाति त्वदीयभक्तमुखे ।
कीर्तिर्दिशासु शुद्धिर्वपुषि बहुमुखी परं काले ॥ १२३ ॥

तव पादस्मरणवशात् ताम्यति तिमिरावलिश्चान्तः ।
आनन्दलहरिवीची प्रसर्पति क्ष्मातले हि भक्तानाम् ॥ १२४ ॥

संपन्नलिनीभानुं ज्ञानाब्धिसुधाकरं हि तव रूपम् ।
भक्त्या मनसि गृणन्तो गच्छन्ति व्योमयानमारूढाः ॥ १२५ ॥

हृत्तमसां दीपरुचिर्विधातृदयिता ममास्तु परदैवम् ।
भवतापमेघमाला कविशुकवासन्तिकश्रीर्हि ॥ १२६ ॥

मम मानसमणिहर्म्ये विहरतु वाण्याः स्वरूपं तु ।
निगमवचसां निगुम्फैर्वेद्यं तद्वेधसा लाल्यम् ॥ १२७ ॥

सततमभिगम्यरूपा विबुधवरेड्या सरस्वती माता ।
मनसि मम संनिधत्तां भूत्यै नः सर्वतः काले ॥ १२८ ॥

मम शिरसि नीचपुण्ये पुण्यघना वेदमौलिहर्म्या च ।
कृतपदविन्यासभरा वाणी जयतीह शतमखादिनुता ॥ १२९ ॥

मायानिरसनदक्षा मातेयं सुप्रसन्ना मे ।
लभते परमं ज्ञानं यद्भक्त्या पामरोऽपि च धरित्र्याम् ॥ १३० ॥

वाणीश्वरि तव रूपं नामस्मरणं च पूजनं भक्त्या ।
सिध्यति सकलविभूत्यै तत्र हि भवतीदयाप्रसारस्तु ॥ १३१ ॥

सफलयतु नेत्रयुगलं हतनतदुरिता च सा परा देवी ।
कमलजमान्यचरित्रा सुमनोवाञ्छाप्रदानकृतदीक्षा ॥ १३२ ॥

पङ्कजमृणालतन्तुप्रतिभटरूपं क्वचिद्दृश्यम् ।
कविकुलवाणीकैरवशारदचन्द्रप्रभाकबलितं च ॥ १३३ ॥

नलिनभवगृहिणि वाणि प्रह्वानां सपदि भक्तानाम् ।
लुम्पसि मोहं भवतीस्मरणाद्वरिवस्यया स्तुत्या ॥ १३४ ॥

कविकुलकल्पकवल्लीमपाङ्गलीलाकृतार्तिशमनां ताम् ।
वाणीमन्वहमार्याराध्यां मोक्षाय निभृतमहमीडे ॥ १३५ ॥

संवित्सुखस्वरूपामम्बां वाणीमहर्निशं मनसि ।
कलये कलितापभरप्रशान्तिकामः प्रभावतीं जयदाम् ॥ १३६ ॥

नतपरिपालिनि वाणि त्रिजगदघध्वंसिनि श्रितानां नः ।
तव पादयुगं निगलं भवतु तमोराशिदुष्टहस्तिगणे ॥ १३७ ॥

कामादिदुर्ग्रहकृतानर्थनिरासाय तावकापाङ्गाः ।
वाणि जनयन्ति नतानां कैवल्य स्वप्रदानाय ॥ १३८ ॥

तव दर्शनं हि मातः परमं संस्कारमात्तपापानाम् ।
कल्याणसूक्तिकन्दलरसप्रदं मान्यते विबुधैः ॥ १३९ ॥

धातुर्वदनसरोजे श्रुतिसीमनि हृदि च भक्तानाम् ।
एकपदा द्विपदा वा राजति वाणी जगन्माता ॥ १४० ॥

मणिमयकाञ्चीलसिता वीणापुस्तककरारविन्दा च ।
नमतां जाड्यविधूननधृतदीक्षा राजते वाणी ॥ १४१ ॥

कबलयतु तापमस्याः स्मरणं पादाब्जवन्दनं वाण्याः ।
धातुर्जिह्वाग्रतले नृत्यन्त्याः सारसूक्तिरसयन्त्याः ॥ १४२ ॥

पद्मजवदनविभूषा निगमशिखोत्तंसपीठिका वाणी ।
सकलविधशास्त्ररूपा भक्तानां सत्कवित्वदानपरा ॥ १४३ ॥

गतिजितमरालगमना मरालवाहा च वेधसो दाराः ।
शिशिरदयासारा सा नमतां संतापहारिणी सहसा ॥ १४४ ॥

स्तनभारसंनताङ्गी दरदलिताम्भोजलोचनान्तश्रीः ।
सविधतले विबुधवधूपरिचरणाद्यैश्च तुष्टचित्ता सा ॥ १४५ ॥

हरिणाङ्कवदनबिम्बा पृथुलनितम्बा कचात्तलोलम्बा ।
निजगतिजितकादम्बा साम्बा पदपद्मनम्रभक्तकदम्बा ॥ १४६ ॥

परिहसितनीलनीरजदेहश्रीः शारदा प्रथमा ।
स्फटिकमणिभरकान्तिः सरस्वती कीर्त्यते च विबुधगणैः ॥ १४७ ॥

नाथे दृढभक्तिमती सृष्ट्यादौ चित्स्वरूपा च ।
धात्रा समानभावा चैकासनपुण्डरीकमध्यस्था ॥ १४८ ॥

प्रीत्या सरसपुमर्थान् ददाति काले चिदादिसंधात्री ।
सा मे दैवतमेषा सततनिषेव्या च कामदा भूयात् ॥ १४९ ॥

हरिचरणनलिनयुगले सदैकताना हि शारदा जननी ।
पद्मानीलादिसखी श्रुत्युद्याने विहाररसभरिता ॥ १५० ॥

धातुः कुटुम्बिनीयं तन्यात् कल्याणसंततिं सततम् ।
या तारुण्यविभूषा समक्रमा त्रिपुरसुन्दर्या ॥ १५१ ॥

नानाक्षरादिमातृकगणेडिता शब्दरूपा च ।
नादब्रह्मविलासा वाणी सा मङ्गलानि नस्तन्यात् ॥ १५२ ॥

दृक्कोणवीक्षणकलानिगमप्राभवविधानदा नमताम् ।
विबुधानां हृदयाब्जं यस्या वासस्थली च निर्दिष्टम् ॥ १५३ ॥

मोहादिवनकुठारा या नित्यं सेव्यते त्रिदशसंघैः ।
नित्यप्रसन्नरूपां शान्तां यामेव सेवते वेधाः ॥ १५४ ॥

नमतां यथैव कलुषं खण्डीक्रियते सुवर्णदृष्टिपुषा ।
यद्वीक्षणेन पुरुषः ख्यातो नृपसदसि मान्यते प्रथमम् ॥ १५५ ॥

यस्यै श्रोत्रियवर्यैस्त्रिसंध्यमर्घ्यादिकं क्रियते ।
या मञ्जुनीतिरूपा वाणीरूपा च भण्यते निपुणैः ॥ १५६ ॥

सा मयि तन्यादीक्षां वीक्षावनदां सरस्वती देवी ।
संतानकुसुमजैत्रीं यामैच्छत् प्राप्तुमञ्जसा वेधाः ॥ १५७ ॥

मन्दस्मितमधुरास्यं कृपावलोकं निरस्तजाड्यतति ।
भूयाद् वाण्या रूपं पुरः कराम्भोजकलितवीणादि ॥ १५८ ॥

वाण्याः परं न जाने दैवतमन्यद् वने गिरौ च पथि ।
गगने वा संरक्षितनतजनतायाः कृपारसार्द्रायाः ॥ १५९ ॥

आस्येन्दोरवलोकनमम्बायाः पादपद्मसेवा च ।
सर्वश्रेयःप्राप्त्यै शास्त्रज्ञैः सुष्ठु निर्दिष्टा ॥ १६० ॥

वाणी हि तापहन्त्री जगतां कारुण्यपूर्णनयनश्रीः ।
मन्दान् करोति विबुधान् द्रावयति शिलास्ततस्तु किं चित्रम् ॥ १६१ ॥

यस्मिन् कटाक्षपूरो न भवति स हि दीनवदनः सन् ।
प्रस्खलितवाग्भयार्तो भिक्षामटतीह निन्दितो बहुशः ॥ १६२ ॥

वाण्याः कटाक्षपूरस्रजा त्वलंकृतनिगालो यः ।
स हि भवति राजमान्यः कान्ताधरमधुरवाग्विलासश्च ॥ १६३ ॥

कविताभाग्यविधात्री परिमलसंक्रान्तमधुपगणकेशा ।
मम नयनयोः कदा वा सा देवी कलितसंनिधानकला ॥ १६४ ॥

परचिद्विधानरूपा वाणी श्रुतिसीम्नि राजते परमा ।
मुनिजनमानसहंसी या विहरति सा शुभाय स्यात् ॥ १६५ ॥

जपमालिकया वाणीकरधृतया वीणया च कोशेन ।
अहमस्मि नाथवानिह किं वाशास्यं परं लोके ॥ १६६ ॥

कैवल्यानन्दसुखप्राप्त्यै तेजस्तु मन्महे किमपि ।
यद् वाञ्छितचिन्तामणिरिति वाणीति च भुवि ख्यातम् ॥ १६७ ॥

कविकुलसूक्तिश्रेणीश्रवणानन्दोल्लसद्वतंससुमा ।
सा देवी मम हृदये कृतसांनिध्या कृतत्राणा ॥ १६८ ॥

यस्या दृष्टिविदूराः कुमताः श्रुत्यर्थवञ्चकाः शप्ताः ।
क्रन्दन्ति दिगन्ततटे मोहाद्यैर्लुप्तनयनाश्च ॥ १६९ ॥

सत्परिषत्संमान्या श्रुतिजीवनदायिनी जगन्माता ।
चतुराननभाग्यकला कृतसांनिध्या हि राजते हृदये ॥ १७० ॥

कृतसुकृतैः संदृश्या मन्दस्मितमधुरवदनपद्मश्रीः ।
मुनिनारदादिपरिषत्तत्त्वोपक्रमविचक्षणा वाणी ॥ १७१ ॥

कविवाग्वासन्तीनां वसन्तलक्ष्मीर्विधातृदयिता नः ।
परमां मुदं विधत्ते काले काले महाभूत्यै ॥ १७२ ॥

कवितारसपरिमिलितं करोति वदनं नतानां या ।
स्तोतुं तां मे द्यारात् सा देवी सुप्रसन्नास्तु ॥ १७३ ॥

यस्याः प्रसादभूम्ना नाकिगणाः सत्त्वसंपन्नाः ।
ऐन्द्रीं श्रियमपि मान्यां पश्यन्ति क्षपितशत्रुभयपीडाम् ॥ १७४ ॥

मान्यं विधातृलोके तत्तेजो भाति सर्वसुरवन्द्यम् ।
ब्रह्माण्डमण्डलमिदं यद्रूपं यत्र चाक्षरगतिश्च ॥ १७५ ॥

जननि तरङ्गय नयने मयि दीने ते दयास्निग्धे ।
तेन वयं तु कृतार्था नातः परमस्ति नः प्रार्थ्यम् ॥ १७६ ॥

वाणि विधातुः कान्ते स्तोतुं त्वामादरेण किं वाच्यम् ।
भासि त्वमेव परमं दैवतमित्येव जानामि ॥ १७७ ॥

कबलिततमोविलासं तेजस्तन्मन्महे महोदारम् ।
फलितसुमनोऽभिलाषं वाणीरूपं विपश्चिकोल्लसितम् ॥ १७८ ॥

पद्मासनसुकृतकलापरिपाकोदयमपास्तनतदोषम् ।
सरसज्ञानकवित्वाद्यनन्तसुकृतं विराजते तेजः ॥ १७९ ॥

निजनाथवदनसिंहासनमारूढामुपास्महे वाणीम् ।
या कृत्रिमवाग्गुम्फैर्विरचितकेलिर्धिनोति विधिमाद्यम् ॥ १८० ॥

सुजनानन्दकरी सा जनयन्ती सर्वसंपदं धातुः ।
भक्तेषु तां नयन्तीमन्वहमहमाद्रिये गिरां देवीम् ॥ १८१ ॥

करुणाकटाक्षलहरी कामायास्तु प्रकामकृतरक्षा ।
वाण्या विधातृमान्या सत्सुखदाने दिशि ख्याता ॥ १८२ ॥

विसरो महोत्सवानां विरिञ्चिनयनावलेरियं माता ।
प्रियकार्यसिद्धिदात्री जगतीरक्षाधुरंधरा जयति ॥ १८३ ॥

विबुधाभिगम्यरूपा हंसावलिसेविता गिरां देवी ।
गङ्गेव कनुति काले परिकम्पितशिवजटाकोटिः ॥ १८४ ॥

नौकां भवाम्बुराशेरज्ञानध्वान्तचन्द्रिकां वाणीम् ।
कलये मनसि सदाहं श्रुतिपञ्जरशारिकां देवीम् ॥ १८५ ॥

भवतापारण्यतले जह्नुसुता शारदा देवी ।
ज्ञानानन्दमयी नः संपत्सिद्ध्यै प्रतिक्षणं जयतु ॥ १८६ ॥

मत्तगजमान्यगमना मधुरालापा च मान्यचरिता सा ।
मन्दस्मेरमुखाब्जा वाणी मम हृदयसारसे लसतु ॥ १८७ ॥

रक्षणचणौ च वाण्याः पादौ वन्दे मनोज्ञमणिनादौ ।
यत्सेवनेन धन्याः पुरुहूताद्या दिशां नाथाः ॥ १८८ ॥

धातुर्धैर्यकृपाणी वाणी सुरवृक्षकुसुममृदुवेणी ।
शुकवाणी नुतवाणी कविकुलमोदाय जयति मृदुवाणी ॥ १८९ ॥

कल्याणैकनिकेतनमस्या रूपं सदा स्फुरतु चित्ते ।
मानसकालुष्यहरं मधुमथनशिवादिबहुमतोत्कर्षम् ॥ १९० ॥

मुनिजनमानसरत्नं चिरत्नमेतद्विधातृसुकृतकला ।
विनतजनलोचनश्रीकर्पूरकला परा जयति ॥ १९१ ॥

धृतसुममधुपक्रीडास्थानायितकेशभारायै ।
नमउक्तिरस्तु मात्रे वाग्जितपीयूषधारायै ॥ १९२ ॥

बालकुरङ्गविलोचनधाटीरक्षितसुरादिमनुजानाम् ।
नयनयुगासेव्यं तद्भातीह धरातले तेजः ॥ १९३ ॥

कुशलविधये तदस्तु श्रुतिपाठरताद्दतात्मबहुकेलिः ।
कबलितपदनतदैन्यं तरुणाम्बुजलोचनं तेजः ॥ १९४ ॥

बालमरालीगत्यै सुरगिरिकन्यादिमहितकलगीत्यै ।
विरचितनानानीत्यै चेतो मे स्पृहयते बहुलकीर्त्यै ॥ १९५ ॥

विनमदमरेशसुदतीकचसुममकरन्दधारया स्निग्धम् ।
तव पादपद्ममेतत् कदा नु मम मूर्ध्नि भूषणं जननि ॥ १९६ ॥

कमलजपरतन्त्रं तद्गततन्द्रं वस्तु निस्तुलमुपासे ।
तेनैवाहं धन्यो मद्वंश्या निरसितात्मतापभराः ॥ १९७ ॥

ज्ञानामृतसंधात्री भवाब्धिसंतरणपोत्रनामादिः ।
वाणी वाचां लहरीमवन्ध्ययन्ती सुरादिनुतचरिता ॥ १९८ ॥

कारुण्यपूर्णमेतद् वाणीरूपं सदा कलये ।
यद्भजनाद् देवानामपि संविद् भाति कार्यकालेषु ॥ १९९ ॥

धीपद्मपीठमास्ते सा वाणी काङ्क्षितानि कलयन्ती ।
या घनकृपास्वरूपा संकीर्त्या सर्वदेवनुता ॥ २०० ॥

तव पादपद्मविसृमरकान्तिझरीं मनसि कलयंस्तु ।
निरसितनरकादिभयो विराजते नाकिसदसि सुरमान्यः ॥ २०१ ॥

कुचयुगलनम्रगात्रं पवित्रमेतद् भजे तेजः ।
धातुरपि सर्वदेवैर्यन्निर्दिष्टं हि भद्राय ॥ २०२ ॥

कृतनतपदवाग्धाटी चेटीभूतामरेशमहिषी नः ।
कटिकृतमनोज्ञशाटी पाटीररसार्द्रनैजतनुकोटी ॥ २०३ ॥

पद्मभवपुण्यकोटी हर्षितकविबृन्दसूक्तिरसधाटी ।
मुखलसितसरसवाटी विलसतु मम मानसे कृपाकोटी ॥ २०४ ॥

ज्ञानपराक्रमकलिका दिशि दिशि किन्नरसुगीतनिजयशसः ।
धन्या भान्ति हि मनुजाः यद्वीक्षालवविशेषतः काले ॥ २०५ ॥

सुरजनपालनदक्षा प्रशान्तवीक्षा निरस्तरिपुपक्षा ।
मोक्षार्थिभिः श्रिता सा लाक्षारसलसितपादभाग् भाति ॥ २०६ ॥

कुङ्कुमभररुचिराङ्गी भाति कृशाङ्गी गिरां देवी ।
धातुरपि ज्ञानप्रदमस्या रूपं वदन्ति विबुधेशाः ॥ २०७ ॥

वाणि नतिमम्ब नित्यं करवाणि हि चित्सुखावाप्त्यै ।
तादृक्त्वदीयकरुणावीक्षणतो गीष्पतिश्च सुरमान्यः ॥ २०८ ॥

कलयामि नतिमनन्तां काले काले शुभप्राप्त्यै ।
धातुः सुकृतोल्लासं करधृतवीणादिकं च यद्रूपम् ॥ २०९ ॥

कमलासनदयिता सा लसतु पुरोऽस्माकमादरकृतश्रीः ।
यत्प्रणमनाज्जनानां कवितोन्मेषः सदीडितो भवति ॥ २१० ॥

परसंविदात्मिका सा महिषी धातुः कलावती वाणी ।
शिशिरीकरोति तप्तान् करुणारसदिग्धनेत्रपाल्या नः ॥ २११ ॥

धातृमनोरथपात्रं संतप्तस्वर्णकाम्यनिजगात्रम् ।
आश्रितकमलजगोत्रं रक्षितनतबाहुजच्छात्रम् ॥ २१२ ॥

कविकुलजिह्वालोलं पितामहाहृतमनोज्ञनिजलीलम् ।
निरसितनतदुष्कालं वन्दे तेजः सदालिनुतशीलम् ॥ २१३ ॥

मन्दानामपि मञ्जुलकवित्वरसदायिनी जननी ।
कापि करुणामयी सा लसतु पुरस्तात् सदास्माकम् ॥ २१४ ॥

निस्तुलपदसंप्राप्त्यै भूयो भूयो नमांसि ते वाणि ।
दीपकलामयि चान्तःस्मरणं धातुः कुटुम्बिन्यै ॥ २१५ ॥

मायानिरासकामो वन्दे वाण्याः पदाम्भोजम् ।
सिद्धमनोरथशतका यद्भजनेनार्थिनः काले ॥ २१६ ॥

सततं बद्धाञ्जलिपुटमुपास्महे तच्छुभप्रदं तेजः ।
यत्कमलजनयनानां प्रमोदपीयूषलहरिकामोदम् ॥ २१७ ॥

दिवि वा भुवि दिक्षु जले वह्नौ वा सर्वतो वाणि ।
जन्तूनां किल रक्षा त्वदधीना कीर्त्यते विबुधैः ॥ २१८ ॥

भारति भवतापार्तान् पाहि कटाक्षाङ्कुरैः शीतैः ।
परमानन्दविधातॄन् यानेव स्तौति पद्मवासोऽपि ॥ २१९ ॥

कुलदैवतमस्माकं तत्तेजः कुटिलकुन्तलं किमपि ।
करधृतपुस्तकवीणं कलये कामागमोदयं धातुः ॥ २२० ॥

परमानन्दधनं तद्धातुरपि ब्रह्मतत्त्वरसदायि ।
आब्रह्मकीटनृत्यत्स्ववैभवं जयति शारदारूपम् ॥ २२१ ॥

विबुधजनमोदजननी जननी नः सा विधेः पत्नी ।
मृदुसंचारविलासैः शुभंकरी भवतु संततं काले ॥ २२२ ॥

सरसमनोज्ञविलासैः स्ववशे कृत्वा मनो विधेर्वाणी ।
सृष्ट्यादौ शुभलेखाकरी नृणां मस्तके माता ॥ २२३ ॥

प्रकृतिमृदुलं पदाब्जं वाणीदेव्या मदीयचित्ततटे ।
कामादिमूर्चिनिचिते कथं स्थितिं प्राप्नुयात् काले ॥ २२४ ॥

निखिलचराचररक्षां वितन्वती पद्मजप्रिया देवी ।
मम कुलदैवतमेषा जयति सदाराध्यमान्यपदकमला ॥ २२५ ॥

कुशलसमृद्ध्यै भूयादम्बा सा शारदा देवी ।
जनिरक्षणादिलीलाविहारभाङ्निगमसौधदीपकला ॥ २२६ ॥

वाचालयति कटाक्षैर्जडं शिलामल्पजन्तुं वा ।
या वाणी सा शरणं भवे भवे प्रार्थये श्रियःप्राप्त्यै ॥ २२७ ॥

यदि हि प्रसादभूमा वाण्यास्तत्रैव सा हरेः कान्ता ।
परिलसित . . . . . . . नित्यवासरता ॥ २२८ ॥

सनकसनन्दनवन्द्ये कान्ते परमेष्ठिनः श्रियःप्राप्त्यै ।
वाणि त्वां नौमि सदा भव प्रसन्ना विपञ्चिलसितकरे ॥ २२९ ॥

वाणि विपञ्चीकलरवरसिके गन्धर्वयोषिदभिवन्द्ये ।
तव चरणं मम शरणं भववारिधिसेतुमम्ब कलयामि ॥ २३० ॥

वाणि कदाहं लप्स्ये चरणाम्भोजं त्वदीयमिदमारात् ।
निजमणिनूपुरनादस्पृहणीयवचःपदं कलितभक्तेः ॥ २३१ ॥

श्रुतिपूतमुखमनोहरलावण्यकुसुममृदुशरीरेयम् ।
निजकरुणापाङ्गसुधापूरणकृतवैभवा भाति ॥ २३२ ॥

परिसरनतविबुधालीकिरीटमणिकान्तिवल्लरीविसरैः ।
कृतनीराजनविधि ते मम तु शिरोभूषणं हि पदयुगलम् ॥ २३३ ॥

प्रेमवती विधिभवने हंसगतिर्हंसयानकृतचारा ।
वाचामकृत्रिमानां स्थैर्यविधात्री महेशानी ॥ २३४ ॥

आनन्दरूपकोटीमम्बां तां संततं कलये ।
संविद्रूपा या किल विधातृगेहे श्रुतिश्रियं धत्ते ॥ २३५ ॥

कमलजनेत्रमहोत्सवतारुण्यश्रीर्निरस्तनतशत्रुः ।
ललितलिकुचाभकुचभरयुगला दृग्विजितहरिणसंदोहा ॥ २३६ ॥

कारुण्यपूर्णनयना कलिकल्मषनाशिनी च सा वाणी ।
मुखजितशारदकमला वक्त्राम्भोजे सदा स्फुरतु माता ॥ २३७ ॥

कमलसुषमानिवासस्थानकटाक्षं चिराय कृतरक्षम् ।
रक्षोगणभीतिकरं तेजो भाति प्रकाममिह मनसि ॥ २३८ ॥

कमलजतपःफलं तन्मुनिजनहृदयाब्जनित्यकृतनृत्तम् ।
करुणालोलापाङ्गं तत्तेजो भातु मम मुखाम्भोजे ॥ २३९ ॥

भाग्यं विधिनयनानां संसृतितापज्वरादितप्तानाम् ।
भेषजमेतद्रूपं कलाग्रहं मन्यते देव्याः ॥ २४० ॥

जननि कदा वा नेष्याम्यहमारादर्चितत्वदीयपदः ।
निमिषमिव हन्त दिवसान् दृष्ट्वा त्वामादरेण कल्याणीम् ॥ २४१ ॥

मञ्जुलकवितासंततिबीजाङ्कुरदायिसारसालोका ।
जननि तवापाङ्गश्रीर्जयति जगत्त्राणकलितदीक्षेयम् ॥ २४२ ॥

अम्ब तवापाङ्गश्रीरपाङ्गकेलीशतानि जनयन्ती ।
धातुर्हृदये जयति व्रीडामदमोदकामसारकरी ॥ २४३ ॥

सर्वजगन्नुतविभवे संततमपि वाञ्छितप्रदे मातः ।
अधुना त्वमेव शरणं तेनाहं प्राप्तजन्मसाफल्यः ॥ २४४ ॥

शान्तिरससर्वशेवधिमम्बां सेवे मनोरथावाप्त्यै ।
यामाराध्य सुरेशाः स्वपदं प्रापुर्हि तद्रक्षम् ॥ २४५ ॥

कुलजा भार्या कीर्तिर्दानं पुत्रादयो ये च ।
सिध्यन्ति ते हि सर्वे यस्मै वाणी प्रसन्ना सा ॥ २४६ ॥

का क्षतिरम्ब कटाक्षे न्यस्ते सति मयि विरिञ्चिवरपत्नि ।
गङ्गाशुनकन्यायान्महती मम वृद्धिरीरिता निपुणैः ॥ २४७ ॥

अविरलदयार्द्रलोचनसेवनया धूततापा हि ।
प्रतिकल्पं सुरसंघास्त्वामभजन् नुतिनतिप्रमुखैः ॥ २४८ ॥

दीनानां च कवीनां वाणि त्वं कामधेनुरसि मातः ।
सिद्धिस्तेषामतुला सुरमान्या तेन संकलिता ॥ २४९ ॥

सकलजगतां हि जननीं वाणि त्वां संततमुपासे ।
श्रुतिसुदतीभूषामणिमखिलार्थप्राप्तये लोके ॥ २५० ॥

धातुः कुटुम्बिनी त्वं सन्मङ्गलदायिनी स्वमाहात्म्यात् ।
श्वश्रूश्वशुरमुखादिप्रीणनचतुरा च भासि निगमकला ॥ २५१ ॥

मुखविजितचन्द्रमण्डलमिदमम्भोरुहत्रिलोचनं तेजः ।
ध्याने जपे च सुदृशां चकास्ति हृदये कवीश्वराणां च ॥ २५२ ॥

यस्मै प्रसन्नवदना सा वाणी लोकमाता हि ।
तस्य सहसा सहस्रं लाभः स्याद् बान्धवाः सुखिनः ॥ २५३ ॥

तापहररसविवर्षणधृतकुतुका कापि नीलनलिनरुचिः ।
कादम्बिनी पुरस्तादास्तां नः संततं जननी ॥ २५४ ॥

पद्माक्षनाभिपद्मजदयिते लोकाम्ब शारदेति सदा ।
तव नामानि जपन् सन् त्वद्दासोऽहं तु मुक्तये सिद्धः ॥ २५५ ॥

अम्बाप्रसादभूम्ना नरो हि भुङ्क्ते सुखानि विविधानि ।
समरे विजयः कविताधनलक्ष्म्यादेर्विलासलीलादिः ॥ २५६ ॥

तीरं संसृतिजलधेः पूरं कमलजविलोचनप्रीतेः ।
सारं निगमान्तानां दूरं दुर्जनततेर्हि तत्तेजः ॥ २५७ ॥

अपि दासकुले जातः कटाक्षभूम्ना विधातृमुखपत्न्याः ।
ज्ञानी भववाराशिं तरति च राज्यश्रियं भुङ्क्ते ॥ २५८ ॥

सत्कृतदेशिकपादाम्बुजयुगलोऽहं नमामि वाणि त्वाम् ।
त्वं तु गुरुमूर्तिरुक्ता काले काले च काङ्क्षितविधात्री ॥ २५९ ॥

ज्ञानानन्दमुखादीनपवर्गं वा ददासि भक्तेभ्यः ।
अत एवानन्यगतिस्त्वां विधिपत्नीं प्रपद्येऽहम् ॥ २६० ॥

त्वयि विन्यस्तभराणां न हि चिन्ता जायते नृणां क्वापि ।
परमानन्दादिकलास्फूर्तिर्दिविषद्गणेन संमान्या ॥ २६१ ॥

सुमशरसाम्राज्यकलामङ्गलविधिरेखिका वाणी ।
धातुरपि चित्तवृत्तिस्थैर्यं त्वन्यादृशं कुरुते ॥ २६२ ॥

सा धेनुश्चिन्तामणिरपि वृक्षः संपदां प्रदायिन्यः ।
अम्ब त्वमेव काले भासि ज्ञानप्रदा व्यपोह्य तमः ॥ २६३ ॥

मनसो नैर्मल्यप्रदमस्याः सेवे कटाक्षमहमारात् ।
यः कुरुते जनतां तां हतमायां मधुरामयोध्यां च ॥ २६४ ॥

शरदिव हंसकुलेड्या ज्योत्स्नेव जनार्तिहारिणी वाण्याः ।
जयति हि कटाक्षरेखा दीपकलेव प्रकामहततिमिरा ॥ २६५ ॥

पङ्कजभववदनमणिं परविद्यादेवतां वाणीम् ।
नित्यं यजतां जपतां न हि तुल्योऽस्मिन् क्षमातले कश्चित् ॥ २६६ ॥

वाणी निजवाणीभी रचयति नुतिमात्तवीणया काले ।
धातुः प्रसादहेतोः पतिव्रतालक्षणैरन्यैः ॥ २६७ ॥

आनन्दयति विलासैरम्बा पद्मासनं निजं देवम् ।
तेनैव तुष्टहृदयः शुभाक्षराण्यादराल्लिखति मौलौ ॥ २६८ ॥

मम मानसदुर्मदगजमपारतापाटवीषु धावन्तम् ।
विरचय्य मुदितचित्तं कुरु वाणि त्वत्पदाब्जकृतहस्तम् ॥ २६९ ॥

कमलासनधैर्यमहीधरकुलिशस्ते कटाक्ष एवायम् ।
कविकुलमयूरकादम्बिनीविलासो मुदेऽस्तु सततं नः ॥ २७० ॥

गुरुवरवदनाम्भोजे नृत्यन्ती शारदा देवी ।
मधुरतरश्लोकनिभा मणिनूपुरनिनदसंततिर्भाति ॥ २७१ ॥

को वा न श्रयति बुधः श्रेयोऽर्थी तामिमां वाणीम् ।
यां पङ्कजाक्षनाभिजसधर्मिणीमर्चयन्ति सुरनाथाः ॥ २७२ ॥

मुषितपयोजमृदिम्ना चरणतलेनात्र मानसे वाणी ।
परिहरतु पापराशिं सुरौघसंमानितेन काले मे ॥ २७३ ॥

याथार्थ्यज्ञानकलाप्राप्त्यै त्वां शारदां वन्दे ।
सेवाफलं प्रयच्छ प्रसीद परमेशि वल्लभे धातुः ॥ २७४ ॥

निगमान्तसारमर्थं बोधयसि त्वं गुरून् प्रकल्प्य भुवि ।
सैषा मे ज्ञानघना वाणी नित्यं प्रसन्नासि ॥ २७५ ॥

मन्दारकुसुममदहरमन्दस्मितमधुरवदनपङ्करुहा ।
हृद्यतमनित्ययौवनमण्डितगात्री विराजते वाणी ॥ २७६ ॥

सौभाग्यसूचकाभी रेखाभिर्भूषितं सुरैर्वन्द्यम् ।
अम्बाचरणपयोजं वतंसयन् प्राप्तसंमोदः ॥ २७७ ॥

द्विजगणपूज्यं नित्यं निरस्तजाड्यं त्वदीयपादयुगम् ।
क्षणमपि वा सांनिध्यं भजतु मदीये हृदि स्वैरम् ॥ २७८ ॥

नतदेवराजमकुटीमणिघृणिपरिचुम्बिताङ्घ्रिकमला नः ।
कमलासनस्य दयिता तन्यादन्यादृशी श्रियं भजताम् ॥ २७९ ॥

वाणी श्रितकादम्बा दम्भादिरिपून् निरस्य नः काले ।
क्षेममवन्यां तन्यात् पदे परे देवसंघपरिसेव्ये ॥ २८० ॥

पङ्कजभवसाम्राज्यस्थिरलक्ष्मीश्चन्द्रपाण्डरतनुश्रीः ।
नतमानवसुकृतकलापरिपाटी भाति सकलगुणपेटी ॥ २८१ ॥

मुखविजितचन्द्रबिम्बा साम्बा कादम्बसेव्यपदकमला ।
कमलासनगृहलक्ष्मीर्लक्ष्मीं पुष्णातु शारदा देवी ॥ २८२ ॥

मुरमथनस्येव रमा शंभोरिव सकलभूधरेन्द्रसुता ।
वाणि विधातुः सदनेऽनुरूपदाम्पत्यसंपदा भासि ॥ २८३ ॥

वाणि तव देहकान्त्या कटाक्षलहरी तु संयुता काले ।
धत्ते कामपि शोभां सुरस्रवन्त्येव संगता यमुना ॥ २८४ ॥

मधुरासेचनदृष्ट्या मां पायादापदो मुहुर्वाणी ।
आश्रिततापविभेत्रीत्येवं यामामनन्ति सूरिवराः ॥ २८५ ॥

अज्ञातकोपपूरा यस्या दृष्टिः कृतादरा भजताम् ।
सैषा विहसितपौरंदरलक्ष्मीं संपदं दद्यात् ॥ २८६ ॥

बालकुरङ्गविलोचनमीषत्स्मितमधुरमाननं वाण्याः ।
मणिमयताटङ्कमणीविलासि भूयान्मुदेऽस्माकम् ॥ २८७ ॥

मुनिजनमानसहंसीं श्रुतिततिपञ्जरशुकीं महादेवीम् ।
नौमि स्नुषां रमायाः माहेश्वरमहितसत्पदप्राप्त्यै ॥ २८८ ॥

धातुः सौधाङ्गणकृतचङ्क्रमणां शारदां नौमि ।
मत्तमतङ्गजगमनां परिपन्थिजयाय सुकृतिसंदृश्याम् ॥ २८९ ॥

वागीशमुखा देवा यस्याः प्रसदनबलाद्धि विजयन्ते ।
परिपालितभक्तगणा यद्ध्यानोल्लसदपारपुलकान्ताः ॥ २९० ॥

नैसर्गिकवाक्श्रेणीकेलिवनममलभूषणं धातुः ।
वदनानामियमम्बा जयतु चिरं कामवर्षिणी भजताम् ॥ २९१ ॥

कलयामि हृदयमेतत् पादाब्जे शारदादेव्याः ।
प्राप्तारिषट्कविजयं तत्त्वधनं कलितशारदाध्यानम् ॥ २९२ ॥

पादारविन्दनमनप्रभावपरिकलितदेवसारूप्याः ।
परमानन्दनिमग्नाः सुधियो भान्ति क्षमावलये ॥ २९३ ॥

ललितविधातृरूपं पालितलोकत्रयं च तत् तेजः ।
सकलागमशिखरकलापरतत्त्वं शारदारूपम् ॥ २९४ ॥

ध्यानैर्योगैश्च जपैर्यत् सेव्यं परममादिष्टम् ।
तन्नश्चकास्तु हृदये विश्वजनीनं हि भक्तानाम् ॥ २९५ ॥

भागीरथीव वाणी तव नुतिरूपा विराजते परमा ।
इह मातर्यद्भजनं सर्वेषां सर्वसंपदां हेतुः ॥ २९६ ॥

संततमधुरालापैर्ललितविधिवैभवैरमेयकलैः ।
श्रेयःप्रदानदीक्षितकटाक्षपातैर्महातत्त्वैः ॥ २९७ ॥

खेलल्लोलम्बकचैः कुचभरनम्रैः पुरंध्रिगुणपूर्णैः ।
आश्रितसंवित्पीठैरमरेशवधूकरादृतच्छत्रैः ॥ २९८ ॥

वीणापुस्तकहस्तैर्विधिभाग्यैरस्तु मम तु सारूप्यम् ।
संविद्घनैश्च वाणीरूपैरेतैर्दयासारैः ॥ २९९ ॥

मातः कथं नु वर्ण्यस्तव महिमा वाणि निगमचयवेद्यः ।
इति निश्चित्य पदाब्जं तव वन्दे मोक्षकामोऽहम् ॥ ३०० ॥

त्वामम्ब बालिशोऽहं त्वचमत्कारैर्गिरां गुम्फैः ।
अयथायथक्रमं हि स्तुवन्नपि प्राप्तजन्मसाफल्यः ॥ ३०१ ॥

इति श्रीशारदात्रिशती समाप्ता

# ९७. सरस्वत्यष्टकम्[1]

## रामचन्द्रकविकृतम्

– – – ⏑ ⏑ ⏑ – ⏑ – – ⏑ वदना सौवर्णपद्मासनी
यैषा रक्तकुशेशयाभचरणा सौवर्णदेहोज्ज्वला ।
यस्या वक्षसि कुम्भिकुम्भसदृशौ पीनावुभौ हि स्तनौ
वाणी मे वदने सदा वसतु सा पद्मासनाङ्कस्थिता ॥ १ ॥

या देवी सुरनाथवन्द्यचरणा सौन्दर्यभाग्याधिका
ब्राह्मे वक्षसि सर्वदा स्थितवती श्वेताम्बरं बिभ्रती ।
गायन्ती पिकनादजित्कलरवं कौतूहलाद् देवता
वाणी मे वदने सदा वसतु सा पद्मासनाङ्कस्थिता ॥ २ ॥

या देवी परमार्थदा मुनिमनोध्यानैकरूपास्पदा
या बिम्बाधरशोभमानवदना या मीननेत्रा परा ।
या भृङ्गालिसमालका सुतिलकैर्या शोभमानालिका
वाणी मे वदने सदा वसतु सा पद्मासनाङ्कस्थिता ॥ ३ ॥

यस्याः कण्ठसमानरूपभरणे शङ्खोऽपि नैवार्हति
यस्याः स्मेरसमानकान्तिसदृशा नैवाभवच्चन्द्रिका ।
यस्या बिम्बफलं न साम्यमुदभूद् रक्तोष्ठकान्त्यार्हिकीं (?)
वाणी मे वदने सदा वसतु सा पद्मासनाङ्कस्थिता ॥ ४ ॥

वासः श्वेततरं विभाति तिलकं फाले शरीरेऽपि च
नासाग्रे कनकाक्तमौक्तिकवरं कण्ठे शुभा मालिका ।

[1] Based on the single MS. No. 70818 (D. C. No. 2813).

यस्याश्चित्रतरं विभाति भुजयोः केयूरयुग्मं ज्वलद्
वाणी मे वदने सदा वसतु सा पद्मासनाङ्कस्थिता ॥ ५ ॥

पादौ पद्मजितौ फणीन्द्रसदृशौ बाहू शरीरं लता
यस्याः शोभितकुम्भिकुम्भसदृशौ पृष्ठावुभावंसतः ।
यस्याः पादाङ्गुल्यः प्रविरलतराः कीरवक्त्रप्रकाशा(?)
वाणी मे वदने सदा वसतु सा पद्मासनाङ्कस्थिता ॥ ६ ।

या देवी सकलप्रजासु नियतं वाग्रूपधारी स्थिता
या देवैरपि वन्द्यमानचरणा स्वाहास्वधारूपधृक् ।
यस्याः किं च कटाक्षपातनकृतौ सर्वे जनाः श्रीयुता
वाणी मे वदने सदा वसतु सा पद्मासनाङ्कस्थिता ॥ ७ ॥

यां देवीं मुनयो वदन्ति परमं तद् ब्रह्मरूपं शिवं
विद्वांसोऽपि सरस्वतीमिति च यां भक्ताश्च गौरीमिति ।
राजानो बहुद्रव्ययुक्तमनुजा वक्ष्यन्ति यां सिन्धुजां
वाणी मे वदने सदा वसतु सा पद्मासनाङ्कस्थिता ॥ ८ ॥

इदमष्टकमादरेण यः पठेल्लभते वाञ्छितमर्थमुत्तमम् ।
स भजते कवितामधिकं यशः प्रभवते सकलप्रजाधिकः ॥ ९ ॥

कविना **रामचन्द्रेण** रचितं चेदमष्टकम् ।
**मूलाण्ड**वासिना देव्या भारत्याः स्तवमुत्तमम् ॥ १० ॥

अस्मिन् स्तवे सरस्वत्याः श्लोकैरष्टभिरादृते ।
अबद्धा ये च ते गोप्याः सरस्वत्या कवीश्वरैः ॥ ११ ॥

[इति श्रीसरस्वत्यष्टकं संपूर्णम्]

## ९८. सूर्यार्याद्वादशकम्[1]

उद्यन्नद्य विवस्वानारोहन्नुत्तरां दिवं देवः ।
हृद्रोगं मम सूर्यो हरिमाणं चाशु नाशयतु ॥ १ ॥[2]

निमिषार्धेनैकेन द्वे च शते द्वे तथा सहस्रे द्वे ।
क्रममाण योजनानां नमोऽस्तु ते नलिननाथाय ॥ २ ॥[3]

शिवरूपाज्ज्ञानमहं त्वत्तो मुक्तिं जनार्दनाकारात् ।
शिखिरूपाच्चैश्वर्यं भवतश्चारोग्यमिच्छामि ॥ ३ ॥[4]

कर्मज्ञानखदशकं मनश्च जीव इति विश्वसर्गाय ।
द्वादशधा यो विचरति स द्वादशमूर्तिरस्तु मुदे ॥ ४ ॥[5]

त्वं यजुरृक् साम त्वं त्वमागमस्त्वं वषट्कारः ।
त्वं विश्वं त्वं हंसस्त्वं भानुस्त्वं परमहंसश्च ॥ ५ ॥[6]

त्वचि दोषा दृशि दोषा हृदि दोषा येऽखिलेन्द्रियगदोषाः ।
तान् पूषा हतदोषान् ईषद्रोषाग्निना दहतु ॥ ६ ॥[7]

[1] Based on the MS. No. 77442 (D. C. No. 2690). The Mantra-s added to each of the verses of the Stotra are given below in the footnotes as found in the MS. MD. 11312 does not contain these Mantra-s but adds *ṛṣi*, *chandas*, etc. It has no significant variants.

[2] उद्यन्नद्य मित्रमहः । ह्रां मित्राय नमः ।

[3] आरोहन्नुत्तरां दिवम् । ह्रीं रवये नमः ।

[4] हृद्रोग मम सूर्यं । ह्रूं सूर्याय नमः ।

[5] हरिमाणं च नाशय । ह्रैं भानवे नमः ।

[6] शुकेषु मे हरिमाणम् । ह्रौं खगाय नमः ।

[7] रोपणाकासु दध्मसि । ह्रः पूष्णे नमः ।

तिमिरमिव नेत्रतिमिरं पटलमिवाशेषरोगपटलं च ।
काचमिव धीनिकोचं कालपिता मम निराकुर्यात् ॥ ७ ॥[1]

धर्मार्थकाममोक्षप्रतिरोधिन उग्रवेगतापकरान् ।
मन्दीकृतेन्द्रियगुणान् गदान् विनाशयतु चण्डांशुः ॥ ८ ॥[2]

येन विनान्धं तिमिरं जगदेतद्यत्र सति धृतबोधम् ।
तं नलिनीभर्तारं हर्तारं चापदामीडे ॥ ९ ॥[3]

यस्य सहस्राभीशोरभीशुलेशो हिमांशुबिम्बगतः ।
भासयति नक्तमखिलं खिलयतु स विपद्गणानखिलान् ॥ १० ॥[4]

वाताश्मरीदुर्नामत्वग्दोषमहोदरप्रमेहांश्च ।
ग्रहणीभगंधरमुखा महारुजोऽपि त्वमिन हरसि ॥ ११ ॥[5]

त्वं शरणं त्वं माता त्वं तातस्त्वं धनं त्वमाचार्यः ।
त्वं त्राता त्वं हर्ता विपदामर्क प्रसीद मम ॥ १२ ॥[6]

इत्यार्याद्वादशकं साम्बस्य पुरो नभस्तलात् पतितम् ।
पठतां भाग्यसमृद्धिः समस्तरोगक्षयश्च स्यात् ॥ १३ ॥

आर्याद्वादशकं संपूर्णम्

[1] अथो हारिद्रवेषु मे । ह्रां ह्रीं हिरण्यगर्भाय नमः ।
[2] हरिमाणं निदध्मसि । ह्रूं ह्रैं मरीचये नमः ।
[3] उदगादयमादित्यः । ह्रौं ह्रः आदित्याय नमः ।
[4] विश्वेन सहसा सह । ह्रां ह्रीं ह्रूं सवित्रे नमः ।
[5] द्विषन्तं मह्यं न रन्धयन् । ह्रैं ह्रौ ह्रः अर्काय नमः ।
[6] मो अहं द्विषते रधम् । ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः भास्कराय नमः ।

## ९९. हनुमत्प्रसादस्तोत्रम्[1]

### (भैरोजी)रङ्गनाथकृतम्

विलासो वैदेहीहृदयकमलोन्मीलनकला-
विदग्धो वाचां यः समभवदशोकावनितले ।
प्रमाद्यल्लङ्केशस्मयविदलनोद्दाममहिमा
स दद्यादस्माकं सुरभिरिह वाचां मधुरताम् ॥ १ ॥

त्विषामीशं देवं वियति समुदञ्चत्स्वकिरणं
सुरद्रोर्मन्वानः फलमिति परीपाकमधुरम् ।
ग्रहीतुं तं मातुर्बहिरवतरन्नेव जठरात्
समुद्युक्तो योऽभूत् स वितरतु धाटीं मम गिराम् ॥ २ ॥

तुरासाहि स्तोकं रचितवति यस्मिन्नविनयं
वितन्वन्तं स्तब्धं बधिरमवशं लोकमखिलम् ।
समाधातुं क्लप्तं कति कति समीरं स्तुतिगिरः
समन्ताद्वैधात्र्यो दिवि समुदिता नः स शरणम् ॥ ३ ॥

तपस्तप्त्वा तीव्रं जगति शरदां यच्छतमहो
सुराणां सर्वेषां समभिलषितं चाप्यसुलभम् ।
तदस्मिन् ब्रह्मास्त्रं समजनि यया कुण्ठितबलं
नमस्तस्यै शक्त्यै प्रणतजनगत्यै भवतु मे ॥ ४ ॥

पुरस्तादुल्लोलोच्चलदलघुवीचीतरलितं
पयोधिं संवीक्ष्य द्रुतगलितधैर्ये कपिकुले ।
जजृम्भे गम्भीरा तनुरधिमहेन्द्रक्षितिधरं
यदीया दिव्या सा भवतु मम भव्याय महते ॥ ५ ॥

[1] Based on a recent transcript, No. TR 804 (D. C. No. 2568)

महावेगे तस्मिन् तरति जलधिं साह्यविधये
समायाताः केचिन्न परिगणिताः कार्यवशतः ।
विनश्यद्विश्वासे मरणशरणे दुर्गतजने
सुखं वा दुःखं वा किमु कलयते कार्यपरता ॥ ६ ॥

गभीरप्रोन्मीलन्नतवलितनाभीविलसितं
मदोद्यल्लोलम्बद्युतिरुचिररोमावलियुतम् ।
समुन्मीलत्सान्द्रत्रिवलिजितगङ्गाम्बुललितं
नताङ्गीबृन्दं को भवति विमुखो वीक्ष्य यद्दते ॥ ७ ॥

स्फुटन्मल्लीमालाकलितकबरीभाररुचिराः
समञ्चद्वक्षोजद्वयविहतकोकीमदभराः ।
समृध्यत्तारुण्या निशि विवसना वीक्ष्य युवती-
र्विना तं धीराग्र्यं जगति गणयेत् तुच्छमिह कः ॥ ८ ॥

त्रिलोकीकल्याणी त्रिषवणपराणामभिमता
त्रयीवेद्या स्तुत्या त्रिदशपतिसंत्राणनिपुणा ।
दिदीपे शाखेव क्षितिनिपतिता प्रोन्नततरो-
रशोकोद्याने यन्नयनसुभगा दीप्तिकलिका ॥ ९ ॥

दयासारद्रोणी दरदलितपङ्केरुहरुचिः
शरज्ज्योत्स्नाधारा शमधनजनानन्दजननी ।
अशोकोद्यानेऽर्चिःकलितकरुणा कापि रुरुचे
यदग्रे कल्याणी कलयतु स नः कामितमिह ॥ १० ॥

विलुप्ते विश्वासे विगतवति धैर्ये द्रुमतले
निरूपाभिर्हहो विनयरहिताभिः परिवृतौ ।

निदेशे यो भावः समजनि रहो भूषणवरे
चिराद् दृष्टे देव्या तमनुगदितुं को नु चतुरः ॥ ११ ॥

पटीयान् पाथोधेः सलिलमखिलं शोषकलिलं
विधातुं लङ्कां वा भसितकलुषां मारुतसखः ।
यदीयं वालाग्रं स्वयमधिगतो नादहदहो
स मे देवो हार्दं व्यपनयतु गाढान्धतमसम् ॥ १२ ॥

समुत्साहं ब्रूमः कथमिव कपीनां यदुदिते
समुत्कण्ठा सर्वंकषपटुनि गम्भीरवचसि ।
अहो दृष्टा सीतेत्यमृतरसनिष्यन्दमधुरे
निषीदद्बालानामिव स जयतान्मातृवचने ॥ १३ ॥

यदानीते सान्द्रस्फुरदनुपमानन्दलहरी
यथा धेनोर्वत्सेऽस्रवदिव जगन्मूर्तिहृदये ।
स देवीमूर्धालंकरणमहिते दृष्टिविषये
मणौ स्यान्मे भूत्यै प्रणतजनचिन्तामणिवरे ॥ १४ ॥

जयतु जयतु रम्यं ब्रह्मचर्यस्य भाग्यं
जयतु जयतु देव्या अञ्जनायाश्च भाग्यम् ।
जयतु च रघुवीरे भक्तिमद्भागधेयं
जयतु विशरणानां पक्त्रिमं भागधेयम् ॥ १५ ॥

**भैरोजीरङ्गनाथेन** कृतं स्तोत्रं हनूमतः ।
भूयाद् भूत्यै रसविदां भक्तिभाजां हनूमति ॥ १६ ॥

इति श्रीहनुमत्प्रसादस्तोत्रं समाप्तम्

# १००. हरिहरस्तुतिः[1]

श्रीनिवासविरचिता

हरिभक्ता हयवदनं हरभक्ताः प्रार्थयन्ति गजवदनम् ।
हरिहरभक्तास्तु वयं गुरुवदनं प्रार्थयामहे प्रथमम् ॥ १ ॥

कपिशरुचिजटामण्डितहिमकरकोटिस्फुरन्मणीमुकुटः ।
अविरलविभूतिसङ्गो बहुमायोमाधवः सुखं दिशतु ॥ २ ॥

यो ह्यङ्गुलीयकधरो यो हि कटकवांश्च यो हि कुण्डलवान् ।
यः श्यामलाधिकरुचिर्बहुमायोमाधवः सुखं दिशतु ॥ ३ ॥

निटिललसत्तिलकतया कनकप्रभमध्यनेत्रदेदीप्रः ।
मुग्धस्मरमदहन्ता बहुमायोमाधवः सुखं दिशतु ॥ ४ ॥

गणनायकतातोऽयं वेदस्तुत्यो न लोकवाग्विषयः ।
कालो वैकुण्ठपदो बहुमायोमाधवः सुखं दिशतु ॥ ५ ॥

वपुषि कलत्रं वहते सानुमतो यः सुतां न दीनस्य ।
वृषभारोहविलासी बहुमायोमाधवः सुखं दिशतु ॥ ६ ॥

यस्य सुतश्च स्कन्दः श्रीमान् ब्रह्माण्डमप्यसमबाणः ।
देवाग्रण्यो जितवान् बहुमायोमाधवः सुखं दिशतु ॥ ७ ॥

[1] Based on the MS. No. PM 2906 (D. C. No. 3144) and it is collated with the text printed in the *Śaṃkaragurukulapatrikā* (vol. I, No. 2, 1939, pp. 9-10). See *Harastuti* in vol. I of the *Stotra-samuccaya*, p. 291 and also *Haristuti* above, pp. 222-3.

क्लृप्त्वा कामपि मायां संध्याविर्भावसमयकौतुकवान् ।
यो बहुधा नटति नटो बहुमायोमाधवः सुखं दिशतु ॥ ८ ॥

यद्यप्यनन्तनामा शिवनामायं जनैः सदा जप्यः ।
ननु धीवरो ध्रुवोऽभूद् बहुमायोमाधवः सुखं दिशतु ॥ ९ ॥

वृषभचरो दिग्वसनो जितेन्द्रियो गाङ्गजलधरो धन्वी ।
लिङ्गाकृतिरनलाक्षो धरणिरथः शंभुरस्ति गोविन्दः ॥ १० ॥

चन्द्रान्वयमूर्धन्यो गोपालो गरुडविहरणश्चेति ।
हरिरस्ति विरूपाक्षः पशुपतिरपि चन्द्रशेखरो व्यक्तम् ॥ ११ ॥

लक्ष्मीवेङ्कटनाम्नोस्तनयः सन् श्रीनिवासाख्यः ।
विप्रो वाजसनेयी स्तुतिमेकोक्त्या चकार हरिहरयोः ॥ १२ ॥

इति श्रीनिवासविरचिता हरिहरस्तुतिः संपूर्णा

## १०१. मङ्गलाष्टकम्[1]

वादिराजविरचितम्

यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथान्ये ।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनायकाय ॥ १ ॥

[1] Edited from the MSS. Nos. 70257 and PM 919 (D. C. Nos. 3106-7). It is printed in the *Bṛhatstotraratnākara*, vol. I, NSP, 1963, pp. 1-2.

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा[1] ॥ २ ॥

लक्ष्मीर्यस्य परिग्रहः कमलभूः सूनुर्गरुत्मान् रथः
पौत्रश्चन्द्रविभूषणः सुरगुरुः शेषश्च शय्या पुनः ।
ब्रह्माण्डं वरमन्दिरं सुरगणा यस्य प्रभोः सेवकाः
स त्रैलोक्यकुटुम्बपालनपरः कुर्याद्धरिर्मङ्गलम् ॥ १ ॥

ब्रह्मा वायुगिरीशशेषगरुडा देवेन्द्रकामौ गुरु-
श्चन्द्रार्कौ वरुणानलौ मनुयमौ वित्तेशविघ्नेश्वरौ ।
नासत्यौ निर्ऋतिर्मरुद्गणयुताः पर्जन्यमित्रादयः
सस्त्रीकाः सुरपुंगवाः प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥ २ ॥

विश्वामित्रपराशरौर्वभृगवोऽगस्त्यः पुलस्त्यः क्रतुः
श्रीमानत्रिमरीचिकौत्सपुलहाः शक्तिर्वसिष्ठोऽङ्गिराः ।
माण्डव्यो जमदग्निगौतमभरद्वाजादयस्तापसाः
श्रीविष्णोर्गुणराशिकीर्तनपराः कुर्वन्तु नो मङ्गलम् ॥ ३ ॥

मान्धाता नहुषोऽम्बरीषसगरौ राजा पृथुर्हैहयः
श्रीमान् धर्मसुतो नलो दशरथो रामो ययातिर्यदुः ।
इक्ष्वाकुश्च विभीषणश्च भरतश्चोत्तानपादध्रुवा-
वित्याद्या भुवि भूभुजश्च सततं कुर्वन्तु नो मङ्गलम् ॥ ४ ॥

[1] The first two verses are not found in the MSS., but they are traditionally recited in the beginning of the work.

श्रीमेरुर्हिमवांश्च मन्दरगिरिः कैलासशैलस्तथा
माहेन्द्रो मलयश्च विन्ध्यनिषधौ सिंहस्तथा रैवतः ।
सह्याद्रिर्वरगन्धमादनगिरिर्मैनाकगोमन्तका-
वित्याद्या भुवि भूधराः प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥ ५ ॥

गङ्गा सिन्धुसरस्वती च यमुना गोदावरी नर्मदा
कृष्णा भीमरथी च फल्गुसरयूः श्रीगण्डकी गोमती ।
कावेरी कपिला प्रयागविनतानेत्रावतीत्यादयो
नद्यः श्रीहरिपादपङ्कजभुवः कुर्वन्तु नो मङ्गलम् ॥ ६ ॥

वेदाश्चोपनिषद्गणाश्च विविधाः साङ्गाः पुराणान्विता
वेदान्ता अपि मन्त्रतन्त्रसहितास्तर्काः स्मृतीनां गणः ।
काव्यालंकृतिनीतिनाटकगणाः शब्दाश्च नानाविधाः
श्रीविष्णोर्गुणराशिकीर्तनपराः कुर्वन्तु नो मङ्गलम् ॥ ७ ॥

आदित्यादिनवग्रहाः शुभकरा मेषादयो राशयो
नक्षत्राणि सुयोगकाश्च तिथयस्तद्देवतास्तद्गणाः ।
मासाब्दा ऋतवस्तथैव दिवसाः संध्यास्तथा रात्रयः
सर्वे स्थावरजङ्गमाः प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥ ८ ॥

इत्येतद्वरमङ्गलाष्टकमिदं श्रीवादिराजेश्वरै-
राख्यातं जगतामभीष्टफलदं सर्वाशुभध्वंसनम् ।
माङ्गल्यादिशुभक्रियासु सततं संध्यासु वा यः पठेद्
धर्मार्थादिसमस्तवाञ्छितफलं प्राप्नोत्यसौ मानवः ॥ ९ ॥

इति श्रीवादिराजकृतौ मङ्गलाष्टकं संपूर्णम्

# INDEX OF STOTRA-S

# INDEX OF AUTHORS